॥ श्रीहयग्रीवाय नमः ॥

# जानकीपरिणयनाटकम् ।

## ॥ प्रथमोऽङ्कः

संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसा-
नुन्मार्ष्टुं व्रजसुन्दरी-कुचतटी-पाटीररेणूनिव ।

वन्दे पङ्कजनयनं फणिपतिशयनं परास्तदुर्नयनम् ।
कलिताखिलजगदवनं गुणगणभवनं रमेशमनुसवनम् ॥

वन्दे वेदान्तकान्तारमल्लीवल्लीमतल्लिकाम् ।
श्रीवत्सकौस्तुभरमाभूषितां देवतां पराम् ॥

रामभद्राह्वयमखिना कृतं सप्ताङ्कनाटकम् ।
श्रीजानकीपरिणयं व्याख्यास्यामि यथा मति ॥

तत्रभवान् श्रीरामभद्रदीक्षिताख्यकविः शृङ्गाररसप्रधानं प्रख्यातेति वृत्तम् । धीरोदात्तरामरूपनायकम् * धीरोद्धतरावणरूपप्रतिनायकम् † सप्ताङ्कम् ‡ जानकी-

---

महासत्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥

दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः ।
धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः ॥

पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ॥

उन्मीलन्मुरळीनिनादबहुला-मोदोपसीदद्गवी-
जिह्वालीढमळीकवल्लवशिशो पादाम्बुजं पातु वः ॥ १

परिणयाख्यं नाटकम् § आरभमाणस्तत्प्रत्यूहपरिपन्थिनः पूर्वरङ्गस्य $ प्रधानाङ्गभूतां * द्वादशपदां आशीरूपमङ्गलान्वितां नान्दीं + आदावुपनिबध्नाति— संसक्तानिति ॥ संसक्तान् वेदान्तपङ्कजवनीनित्यविहरणात् पादारविन्दे नित्यसंबद्धान् । उपनिषीदति श्रेयः अस्यामिति उपनिषत् वेदान्तः उपनिषदः इमे औपनिषदाः व्याहारएव वाक्यान्येव माध्वीरसाः मधुरसाः तान् । अनेन भगवा वेदान्तवेद्यत्वं उपनिषदाञ्च कर्मकाण्डात् सारभूतत्वञ्च व्यज्यते । अत्र रूपकालङ्कार तल्लक्षणन्तु काव्यप्रकाशे 'तद्रूपकमभेदोय उपमानोपमेययोः' इति । पातुमि आस्वादितुमिव । अत्रोत्प्रेक्षा । तल्लक्षणन्तु 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य स यत्' इति । व्रजसुन्दरीणां नवनवसुन्दरं किशोरं कृष्णं उदुह्य तदालिङ्गनसुख वक्षस्तटे विनिवेशयन्तीनां गोपिकानां कुचतटी स्तनप्रदेशः तत्र ये पाटीररेण अनुलिप्तचन्दनरजांसि । तान् । उन्मार्ष्टुमिव शोधयितुमिव । अत्राप्युत्प्रेक्षा उन्मीलता उत्पद्यमानेन मुरळ्याः भगवताः वादितस्य वेणुवाद्यस्य निनादेन ध्वनि जातः बहुलः अधिकः आमोदः हर्षः तेन उपसीदन्त्यः कृष्णसमीपमागच्छन्त्यः गावः धेनवः उन्मी...दोपसीदद्गव्यः उपसीदद्गवीत्यत्र 'गोरताद्धितलुकि' इत्यनेन टचि 'टिड्ढे'ति ङीप् । तासां जिह्वाभिः रसनाभिः लीढं आस्वादितम् । 'पशुर्वेत्ति- शिशुर्वेत्ति वेत्ति गानरसं फणी' इति शास्त्रसिद्धा गवां गानप्रियता । गानावर्जि-

§ साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतैः । पूर्वप्रकृतिरन्येषामाधिकारिकवृत्तवत् ।
वीरश्शृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥
बीजबिन्दु......फलागम उदाहृतः ॥ इति ॥

$ यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गस्सकीर्तितः ॥

* यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥

देवद्विजनृपादीनां......परिकीर्तिता ॥

अपि च ।

शम्याकस्य रजः प्रमृज्य चरणे दत्तो मया यावको
निर्मृज्य स्तनकुड्मले च भसितं पत्राङ्कुरो निर्मितः ।
स्वच्छन्दं विहरेति जल्पितगिरं साकूतमाळीजनं
दृष्ट्या केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ २ ॥

तानां गोपपादावलेहनञ्च गवां स्वभाव इति भावः । अलीकः मिथ्याभूतः वल्लवशिशुः गोपबालः श्रीकृष्णः तस्य । परमार्थतः उत्पत्त्यादिरहितस्य परमात्मनः रामकृष्णादिरूपधारणम्मायामात्रमिति गोपबालताया अलीकत्वमिति भावः। पादः अंबुजमिव पादांबुजम्। चरणारविन्दम् । वः युष्मान् । पातु रक्षतु । शार्दूलविक्रीडितवृत्तं 'सूर्याश्वैर्मसजस्तताःसगुरवःशार्दूलविक्रीडितम्' । इति तल्लक्षणात् । अत्र कथानायकः उपनिषत्प्रतिपाद्यः परमात्मैव लीलामात्रगृहीतरामरूप इति प्रतिनायकः रावणोपि विद्युज्जिह्वेन सह मायया रामरूपमलीकं धारिष्यति चेति काव्यार्थः औपनिषदः जिह्वालीकशब्दैर्मनाक्सूचितः ॥ १ ॥

अधिकादेव मङ्गलादधिकविघ्ननिरासम्मत्वा द्वितीयां नान्दीमाह—**शम्याकस्येति** ॥ (हे दाक्षायणि तव) चरणे पादयोः 'जात्येकवचनम्' (प्रणयकुपितायास्तव प्रसादनाय तव पदयुगे गाढप्रणाममाचरितवतश्शिवस्य मकुटतटात् सम्बद्धं) शम्याकस्य आरग्वधकुसुमस्य रजः परागम् । प्रमृज्य उन्मृष्टं कृत्वा । मया (सख्या) मया । (तत्र) यावकः लाक्षारसः दत्तः उपलिप्तः । किञ्च । तव स्तनकुड्मले कोरकसदृशकुचद्वन्द्वे । भसितं (निर्दयालिङ्गनेन शिवाङ्गात् सम्बद्धं) भस्म । निर्मृज्य प्रमृज्य । (तत्र) पत्राङ्कुरः मकरिकादिपत्रप्ररोहः । निर्मितः । विरचितः । तस्मात् । स्वच्छन्दं यथेच्छम् । सम्भोगाचिह्नस्य प्रमृष्टत्वात् निर्लज्जमित्यर्थः । विहर गुर्वादिसमक्षं सञ्चर । यद्वा अद्य कृतयावकविलेपनपत्राङ्कुररचनादिकं यथा विलुप्तं भवेत् तथा पत्या सह यथेच्छं क्रीड । इति । साकूतं पूर्वोक्तरीत्या साभिप्रायं यथा तथा । जल्पिता कथिता गीः वाक्यं येन तम् । आलीजनं सखीजनम् । कुटिलया वक्रया । दृष्ट्या केवलं दृशैव । न तु मनसा । आ ईषत् । ननु सम्यक् । घ्नती ताडयन्ती । आघ्नतीति नैकं पदं तथा सति 'आङो यमहनः' इति तङ् आघ्नानेति स्यात् । दक्षस्यापत्यं स्त्री दाक्षायणी शिवा । वः युष्मान् । पातु

(नान्द्यन्ते ।)

**सूत्रधारः**—(अग्रतोऽवलोक्य ।)

प्रवक्ता शास्त्राणां भरतमतसिद्धान्तनिपुण-
स्समुत्कर्षस्थानं सरसकवितायाः कवयताम् ।
प्रपन्नानां श्रेयः प्रगुणयति पुण्यैकसुलभ-
स्समाजस्साधूनामयमखिलवन्द्यश्च भवति ॥ ३ ॥

---

रक्षतु । शय्यागृहादागतवत्याः शिवायाः क्रीडाचिह्नमुदीक्ष्य शम्याकरजोभसितमार्जनेन रात्रौ शिवेन वन्दिता दृढमालिङ्गिता चाभूरिति विदग्धया सख्या वचनमन्तरा सूक्ष्मार्थस्य प्रकाशितत्वात् सूक्ष्मालङ्कारः । तल्लक्षणन्तु 'असंलक्षितसूक्ष्मार्थप्रकाशस्सूक्ष्मउच्यते' इति । अत्र कुटिलयेति पदेन रावणादिनिष्ठः अलीकरामादिरूपधारणरूपः कुटिलमार्गः काव्यार्थस्सूचितः । वृत्तं पूर्ववत् ॥ २ ॥

**नान्द्यन्त इति** ॥ नाटकादिरूपकाणामादौ विहितं पद्यं नान्दी । तस्याः अन्ते अवसाने । पूर्वरङ्गं प्रविष्टे सूत्रधारे पूर्वरङ्गप्रधानभूतां नान्दीं पठित्वा विनिर्गते सति अपरः सूत्रधारः प्रविश्य वदतीति शेषः । 'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य कश्चिदपरः काव्यमाख्यापयेन्नटः' इत्युक्तत्वात् । सूत्रधारलक्षणन्तु 'आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः । रङ्गप्रसाधनप्रौढस्सूत्रधार इहोच्यते' इति ॥

**प्रवक्तेति** ॥ शास्त्राणां ऋग्वेदादिसर्वविद्यास्थानानाम् । प्रवक्ता सम्यक्कथयिता । शास्त्राणामित्यत्र 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । भरतस्य नाट्यप्रवर्तकस्य भरतमुनेः । मतं अभिप्रायः तत्कृतशास्त्रमित्यर्थः । तस्य सिद्धान्तः राद्धान्तः । तत्र निपुणः समर्थः । प्रपन्नानां स्वोत्कर्षप्रख्यापकबिरुदादि प्राप्तये समागतानाम् । कवयतां कवीनाम् । सरसकवितायाः शृङ्गारादिरसभरितकवित्वस्य । समुत्कर्षस्थानं अत्युत्कृष्टता सूचकबिरुदादि प्राप्तिस्थलम् । पुण्येन सुकृतेन एकेनैव सुलभः प्राप्तुं शक्यः । साधूनां सताम् । अयम् । समाजः सङ्घः । सभा । श्रेयः । (पश्यतां) पुण्यं शुभं वा । प्रगुणयति प्रवर्धयति । अखिलैः सर्वैः वन्द्यः नमस्कार्यः यद्वा स्तुत्यश्च । भवति जायते । यद्वा सरसकवितायाः । समुत्कर्षस्य अतिशयस्य स्थानम् । उत्कृष्टसरसकविताश्रय इत्यर्थः । साधूनां समाजः । प्रप-

तदस्मै श्लाघनीयगुणभूयिष्ठाय कुलक्रमागतामभिनयविद्यां भरताचार्यमतानुसारेण साम्प्रतमुपहरन्नात्मानं कृतार्थयिष्ये ।

( आकाशे कर्णं दत्वा । ) भो भोः सामाजिकाः किं ब्रूथ ।

सरलो यत्र सन्दर्भस्सरसश्चार्थबन्धनम् ।
तन्नस्त्वयाभिनेतव्यं रूपकं नवनिर्मितम् ॥ ४ ॥

---

न्नानां आगतानाम् । कवयतां कवीनाम् । श्रेयः । तत्कृतकविताश्लाघनेन परमानन्दमित्यर्थः । प्रगुणयति वर्धयति । शिष्टं पूर्ववत् । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभलागश्शिखरिणी' इति तल्लक्षणात् । अत्र शास्त्राणां प्रवक्त्रेत्यादि विशेषणानां अखिलवन्द्यत्वसामर्थ्याभिप्रायगर्भत्वात्परिकरालङ्कारः । तल्लक्षणन्तु 'अलङ्कारः परिकरः साभिप्राये विशेषणे' इति ॥ ३ ॥

**तदिति** ॥ तत् तस्मात् कारणात् । श्लाघनीयैः प्रशस्यैः गुणैः शास्त्रप्रवक्तृत्वादिगुणैः । भूयिष्ठाय अत्यन्ताधिकाय । अस्मै साधुसमाजाय । कुलक्रमात् वंशपरम्परया आगतां प्राप्ताम् । अभिनयविद्यां नाट्यकलाम् । भरताचार्यस्य मतानुसारेण शास्त्रमनुसृत्येत्यर्थः । साम्प्रतं अद्य । उपहरन् उपहारीकुर्वन् । आत्मानं माम् कृतार्थयिष्ये कृतार्थं पूर्णप्रयोजनं करिष्ये ॥

**आकाश इति** ॥ 'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम्' इत्युक्तलक्षणाकाशभाषितविषये । **सामाजिकाः** : समाजं सभां समवयन्तीति सामाजिकाः सभ्याः । **ब्रूथ** वदथ ॥

**सरल इति** ॥ यत्र यस्मिन् रूपके । सन्दर्भः शब्दसङ्ग्रथनम् । सरलः अर्थकाठिन्यरहितः । अर्थस्य अभिधेयस्य वस्तुनो वा बन्धनं संयोजनञ्च सरस शृङ्गारादिरसभरितत्वेन सहृदयप्रीतिकरमित्यर्थः । तत् । नवनिर्मितं नूतनत्वेन रचितम् । रूप्यतेनेनेति रूपकं अभिनयप्रधानं रूपकशब्दवाच्यं नाटकम् । रूपकलक्षणन्तु 'रूप्यतेभिनयैर्यत्र वस्तु तद्रूपकं विदुः' इति । नः अस्माकं (पुरतः) त्वया । अभिनेतव्यं अभिनीय प्रदर्शयितव्यम् ॥ ४ ॥

इति आश्चर्यमाश्चर्यम् ।

मनोवृत्तिरियं तावद्यत्रानुषजति स्वयम् ।
समाजस्य नियोगोपि तत्रेति विधिनिर्मितम् ॥ ५ ॥

( नेपथ्याभिमुखमवलोक्य । ) आर्ये इतस्तावत् ।

( प्रविश्य नटी । )

**नटी**—[1]अय्य एसम्मि ।

**सूत्रधारः**—अपि श्रुतमाज्ञप्तमार्यमिश्राणाम् ।

**नटी**—( निश्वस्य । ) [2]सुदं सुदं । किन्दु तुह भइणीए पुत्तयस्स कलहंसस्स उव्वाहणिमित्तं ठाविदं मह कण्णअं कमळिणीं दुव्विणीदो महामाओ णाम कुसीळवो माआए कळहंसवेसं करिअ ओहारिस्सादित्ति

१. आर्यैषास्मि ।

२. श्रुतं श्रुतम् । किं तु तव भगिन्याः पुत्रस्य कलहंसस्योद्वाहनिमित्तं स्थापितां मम कन्यकां कमलिनीं दुर्विनीतो महामायो नाम कुशीलवो मायया कलहंसवेषं

**मन इति** ॥ इयं (मम) मनोवृत्तिः चित्तवृत्तिः । तावत् साकल्येन । स्वयं आत्मनैव । यत्र यस्मिन् रूपके । अनुषजति अनुषक्ता प्रविष्टा भवति । समाजस्य सभायाः । नियोगः शासनमपि । तत्र तस्मिन्रूपके । अनुषजतीत्येतत् । विधिना भाग्येन निर्मितं रचितम् ॥ ५ ॥

**नेपथ्येति** ॥ यवनिकान्तरितं कुशीलवकुटुम्बस्थानं नेपथ्यम् । तदुक्तम्—'कुशीलवकुटुम्बस्य स्थानं यदतिशोभनम् । वर्णिकाग्रहणस्थानं नेपथ्यमिति तद्विदुः' इति । तदभिमुखं यथा तथा । **आर्ये इति** ॥ 'वाच्यौ नटी सूत्रधारौ आर्यनाम्ना परस्परं' इत्युक्तत्वात्तथा सम्बुद्धिः । तावत् शीघ्रम् । इतः । अत्रागम्यतामित्यर्थः ॥

**प्रविश्य नटीति** ॥ नटी नर्तकी सूत्रधारभार्या । **अपीति** ॥ आर्यमिश्राणां अत्यन्तपूज्यानां सभ्यानाम् । आज्ञप्तं शासनम् । अपि श्रुतं आकर्णितं किम् । **निश्वस्य** निश्वासं कृत्वा । **भगिन्याः** स्वसुः । **उद्वाहनिमित्तं** विवाहकारणाय । **कुशीलवः** नटः । **व्याकुला** विह्वला । विचाराक्रान्तेत्यर्थः । **शैलूषः**

शुणीअदि । ता कमळिणीए कहं णिव्विरुखो मणोरहो हविस्सादित्ति वा- उळम्मि ।

**सूत्रधारः**—अलं विचारेण । मया खलु बृहद्बालो नाम शैलूषः कमलिनीकलहंसयोः **सङ्घटने** प्रतिभूः कृतः ।

अस्तु रूपं द्वयोस्तुल्यं तथापि कथयिष्यति ।
विद्यैव कलहंसन्तं तस्मादेष यथाधिकः ॥ ६ ॥

तत् प्रस्तूयतां परिषदाराधनायामुमेव वसन्तसमयमधिकृत्य सङ्गी- तकम् ।

---

कृत्वा अपहरिष्यतीति श्रूयते तस्मात् कमलिन्याः कथं निर्विघ्नो मनोरथो भवि- ष्यतीति व्याकुलास्मि ।

नटः । **सङ्घटने** संयोजने । **प्रतिभूः** लग्नकः । अत्र सूत्रधार नटी कलहंस कमलिनी महामाय बृहद्बलशब्दानां जनकतत्पत्नी राम सीता रावण विश्वामित्र- रूपार्थाः । व्यङ्ग्याः ॥

**अस्त्विति** ॥ द्वयोः कलहंसमहामाययोः 'रामरावणयोश्चेति ध्वन्यते' रूपं आकृतिः । तुल्यं सदृशम् । अस्तु । तथापि । एषः कलहंसः (रामश्च) तस्मात् महामायात् । (रावणाच्च) यथा । अधिकः श्रेष्ठः । तथा । विद्यैव अति- शयिताभिनयकलैव (शिवधनुर्भञ्जनक्षमा धनुर्विद्यैव) तं कलहंसं परमार्थकलहंसं (परमात्र्थरामञ्च) कथयिष्यति ॥ ६ ॥

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतु कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत्' । इत्युक्तेः रङ्गप्रसाधनानन्तरं भारतीं वृत्तिमाश्रयितुमुपक्रमते— **तत्प्रस्तूयतामिति** ।' भारती वृत्तिलक्षणन्तु 'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः । भेदैः प्ररोचनायुक्तैः वीथीप्रहसनामुखैः' इति । तत् तस्मात् । **परि-** तस्सीदन्त्यस्यामिति परिषत् सभा तस्याः आराधनाय पूजनाय । **अमुमेव** । **वसन्त-** **समयं** वसन्तकालम् । अधिकृत्य अवलंब्य । सङ्गीतकं प्रेक्षणकोपकारकं नृत्तगीता-

सम्प्रति हि ।

चञ्चूपुटेन विदळय्य नवं प्रवाळं
पार्श्वस्थितां प्रणयिनीमनुवर्तमानः ।
पक्षानिलैः परभृतोऽयमळीन्विधूय
कूजन्रसालशिखरैः कुरुते विहारम् ॥ ७ ॥

**नटी**—एंव्वं होदु किन्दु जारिसं आणत्तं अय्यमिस्साणं तारिसं रूवभं अण्णेसंदीए मए ण ळक्खिअदि ।

**सूत्रधारः**—( विहस्य ।) किं तद्विस्मृतं भवत्या । यदचिरनिर्मितं जानकीपरिणयं नाम रूपकमध्यापितासि ।

१. एवं भवतु किं तु यादृशमाज्ञप्तमार्यमिश्राणां तादृशं रूपकमन्वेषमाणया मया न लक्ष्यते ।

---

दिक 'सङ्गीतकं प्रेक्षणार्थे' इति यादवः । प्रस्तूयतां उपक्रम्यताम् । **चञ्च्विति** ॥ चञ्चूपुटेन संपुटसदृशत्रोट्या । नवं नूतनम् । प्रवालम् । आम्रकिसलयम् । विदलय्य खण्डयित्वा । पार्श्वे स्थिताम् । प्रणयिनीं प्रियाम् । अनुवर्तमानः अनुसरन् । पक्षानिलैः गरुद्वातैः । अलीन् भृङ्गान् । विधूय निस्सार्य । कूजन् अव्यक्तं शब्दायमानः। अयम् । परभृतः पिकः । रसालस्य आम्रस्य शिखरे अग्रे । विहारं विहरणं क्रीडाम् । कुरुते तनोति । स्वभावोक्त्यलङ्कारः । तल्लक्षणन्तु 'स्वाभोक्तिरसौ चारु यथावद्वस्तुवर्णनं' इति । वसन्ततिलकावृत्तं 'उक्ता वसन्ततिलका तभजा जगौ गः' इति तल्लक्षणात् ॥ ७ ॥

• **एवं भवत्विति** ॥ **अन्वेषमाणया** मार्गयन्त्या । **न लक्ष्यते** न ज्ञायते । **विहस्य** विशेषेण हासं कृत्वा । **अचिरनिर्मितं** नवनिर्मितम् । **जानकीति** ॥ जनकस्यापत्यं स्त्री जानकी । तस्याः परिणयः विवाहः तमधिकृत्य कृतं जानकी-

**नटी**—( सहर्षम् । ) [1]दिट्ठिआ दाणिं अणुबोहिदोम्हि अय्येण जस्स क्खु कव्वबंधस्स कई महाणुभावादो जण्णरामदिक्खिआदो उप्पण्णो अण्णवादो विअ चंदो रामभद्दमहींदो ।

**सूत्रधारः**—सम्यगनुसारितं भवत्या ।

यस्य स्तौति मतिं मनीषिसदसि श्रीनीलकण्ठाध्वरी
कोण्डाज्योतिषिकश्च यस्य कुरुते सम्मानमार्यैस्समम् ।
यत्रानुग्रहदृष्टिमर्पयति च श्रीबालकृष्णो गुरुः
सोयं दीव्यति चोक्कनाथमखिनामक्रीतदासः कविः ॥ ८ ॥

पश्येदानीम् ।

विदितः कविः प्रबन्धो रघुवीरचरित्रवर्णनपवित्रः ।
परिषद्रसोन्मुखी मम सर्वोयं भाग्यपरिणामः ॥ ९ ॥

---

१. दिष्ट्येदानीं अनुबोधितास्मि आर्येण । यस्य खलु काव्यबन्धस्य कविः महानुभावाद्यज्ञरामदीक्षितादुत्पन्नोऽर्णवादिव चन्द्रो रामभद्रमखीन्द्रः ।

---

परिणयम् । **अध्यापिता** पाठिता । **सहर्षमिति** ॥ दिष्ट्येत्यानन्दे । अनुबोधिता· ज्ञापिता । **अर्णवात्** समुद्रात् । **मखीन्द्रः** दीक्षितेन्द्रः ॥

प्रस्तुतकविकाव्यनटादिप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखीकरणाय भारतीवृत्त्यङ्गभूतां प्ररोचनां रचयति । **यस्येति** ॥ प्ररोचना लक्षणन्तु । प्रेक्षकाद्युन्मुखीकारः प्रस्तुतार्थप्रशंसया । प्ररोचना 'कविकाव्यनटादीनां प्रशंसा च प्ररोचना' इति । श्रीनीलकण्ठाध्वरी श्रीनीलकण्ठदीक्षितः । मनीषिसदसि विद्वत्सभायाम् । यस्य रामभद्रदीक्षितस्य । मतिं बुद्धिम् । स्तौति प्रशंसति । किञ्च कोण्डाज्यौतिषिकः तदाह्वयः कश्चित् प्रभुः । आर्यैः पूज्यैः समं सह । तुल्यं वा । यस्य । सम्माननम् । कुरुते । किञ्च । यत्र यस्मिन् । श्रीबालकृष्णः तदाह्वयः गुरुः आचार्यः । अनुग्रहदृष्टिं प्रसादसूचिकां दृशम् । अर्पयति निदधाति । चोक्कनाथमखिनां चोक्कनाथदीक्षितानाम् अक्रीतदासः । जामाता । सोयं कविः रामभद्रदीक्षिताह्वयः कविः दीव्यति । प्रकाशते 'शार्दूलविक्रीडितवृत्तम् ॥ ८ ॥

**विदित इति** ॥ कविः विदितः विख्यातः । प्रबन्धः ग्रन्थः रघुवीरस्य रामस्य चरित्रवर्णने पवित्रः शुद्धः । परिषत् सभा रसेन प्रीत्या उन्मुखी अस्मत्

तद्गीयतां तावत् ।

**नटी**—तहेत्ति गायति ।

दाणिं वउळमाळाए वेणिं खु इध्धिआ पसाहेइ ।
रमणस्स परिमळो जाए सुरदं दे ममं निवारेइ ॥ १० ॥

अवि अ ।

कीळारभसकिळंताओ पमदाओ गवक्ख पहणीदम् ।
सिसिरं समंबुसमणादो मळअसमीरं पसंसंदि ॥ ११ ॥

१. तथेति गायति ।
२. इदानीं वकुळमालया वेणीं खलु स्त्री प्रसाधयति ।
रमणस्य परिमळो यस्यास्सुरतां ते श्रमं निवारयति ॥
३. अपि च ।
४. क्रीडारभसक्लान्ताः प्रमदा गवाक्षपथनीतम् ।
शिशिरं श्रमाम्बुशमनान्मलयसमीरं प्रशंसन्ति ॥

प्रयोगालोकनाभिमुखी यद्वा रसोन्मुखी रासिक्यवती । अस्तीति यत् । अय सर्वः उक्तं अयमपि । विधेयप्राधान्यात् पुंस्त्वम् । मम । भाग्यस्य भागधेयस्य परिणामः परिपाकः । आर्यावृत्तम् । तल्लक्षणन्तु—'यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति ॥ ९ ॥

**इदानीमिति** ॥ इदानीं अद्य । स्त्री नारीजनः । (तया) वकुलमालया वकुलपुष्पस्रजा । वेणीं कबरीम् । प्रसाधयति भूषयति खलु यस्याः वकुलमालायाः । परिमलः गन्धः । सुरतान्ते क्रीडावसाने । रमणस्य कान्तस्य श्रमं आयासम् । निवारयति निवर्तयति ॥ १० ॥

**क्रीडेति** ॥ क्रीडारभसेन रतिवेगेन क्लान्ताः श्रान्ताः । प्रमदाः युवतयः । गवाक्षपथात् जालमार्गात् नीतं प्रापितम् । शिशिरं शीतलम् । मलयसमीरं मलयमारुतम् । श्रमांबुनः स्वेदस्य शमनात् निवर्तनाद्धेतोः । प्रशंसन्ति स्तुवन्ति ॥११॥

अण्णं विएदं ।

(इत्यर्धोक्ते भयवेपथुं नाटयति ।)

सूत्रधारः—

पश्यामि तव गानेन सभां चित्रार्पितामिव ।
गर्वितव्येऽपि किमिदमकाण्डे भीरुवेपसे ॥ १२ ॥

नटी—[2]किं ण पेक्खसि एसो रक्खसो एत्थ एव्व आअच्छइ । ता कुदो ण वेपम्मि ।

(इत्यन्यतो गच्छति ।)

सूत्रधारः—(दृष्ट्वा ।) आर्ये न भेतव्यम् । एष दशाननानुचरस्य सारणस्य भूमिकामादाय रङ्गतलं प्रविशति मे भ्रावः । तदावामप्यनन्तरकरणीयाय सज्जीभवाव । (इति निष्क्रान्तौ ।)

१. अन्यदप्येतत् ।
२. किन्न पश्यस्येष राक्षसोऽत्रैवागच्छति तस्मात् कुतो न वेपामि ।

**अर्धोक्ते** ॥ अर्धं उक्तस्य अर्धोक्तं तस्मिन् । भयवेपथुं भीत्या कम्पम् ।

**पश्यामीति** ॥ भीरु भयवति हे प्रिये । तव गानेन । सभाम् । चित्रे अर्पितामिव लिखितामिव (अत्रोत्प्रेक्षा) पश्यामि । एवञ्च सति । गर्वितव्ये त्वया गर्ववत्या भवितव्ये सति । अकाण्डे अकस्मात् । वेपसे कंपस इति यत् इदं किम् ॥

**न भेतव्यं** भयं त्वया त्यज्यतामित्यर्थः । **दशाननानुचरस्य** रावणकिंकरस्य । **भूमिकां** वेषम् । **रङ्गतलं** नाट्यस्थलम् । **भावः** श्यालः । **करणीयाय** कर्तव्यकार्याय । **सज्जीभवावः** सिद्धौ भवावः । **निष्क्रान्ताविति** ॥ 'पात्रञ्चाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्' इति शास्त्रादिति भावः ।

॥ **प्रस्तावना** ॥

( ततः प्रविशति सारणः । )

**सारणः**—(पुरोऽवलोक्य । सहर्षम् ।) अयं किल सुरासुरवन्दितचरणारविन्देन स्वामिना महाराजरावणेन मिथिलां प्रहितो वृत्तान्तवेदी शुकस्समापतति ।

( प्रविश्य शुकः । )

**शुकः**—कथमार्यस्सारणः ।

**सारणः**—अपि कुशलं तव नियोगस्य ।

**शुकः**—यावदेतत् कथयामि भवानिदानीं क्व प्रस्थितः ?

**सारणः**—आज्ञप्तोऽस्मि देवेन ।

**शुकः**—कथमिव ।

**सारणः**—यथा 'श्रूयते हि देवयजनसम्भवा त्रैलोक्यलावण्यसारमयी सीता नाम जनकस्य धर्मतस्तनया । तां किल भवता मदर्थमनुयोक्तव्यो जनकराज इति ।

---

**प्रस्तावनेति** ॥ प्रस्तूयते उपक्षिप्यते प्रबन्धार्थोऽनयेति प्रस्तावना । तल्लक्षणन्तु 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना वा तत्र स्युः कथोद्धातः प्रवृत्तकम् । प्रयोगातिशयश्चाथ वीथ्यङ्गानि त्रयोदश' इति । अत्र एष दशाननेत्युपक्षेपात् सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः' इति ॥

वस्तुप्रपञ्चनार्थं 'आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः' इत्युक्तत्वाद्विष्कम्भकमारचयति । **ततः प्रविशतीत्यादिना** । विष्कम्भलक्षणन्तु 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः । एकानेककृतश्शुद्धस्सङ्कीर्णो नीचमध्यमैः' इति ॥ **प्रहितः** प्रेषितः । **वृत्तान्तवेदी** जनकादिवृत्तान्तबोधनशीलः । **समापतति** आगच्छति । **अपि कुशलं** भद्रं किम् । **नियोगस्य** आज्ञायाः । **यावत्** साकल्येन—**यथेति** ॥ देवयजनसम्भवा । यज्ञार्थं कृष्टात् क्षेत्रात् सम्भूता । त्रयो लोका एव त्रैलोक्यं तस्य यत् लावण्यं 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' ॥

**शुकः**—अहो तादृशस्यापि देवस्य मानुषेष्वयमपूर्वो विनयारम्भः।

अथवा ।

पांसुक्रीडा भवति हि शिशोः केकसीसम्भवस्य
स्वैरं यस्य त्रिदशतरुणीबृन्दबन्दीग्रहोपि ।
सोऽयं सीताप्रसभहरणं यन्न चित्ते विधत्ते
शैवप्रीतिस्तदिह जनके नूनमेषावरुन्धे ॥ १३ ॥

**सारणः**—अथकिम् ।

**शुकः**—श्रूयतामार्य तावदिहत्या प्रवृत्तिः ।

**सारणः**—कथय ।

**शुकः**—

सा कन्या भुवनैकमङ्गळगुणे रामेऽनुरक्ता स्वयं
श्रुत्वा तज्जनकेन चाप्युपगतं वंशप्रतिष्ठाविदा ।

इत्युक्तः कान्तिविशेषः । तस्य सारः श्रेष्ठांशः तत्प्रचुरा । **धर्मतः** पोषणादिधर्मेण । तनया पुत्री । अनुयोक्तव्यः प्रष्टव्यः ॥ **अहो** आश्चर्यं ॥

**पांस्विति** ॥ केकसीसम्भवस्य केकसीपुत्रस्य । शिशोः बालस्य । यस्य रावणस्य । स्वैरं यथेच्छम् । त्रिदशतरुणीनां देवयुवतीनां बृन्दस्य समूहस्य । बन्द्यां कारायां ग्रहः निरोधनमपि । पांसुक्रीडा रेणुविहारः। भवति हि जायते किल (भूत-प्रयोगश्चेद्वरीयान्) सोयं रावणः । सीतायाः प्रसभहरणं बलादपहरणम् । यत् यस्मात् कारणात् । चित्ते मनसि । न विधत्ते न करोति । तत् तस्मात् कारणात् । एष रावणः । इह अस्मिन् । जनके । (शिवः भक्तिर्भजनीयोस्येति) शैवः शिव-भक्तः इति प्रीतिं प्रेम । अवरुन्धे अवलम्बत इत्यर्थः । मन्दाक्रान्तावृत्तं 'मन्दाक्रान्ता जलधिषडगैः म्भौ नतौ तोगुरू चेत्' इति तल्लक्षणात् ॥ १३ ॥

**अथकिं** अर्थाकिमित्यङ्गीकारे । **तावत्** साकल्येन । **इहत्या** इह भवा । प्रवृत्तिः वृत्तान्तः । **सा कन्येति** ॥ कन्या सा सीता । भुवनेषु जगत्सु एके मुख्याः

किञ्चानेन वरोपसङ्ग्रहविधौ भीतेन लङ्कापतेः
सस्वर्गप्रतिसर्गसाहसनिधिर्योगी कृतो लग्नकः ॥ १४ ॥

**सारणः**—( सामर्षस्मितम् । ) अहो समयस्य वैषम्यम् । यदस्मत्स्वामिन्यार्जवं विदेहाधिपतौ च कौटिल्यम् । ततस्ततः ।

**शुकः**—प्रस्थितश्च स मुनिरात्मनो यज्ञमपदिश्य सपुत्रदारं दशरथमुपनिमन्त्रयितुम् । जनकराजोपि प्रथमं निमन्त्रितः स्वानुजं कुशध्वजं मिथिलायामवस्थाप्य यज्ञदर्शनव्याजेन कन्यासहितः कौशिकाश्रमपदं गतः ।

**सारणः**—तदनेन तीर्थेन सीतारामयोः पाणिग्रहणं निवर्तयिष्यत इति मन्ये । भवतु यथा तथा वा । राजनिदेशमाचरितुं कौशिकाश्रममेव प्रतिगमिष्यामि । यत्र स जनकः प्रतिवसति ।

**शुकः**—प्रतिगमने किं प्रयोजनम् ।

मङ्गलगुणाः कल्याणगुणाः यस्मिंस्तथाभूते । रामे स्वयं केनाप्यप्रेरितैव । अनुरक्ता अनुरागवर्तीति यत् । तत् । श्रुत्वा । वंशस्य रघुकुलस्य प्रतिष्ठां ख्याति वेत्तीति तथोक्तस्तेन । जनकेन च । अभ्युपगतम् । अङ्गीकृतम् । किञ्च । लङ्कापतेः रावणात् । भीतेन । अनेन जनकेन । स्वर्गस्य देवलोकस्य प्रतिसर्गः प्रतिसृष्टिरेव ( सहारा भवं ) साहसं दुष्करकर्म तस्य निधिः आश्रयः । सः योगी प्रसिद्धः विश्वामित्रमुनिः वरस्य जामातुः उपसङ्ग्रहविधौ उपार्जनकर्मणि । लग्नकः प्रतिभूः । कृतः रचितः ॥ शार्दू..वृत्तम् ॥ १४ ॥

**सामर्षस्मितं** सकोपहासम् । समयस्य कालस्य । वैषम्यं प्रातिकूल्यम् । अस्मत्स्वामिनि अस्मत्प्रभौ रावणे । आर्जवं (बलापहरणं विहाय कन्याप्रार्थनरूप) ऋजुत्वम् । विदेहाधिपतौ जनके । कौटिल्यं (रावणाय कन्यामदत्वा अन्यस्मै कन्यादानं यत् तद्रूपं) वक्रत्वम् । **अपदिश्य** व्याजीकृत्य । **उपनिमन्त्रयितुं** आह्वातुम् । **निमन्त्रितः** आहूतः । **अवस्थाप्य** स्थापयित्वा । **पदं** स्थानम् । **तीर्थेन** अभ्युपायेन । पाणिग्रहणं विवाहम् । निवर्तयिष्यते (जनकः) पूरयिष्यति ॥

**सारणः**—मामैवम्।

वंशे धातुर्महति जननं विश्रुता श्रीसमृद्धि-
यस्यान्यत्किं शतमखशिरश्शेखरं शासनं च।
कन्यार्थी चेदयमभिमतं कस्य नेदम्

**शुकः**—तथापि प्रत्याख्यातुं प्रभवति निजापत्यचित्तानुरोधात्॥

**सारणः**—(क्षणं विचिन्त्य।)

माभूदवेक्षितममुष्य कुलं समृद्धं
किं न श्रुतानि चरितान्यपि विश्वजेतुः।
देवं विहाय दशकण्ठमकुण्ठसत्वं
सीता कथं रतिमधत्तमनुष्यपोते॥ १६॥

**वंश इति**॥ यस्य रावणस्य जननम्। महति पूज्ये धातुः पुलस्त्यप्रजापतेः। वंशे कुले। अभूत्। यस्य श्रियाः लक्ष्म्याः समृद्धिः आधिक्यम्। विश्रुता विख्याता। किञ्च अन्यत् उक्ताद्वक्ष्यमाणाच्च इतरत् किं तस्य उत्कर्षनिमित्तं अपेक्ष्यम्। यस्य शासनं आज्ञा च। शतमखस्य इन्द्रस्य शिरसः शेखरं भूषणं शिरसा धार्यमित्यर्थः। सोयं रावणः कन्यार्थी चेत्। इदं रावणकर्तृककन्याप्रार्थनम्। कस्य अभिमतं सम्मतं न। तथापि सम्मतत्वेपि (जनकः) निजापत्यस्य स्वकन्यायाः चित्तस्य मनसः अनुरोधात् अनुवर्तनात्। प्रत्याख्यातुं रावणप्रार्थनां निराकर्तुम्। प्रभवति शक्नोति। मन्दाक्रान्तावृत्तम्॥ १५॥

**माभूदिति**॥ समृद्धं अत्यन्तमहिमम्। अमुष्य रावणस्य कुलं वंशः। अवेक्षितं (जनकेन सीतया वा) आलोचितं माभूत् मास्तु। विश्वजेतुः सर्वजगज्जयिनः रावणस्य चरितानि चरित्राण्यपि न श्रुतानि किम्। श्रुतान्येव स्युरिति भावः। तथा सति। सीता। अकुण्ठसत्वं अप्रतिहतबलम्। देवं दशकण्ठम्। विहाय। मनुष्यपोते मनुष्यशिशौ रामे। कथं रतिं अनुरागम्। अधत्त दधौ। वसन्ततिलका वृत्तम्॥ १६॥

(दीर्घं निश्वस्य ।) तदिह विघटनीयः प्रथमं विदेहराजकन्यायाः दाशरथौ स्नेहानुबन्धः । घटनीयश्च पुनरस्मत्स्वामिनि ।

शुकः—न हीदं सम्भाव्यते ।

**सारणः**—तत्कइवाभ्युपायस्सीताधिगमे भवतीति । (चिन्तां नाटयन् । सहर्षम् ।)

मायारामवपुर्धरेण विभुना सा विप्रलभ्याऽधुना
यद्गृह्णन्ति हठेन वा कुहनया वा राक्षसास्सुन्दरीः ।
ऐश्वर्यं परिणेतुरूर्जितमथो दृष्ट्वा प्रहृष्टां सुतां
गृह्णन् प्रीतिमसौ गमिष्यति वरे माहेश्वरे मैथिलः ॥१७॥

अतः कौशिकवेषेण विद्युज्जिह्वेन रामवेषो राजा जनकसमीपं प्रवेशयितव्यः ।

---

**विघटनीयः** भेद्यः । **स्नेहानुबन्धः** अनुरागानुषङ्गः । **घटनीयः** उत्पाद्यः **न सम्भाव्यते** नाशंक्यते । **तत्कइति** ॥ इवेति वाक्यालंकारे । अभ्युपायः साधनम् । सीताधिगमे सीताप्राप्तौ ॥

**मायेति** ॥ यत यस्मात् कारणात् । राक्षसाः । हठेन बलात्कारेण वा । कुहनया वञ्चनया वा । सुन्दरीः रम्याः कन्याः गृह्णन्ति अपहरन्ति । 'हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात् । प्रसह्यकन्याहरणं राक्षसो विधिरुच्यते ' इति । राक्षसविवाहं प्रति मनूक्तेरिति भावः । तस्मात् । अधुना अद्य । मायारामवपुर्धरेण अलीकरामशरीरधारिणा । विभुना अस्मत्स्वामिना रावणेन । सा सीता विप्रलभ्या वञ्चनीया । अथो अथ परिणेतुः पत्युः रावणस्य । ऊर्जितं शाश्वतम् । ऐश्वर्यं त्रिलोकाधिपत्यम् । दृष्ट्वा । प्रहृष्टाम् । तुष्टाम् । सुतां दुहितरं सीताम् । गृह्णन् अङ्गीकुर्वन् (न तु राक्षसपरिगृहीतेत्युत्सृजन् ) असौ । मैथिलः जनकः । माहेश्वरे शिवभक्ते वरे जामातरि रावणे । प्रीतिं गमिष्यति । शार्दूलविक्रीडितवृत्तम् ॥ १७ ॥

**शुकः**—आर्य साधु मन्त्रितम् । अपि चेदानीं अयोध्यां प्रतिगतस्य त्रिशङ्कुयाजिनः क्षत्रियब्राह्मणस्य प्रत्यावृत्तिर्विघटयितव्या ।

**सारणः**—वत्स, युक्तमुक्तं भवता । तच्च पुनरार्या ताटकामन्तरेण कश्शक्नोति साधयितुम् ।

यतः ।

बलं नागसहस्रस्य धारयन्ती निशाचरी ।
निगूढा प्रहरेदेव व्यक्तापि स्त्रीति मोक्ष्यते ॥ १८ ॥

तदत्र भवान् ताटकां नियुङ्क्तां अहं तु देवाय वृत्तान्तमिमं निवेदयिष्यामि । (इति निष्क्रान्तः । )

**सारणः**—(पुरोऽवलोक्य सविस्मयम् ।) कथं स्मृतमात्रसन्निहिता सेयमार्या ताटका ।

यैषा

आन्त्राकल्पवलत्पयोधरभरव्याविद्धमेघच्छटा
सृक्कस्थामिषगृध्नुगृध्रगरुदास्फालोच्चलन्मूर्धजा ।

**साधु** सम्यक् । त्रिशंकुयाजिनः त्रिशङ्कुं गुरुशापाधिगतचण्डालभावं याजितवतः । क्षत्रियब्राह्मणस्य जात्या क्षत्रियस्य तपसा अधिगतब्राह्मण्यस्य विश्वामित्रस्य । प्रत्यावृत्तिः विघटयितव्या प्रत्यागमनं विभेद्यम् । **ताटकामन्तरेण** ताटकां विहाय । 'अन्तरान्तरेण युक्ते' इति द्वितीया । **बलमिति** ॥ नागानां गजानां सहस्रस्य । बलम् । धारयन्ती निशाचरी राक्षसी ताटका । निगूढा प्रच्छन्ना सती । (कौशिकादीन्) प्रहरेत् संहरेदेव । व्यक्तापि सन्मुखे स्थितापि । स्त्रीति नारी न वध्येति । मोक्ष्यते लक्ष्यते ॥ १८ ॥

**नियुङ्क्तां** आदिशतु । **स्मृतेति** । स्मृतमात्रेण स्मरणमात्रेण सन्निहिता समीपमागता ॥

**आन्त्रेति** ॥ आन्त्रैः पुरीतदाख्यसिराविशेषैः (कल्पितः) आकल्पः भूषणम् । तेन वलतोः सञ्चलतोः पयोधरयोः कुचयोः भरेण भारेण व्याविद्धा ताडिता मेघा-

व्यादायाननमट्टहासविकटं दूरेण तारापथा-
त्रस्यत्सिद्धपुरंध्रिबृन्दरभसोन्मुक्तादुपाक्रामति ॥ १९ ॥

( ततः प्रविशति यथानिर्दिष्टा ताटका । )

**सारणः**—( उपसृत्य । ) आर्ये प्रणमामि ।

**ताटका**—कहं सारणो । ता दीहाऊ होहि ।

**सारणः**—क्व प्रस्थितासि ।

**ताटका**—कोसिअमहेसिणो दाआदेण परसुरामेण माहेसुरेण पत्थिदस्स माहेसुरस्स महाराअस्स वअणादो जण्णविग्घो ण कादव्वो त्ति पुत्तअं मारिअं मंतिअदुं ।

**सारणः**—( विहस्य । ) अहो क्षत्रबन्धोः गाधिसूनोरुपायज्ञता । आर्ये यज्ञ इति व्यपदिश्य सीतारामयोः पाणिग्रहणं निर्वर्तयितुं जनककौशिकयोरयमारम्भः ।

---

१. कथ सारणः । तस्माद्दीर्घायुर्भव ।

२. कौशिकमहर्षेः दायादेन परशुरामेण माहेश्वरेण प्रार्थितस्य माहेश्वरस्य महाराजस्य वचनात् यज्ञविघ्नो न कर्तव्य इति पुत्रं मारीचं मन्त्रयितुम् ।

---

नां छटा तति: यया तथाभूता । स्रवस्थामिषगृध्नूनां तालुदेशस्थितमांसकामानां गृध्राणां काकानां गरुतां पक्षाणां आस्फालनेन ताडनेन उच्चलन्तः अधिकज्वलन्तः मूर्धजाः कचाः यस्यास्तथाभूता । या एषा ताटका । अट्टहासेन रौद्ररसजातहासेन विकटं भयङ्करम् । आननं मुखम् । दूरेण अतिदूरम् । व्यादाय विवृतं कृत्वा । त्रस्यन्तीनां बिभ्यतीनां सिद्धपुरन्ध्रीणां सिद्धाङ्गनानां बृन्देन सङ्घेन रभसात् वेगात् उन्मुक्तात् त्यक्तात् । तारापथात् गगनात् । उपाक्रामति समीपमागच्छति । सेयमार्या ताटकेति पूर्वेण योज्यम् । शार्दू...वृत्तम् ॥ १९ ॥

**दायादेन** भागिनेयपुत्रेण । **मन्त्रयितुं** कथयितुम् । **अहो इति** ॥ क्षत्रबन्धोः जन्मना क्षत्रियबान्धवस्य । गाधिसूनोः विश्वामित्रस्य । उपायज्ञता कार्यसाधनबोद्धृत्वम् । **व्यपदिश्य** व्याजेन व्यवहृत्य निर्वर्तयितुं साधयितुम् ॥

**ताटका**—[1]कीरिसो ववदेसो ।

**सारणः**—महाराजस्तामर्थयिष्यतीति ।

**ताटका**—[2]जइ एव्वं अहं एव्व महाराअणिमित्तं जाणइं ओहरिस्सं ।

**सारणः**—मामैवम् ।

बलादपहृता सीता नानुरज्येद्दशानने ।
शैवप्रीत्या च जनके तच्च नानुमतं विभोः ॥ २० ॥

किञ्च ।

हठात्कृताया रम्भायाश्शापेन हिमवत्तटे ।
अनिच्छन्त्या बलात्कारो न शक्यो रक्षसां प्रभोः ॥ २१ ॥

किं तु कर्णे एवमिति कथयति ।

**ताटका**—( सहर्षम् । ) [3]तादं दाणिं णिउणं तुए मंतिदं ।

[4]एव्वं अ दसकण्ठस्स हथ्थे सीदा पडिस्सदि ।
विप्पलंभप्पउत्ताणं विप्पलंभोवि जुज्जइ ॥ २२ ॥

---

१. कीदृशो व्यपदेशः ।

२. यद्येवं अहमेव महाराजनिमित्तं जानकीमपहरिष्यामि ।

३. तातेदानीं निपुणं त्वया मन्त्रितम् ।

४. एव च दशकण्ठस्य हस्ते सीता पतिष्यति ।
विप्रलम्भप्रवृत्तानां विप्रलम्भोऽपि युज्यते ॥

---

**बलादिति** ॥ बलात् अपहृता सीता दशानने रावणे । नानुरज्येत् नानुरक्ता भवेत् । तच्च बलात्सीतापहरणञ्च । जनके शैवः शिवभक्त इति प्रीत्या । विभोः अस्मत्स्वामिनः रावणस्य नानुमतं न सम्मतम् ॥ २० ॥

**हठादिति** ॥ हिमवतः तटे प्रदेशे । हठात्कृतायाः बलात्कारेण गृहीतायाः रम्भायाः शापेन स्वासक्तरम्भाधर्षणरुषितनलकूबरकृतेन । "अनिच्छन्त्याः बलात्कारात् रावणस्य शिरः पतेत्" इत्येवंरूपेण । रक्षसां प्रभोः रावणस्य । अनिच्छन्त्याः बलात्कारः न शक्यः ॥ २१ ॥

**कर्णे एवमिति** ॥ कौशिकवेषेणेत्यादि पूर्वोक्तमित्यर्थः । तात वत्स । **एवमिति** ॥ विप्रलम्भः युज्यते वञ्चनं युक्तं भवति । शेषं सुगमम् ॥ २२ ॥

अहंवि मज्झेमग्गं णत्तं सुहप्पसुत्तं साणुअरं तं महेसिं मारिअं करिअ वावादइस्सं तुमंवि लंकाउरं गदुअ महाराअं पट्ठावेहि ।

(इति निष्क्रान्ता ।)

**सारणः—**

ताटकायास्सहायार्थं जयस्यानियमादितः ।
मायी च तत्र मारीचः सानुगः प्रेषयिष्यते ॥ २१ ॥

(इति निष्क्रान्तः ।)

**मिश्रविष्कम्भः ।**

(ततः प्रविशति विद्युज्जिह्वेन सारणेन सह दशाननः ।)

**दशाननः—**

द्रष्टव्या जनकात्मजेति कुतुकं धत्ते दृशां विंशति-
र्बाहूनामपि सा तथैव रभसादालिङ्गितव्येति मे ।

---

१. अहमपि मध्येमार्गं नक्तं सुखप्रसुप्तं सानुचरं तं महर्षिं मारीचं कृत्वा व्यापादयिष्ये । त्वमपि लङ्कापुरं गत्वा महाराजं प्रस्थापय ।

---

**अहमपीति** ॥ मध्येमार्गं मार्गमध्ये । नक्तं रात्रौ । मारीचं कृत्वा मारीचं यं कृत्वा । व्यापादयिष्ये मारयिष्ये । **ताटकाया इति** ॥ इतः अत्र ताटकायां जयस्य अनियमात् अनिश्चयात् । ताटकायाः सहायार्थम् । मायी मायावान् सानुगः सानुचरश्च मारीचः तत्र विश्वामित्रागमनमार्गे । प्रेषयिष्यते मयेति शेषः ॥

इदानीमङ्कमारभते । **ततः प्रविशतीत्यादिना** ॥ अङ्कलक्षणन्तु—'प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः । अङ्को नानाप्रकारार्थं संविधानरसाश्रयः ॥' इति । **द्रष्टव्येति** ॥ मम दृशां नयनानाम् । विंशतिः । मया जनकात्मजा द्रष्टव्या इति हेतोः । कुतुकं कुतूहलम् । धत्ते वहति । बाहूनामपि । सा विंशतिः । मे मया । जनकात्मजं रभसात् वेगात् सन्तोषाद्वा । आलिङ्गितव्या इति हेतोः ।

किं तस्या हृदयाय नाभिरुचितं रूपं धिगेतादृशं

हा कष्टं नृपशोरपि स्वयमतो धर्तव्यमास्ते वपुः ॥ २४ ॥

अपि च।

सीरध्वजे सहजमप्रकटय्य रौक्ष्यं माहेश्वरप्रणयपालनमात्रतो मे।

कन्यानिमित्तमनुकर्तुमनर्हवेषं मानः कथं बत सह त्रपयोज्झितव्य.॥

**सारणः**—महाराज मानहानिरित्यलमावेगेन।

दिक्पालैरपि यः क्षुण्णो दमयन्तीस्वयंवरे।

अपूर्वः किमयं पन्था येन त्वमपि यास्यसि ॥ २६ ॥

---

तथैव कुतुकं धत्ते। एतादृशं मम रूपं आकृतिः। तस्याः सीतायाः। हृदयाय। किं कुतः। न अभिरुचितं न रोचते स्म। तस्मात् इदं रूपम्। धिक् निन्द्यमित्यर्थः अतः मद्रूपस्यानभीष्टत्वात्। स्वयं मया। नृपशोः नरपशोः रामस्यापि। वपुः शरीरं धर्तव्यं आस्ते। भवति। हा कष्टं अत्यन्तकष्टम्। काव्यलिङ्गं तुल्ययोगिता चालङ्कारौ। तुल्ययोगितालक्षणन्तु—'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

**सीरेति** ॥ सीरध्वजे जनके। माहेश्वरः शिवभक्तः इति प्रणयः प्रीतिः। तस्य पालनमात्रतः। रक्षणमात्रात्। सहजं सहोत्पन्नम्। रौक्ष्यं पारुष्यम्। अप्रकटय्य अदर्शयित्वा। अन्यानिमित्तं सीताहेतोः। अनर्हं अयोग्यं वेषं रामवेषम्। अनुकर्तुं विडम्बयितुम्। मे मया। कथं त्रपया लज्जया सह। मानः चित्तसमुन्नतिः। उज्झितव्यः त्यक्तव्यः। बत कष्टम्। वसन्ततिलका वृत्तम् ॥ २५ ॥

**मानहानिः** मानत्यागः। **आवेगेन** भीत्या ॥

**दिगिति** ॥ यः पन्था. दमयन्तीस्वयंवरे। दिक्पालैः इन्द्रादिभिरपि। क्षुण्णः अभ्यस्तः। तैस्तत्र नलवेषस्य धृतत्वादिति भावः। येन पथा त्वमपि यास्यसि गमिष्यसि। अयं पन्थाः मार्गः। अपूर्वः किम्। नापूर्वइत्यर्थः ॥ २६ ॥

**विद्यु.**—( सपुलकोद्भेदम् । स्वगतम् । ) दिक्पालैरिव दमयन्ती राज्ञा प्रार्थितापि न लभ्येत जानकी ।

( प्रकाशम् । )

रघुशिशुपरतन्त्रं मेदिनीकन्यकाया
स्त्वयि हृदयमुपायैश्शक्यते नोपनेतुम् ।
तव च जनकराजे तादृशं प्रेम सख्यौ
तदयमृजुरमुष्यास्सङ्ग्रहे पश्य पन्थाः ॥ २७ ॥

**दशाननः**—भवत्वेवं तावत् । अनतिलङ्घनीयं मया वो वचनम् । सारण तदेहि पुष्पकमुपानय प्रस्थापनाय ।

**सारणः**—यदाज्ञापयति देवः। (इति निष्क्रम्य । पुष्पकेण सह प्रविश्य।) महाराज विमानमिदमुपनीतम् ।

**विद्यु.**—

एतद्दिग्विजयैकसाक्षि भवतस्त्रैलोक्यबन्दीगुरु
श्वासोद्भेदविभिन्नवर्णवलभीपर्यन्तमुक्तासरम् ।

---

**सपुलकोद्भेदं** सीताऽलाभनिर्धारणजनितोद्वेगसम्भूतरोमाञ्चप्ररोहसहितं यथा तथा । **स्वगतं** 'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतम्मतं' इति दशरूपके ॥

**रघ्विति** ॥ रघुशिशुपरतन्त्रं रामासक्तम् । मेदिनीकन्यकायाः । सीतायाः । हृदयं चित्तम् । उपायैः सामादिभिः । त्वयि । उपनेतुं प्रापयितुं आसक्तं कर्तुमित्यर्थः । न शक्यते । किञ्च । तव । सख्यौ मित्रे । जनकराजे । तादृशम् । तथाविधम् । प्रेम प्रीतिरस्ति । प्रेमहानिकरत्वाद्बलादाहरणमप्ययुक्तमिति भावः । तत् तस्मात्कारणात् । अमुष्याः सीतायाः सङ्ग्रहे ग्रहणे । अयं पन्थाः ( रामवेषग्रहणपुरस्सरकार्यसाधनरूपः ) मार्गः । ऋजुः अकुटिलः । पश्य आलोचय । मालिनीवृत्तं 'ननमयययुतेयम्मालिनीभोगिलोकैः' इति लक्षणात् ॥ २७ ॥

**एतदिति** ॥ भवतः तव । दिग्विजये एक अद्वितीयं साक्षि साक्षाद्द्रष्टृ । त्रैलोक्यबन्दीनां कारागृहे निवेशनीयानां जगत्त्रयसुन्दरीणाम् । गुरवः अधिकाः

अस्पृष्टं निजपुष्पगन्धमिळनत्रासान्नभोवायुना
मायामेघनिगूढमम्बरतलादभ्येति यानं पुरः ॥ २८ ॥

**दशाननः**—( दृष्ट्वा सामर्षं विहस्य । ) अयि मन्ये दुर्बल इव चोर-वृत्तिमनुरुन्धन्नधुना दशकन्धरोयं अपूर्वइति मयि विस्रम्भादिव स्वय-मप्यपूर्वतामवलम्बते विमानमिदम् ।

तथाहि ।

अदूरविनिवर्तितग्रहविमानमप्राञ्जलि
प्रणम्रसुरमस्तुतिप्रवणसिद्धविद्याधरम् ।
अदृप्तरजनीचरस्तनितमिश्रदिव्याङ्गना
करप्रहतडिण्डिमध्वनि यदेतदास्ते पुरः ॥ २९ ॥

श्वासाः तेषां उद्भेदेन उत्पत्त्या विभिन्नः प्रकारान्तरं गतः वर्णः धवळवर्णः येषां तथाभूताः । वलभ्याः गोपानस्याः पर्यन्तेषु प्रान्तेषु स्थिताः मुक्तास्रजः मौक्तिकस्रजः यस्मिंस्तत् । निजः स्वीयः ( पुष्पकसंबन्धी ) पुष्पगन्धः अप्राकृतकुसुमगन्धः तेन मिळनं सङ्गमनं तस्मात् त्रासात् भयात् । यद्वा निजः वायुसम्बन्धी पुष्पगन्धः प्राकृतसुमगन्धः तेन मिळन रावणाधिष्ठानभूतस्य अप्राकृतगन्धाश्रयस्य पुष्पकस्य सङ्गः ततस्त्रासात् । नभोवायुना आकाशवातेन । अस्पृष्टम् । मायामेघेन निजमायारचितमेघेन निगूढं संवृतम् । एतत् यानं पुष्पकम् । अम्बरतलात् गगनतलात् । पुरः । अग्रे अभ्येति आगच्छति । गगनस्थितस्य गगनवायुसम्बन्धेप्यसम्बन्धकल्पनादसम्बन्धातिशयोक्तिः । तल्लक्षणन्तु—'योगेप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्यते' इति । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

**दृष्ट्वेति** ॥ सामर्षं सकोपम् । अनुरुन्धन् आश्रयन् । विस्रम्भात् विश्वासात् । अवलम्बते आश्रयति । **अदूरेति** ॥ यत् यस्मात् कारणात् । पुरः अग्रे । एतत् विमानम् । न दूरे विनिवर्तितानि ग्रहाणां सूर्यादीनां विमानानि यस्य तथाभूतम् । न प्राञ्जलि प्रबद्धाञ्जलि यथा तथा प्रणम्राः वन्दमानाः सुराः देवाः यस्य तथाभूतम् । न स्तुतिप्रवणाः स्तोत्रायत्ताः सिद्धाः विद्याधराश्च यस्य तथाभूतं न दृप्तानां गर्वितानां रजनीचराणां राक्षसानां स्तनितेन गर्जितेन मिश्रः युक्तः दिव्या-

विद्यु—महाराज मामैवम् । अभिमतरूपपरिग्रहवशीकृतायास्सीताया निर्वृत्ते करग्रहणमङ्गलमहोत्सवे नन्दिते च जगदीश्वरवरलाभेन जनकराजे भवत्प्रभावपरितोषितया कन्यया सहैव प्रतिनिवृत्ते च महाराजे भविष्यति पुनस्तादृशमेव विमानमिदं पुष्पकम् । तदारुह्यतां देवेन ।

दशाननः—( विद्युज्जिह्वेन सह विमानारोहणं नाटयति । )

सारणः—पश्य महाराज पश्य ।

अन्तःप्रापितकूर्मनक्रमकरो नाम्भोनिधिः स्पन्दते
धत्ते मण्डलमेष रत्नमुकुरच्छायं रुचीनां पतिः ।
वातश्चन्दनवल्लरीकिसलयस्पन्दावधिर्दृश्यते
लङ्कायाश्चलिते बहिष्पदमपि स्वामिन् विमाने तव ॥ ३० ॥

---

ङ्गनानां देवस्त्रीणां करैः प्रहतानां ताडितानां डिण्डिमानां वाद्यविशेषाणां ध्वनिः शब्दः यस्मिंस्तथाभूतश्च । आस्ते अस्ति । तस्मादिदं विमानमपूर्वतामवलम्बत इति पूर्वेण योज्यम् । पृथ्वी वृत्तम् । 'जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ॥ २९ ॥

**अभिमतरूपं** सीताभीप्सितरामरूपम् । **करग्रहणं** पाणिग्रहणम् । **जगदीश्वरः** जगत्पतिः रावणः । **अन्तरिति** ॥ स्वामिन् तव विमाने । लङ्कायाः । बहिः पदमपि एकं पदमेव । चलिते सति । अम्भोनिधिः समुद्रः । अन्तः प्रापिताः नीताः कूर्माः नक्राः ग्राहाः मकराः जलजन्तुविशेषाः येन तथाभूतस्सन् । न स्पन्दते किंचिदपि न चलति । एषः रुचीनां तेजसां पतिः रविः । मण्डलं बिम्बम् । रत्नमुकुरस्य मणिदर्पणस्येव छाया कान्तिर्यस्य तथाभूतम् । धत्ते धारयति । किञ्च । वातः वायुः । चन्दनवल्लरीणां चन्दनलतानां किसलयानां पल्लवानां स्पन्दः किञ्चिच्चलनं ( तावन्मात्रकारी ) अवधिः वहनपरमकाष्ठा यस्य तथाभूतः दृश्यते । त्वद्विमानदर्शनेन त्वत्तोभीतास्समुद्रादय इति वक्तव्ये भङ्ग्यन्तरेण कथनात्पर्यायोक्तालङ्कारः । तल्लक्षणन्तु—'पर्यायोक्तन्तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति । शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

विद्यु.—किमिदमाश्चर्यस्थानमेतस्य कैलासशैलसमुत्क्षेपव्यपोहित-कन्तुकक्रीडाविनोदस्य कारागृहकुटुम्बीकृतजम्भद्विषो निरवधिकमाया धुरन्धरस्य दशकन्धरस्य ।

**दशाननः**—(सविमर्शम् ।)

कैलासाद्रेर्भुजबलमभिव्यक्तमासीत्पुरस्ता-
द्दिक्पालानामपि च पुरतो दर्शितश्शस्त्रसारः ।
युक्तोस्माभिस्तदयमधुना व्यक्तमव्यक्तपूर्वो
मायावेषग्रहणपटिमा मैथिलस्याग्र एव ॥ ३१ ॥

सारण तदिदानीं त्वरयतां विमानराजः ।

**सारणः**—राजन् किन्न पश्यति भवानुत्पतनवेगमेतस्य ।

पश्योपर्यवरोहतीव शिखरिस्थूलोडुचक्रं नभो-
रेखीभूतसमुद्रवेष्टितमथो विभ्रश्यतीव क्षितिः ।

**किमिदमिति** ॥ कैलासशैलस्य समुत्क्षेपेण समुद्धरणेन व्यपोहितः निरस्तः कन्तुकक्रीडेव विनोदः मनोविनोदनव्यापारः येन तथाभूतस्य । कन्तुकवत्कैलासमुद्धृतवत इत्यर्थः । कारागृहे कुटुम्बीकृतः गृहस्थः कृतः जम्भद्विट् येन तथोक्तस्य । इन्द्रमपि कारायां क्षिप्तवत इत्यर्थः । निरवधिकायाः निस्सीमायाः । मायायाः धुरन्धरस्य धुरीणस्य । एतस्य दशकन्धरस्य रावणस्य । इदं समुद्रास्पन्दनादिकम् । आश्चर्यस्य स्थानं किम । सविमर्शं सपर्यालोचनम् । **कैलासेति** ॥ कैलासाद्रेः पुरस्तात पुरतः । अस्माकं भुजबलम् आभिव्यक्तं स्पष्टं आसीत । भुजैरुद्धृतः कैलास इति भावः । अपि च किञ्च । दिक्पालानां पुरतः शस्त्रसारः दर्शितः अस्माभिरायुधबलन्दर्शितम् । शस्त्रबलेन दिक्पाला जिता इत्यर्थः । तत् तथापि । मैथिलस्य । जनकस्य । अग्रे पुरतएव । अव्यक्तपूर्वः पूर्वमप्रकाशितः । अयम् । मायया वेषस्य रामवेषस्य ग्रहणे पटिमा पटुत्वम् । अधुना अद्य (सीतानिमित्तं) व्यक्तं स्फुटं यथा तथा । अस्माभिः युक्तः मिलितः । मन्दाक्रान्तावृत्तम् ॥ ३१ ॥

**त्वरयतां** त्वराङ्कुरुताम् । **पश्येति** ॥ पश्य । अस्मिन् विमाने । जवात् वेगात् समुज्जृम्भिते समुत्पतिते सति । उपरि । शिखरिवत् पर्वतवत् स्थूलं सामी-

पाषाणद्रुमवल्लरीपरिवृतौ पूर्वापराद्री पुन-
र्गृह्णीतस्समरेखतामिव जवादस्मिन् समुज्जृम्भिते ॥ ३२ ॥

**विष्णु.**—अये कथमवतीर्णा एव वयमेकोत्पतनेन प्रजविनो विमानस्य पचेळिमफलभरपरिणद्धमुग्धबहुळतरतरुणतरुषण्डमण्डितपर्यन्तमहीतलं प्रशान्तमृगपक्षिगणाकीर्णपरिसरारण्यं पुण्यमिदमाश्रमपदं कुशिकनन्दनस्य ।

यदिदानीम् ।

गिरिकटककठोरग्रावसङ्घट्टशीर्य-
न्निबिडचटुलनीरालीढवानीरकुञ्जा ।
वनकरिकरकेळीकृष्टनाळीकनाळा
मदमुखरशकुन्ता दृश्यते कौशिकीयम् ॥ ३३ ॥

प्यात पृथुलत्वेन दृश्यमानं उडूनां नक्षत्राणां चक्रं मण्डलं यस्मिंस्तत् । नभः गगनम् । अवरोहतीव अवतरतीव । अत्रोत्तरत्र चोत्प्रेक्षालङ्कारः । क्षितिः भूमिः । अरेखाः रेखाः संपद्यमानाः भूता रेखीभूताः समुद्राः तैः वेष्टितं परिवृतं यथा तथा । अधः अधःप्रदेशे । विभ्रश्यतीव स्रंसत इव । पाषाणैः शिलाभिः द्रुमैः वृक्षैः वल्लरीभिः लताभिश्च परिवृतौ वेष्टितौ । पूर्वापराद्री पुनः उदयास्ताचलौ तु । समा समाना एका अन्तरवकाशशून्या रेखा ययोस्तयोर्भावस्समरेखता ताम् । गृह्णीतइव स्वीकुर्वाते इव । शार्दूलविक्रीडितवृत्तम् ॥ ३२ ॥

**अये इति** ॥ अये इति विस्मये । प्रजविनः अधिकवेगयुक्तस्य । पचेलिमानां परिपक्वानां फलानां भरेण परिणद्धानां परितः बद्धानां मुग्धानां सुन्दराणां बहुलतराणां अत्यन्तमधिकानां तरुणानां प्रौढानां तरूणां वृक्षाणां षण्डेन बृन्देन । मण्डितं भूषितं पर्यन्तमहीतलं यस्य तत् । प्रशान्तैः अन्योन्यशाश्ववर्राहितैः मृगपक्षिगणैः आकीर्णं व्याप्तं परिसरारण्यं समीपकाननं यस्य तत् । **यदिदानीं** यस्मात्कारणात् । अद्य । **गिरीति** ॥ गिरेः कटके नितम्बे (स्थितानां) कठोरग्राव्णां कठिनपाषाणानां सङ्घट्टेन सङ्घट्टनेन शीर्यत् शीर्णताङ्गच्छत् निबिडं सान्द्रं चटुलं चञ्चलञ्च नीरं वारि तेन आलीढाः व्याप्ताः वानीरकुञ्जाः वेतसनिकुञ्जाः यस्यास्सा ।

**दशाननः**—(सारणं प्रतिसोत्कण्ठम् ।)

आकण्ठाम्बुनिमग्नतापसशिरश्चञ्चज्जटामण्डल
त्रासोद्भ्रान्तरथाङ्गनाममिथुनक्रेङ्कारनीरन्ध्रया ।
आकाशादनया दिशावतरतु क्षोणीमिदं पुष्पकं
यत्रावाति धुताम्बुजो जनकजानिश्वासरम्योऽनिलः ॥ ३४ ॥

**सारणः**—महाराज यथाभिमतमवतीर्णमिदं पुष्पकम् । ततो यावदवतरामो वयमस्मादस्मिन्नेव विविक्तरमणीये कौशिकीतीरे ।

(सर्वेऽपि विमानावतरणं नाटयन्ति ।)

**दशाननः**—यावदस्मदागमनमिदमदृश्यमत्रैव तिष्ठतु ।

**सारणः**—अतः परमस्माभिस्तिरस्करणीप्रभावादनालक्षितशरीरैराक्रमितव्या भूमिभागाः ।

---

वनकरिभिः वनगजैः करैः शुण्डाभिः केल्या लीलया कृष्टानि आकृष्टानि नालीकनालानि पद्मकाण्डानि यस्यास्सा । मदेन यौवनमदेन मुखराः शब्दायमानाः शकुन्ताः पक्षिणः यस्यान्तथाभूता । इयम् । कौशिकी तदाख्या नदी । दृश्यते । तस्मादिदं कौशिकस्याश्रमपदमिति पूर्वेण योज्यम् । मालिनीवृत्तम् ॥ ३३ ॥

**सोत्कण्ठं** साभिलाषम् । **आकण्ठेति** ॥ इदं पुष्पकम् । आकाशात् । आकण्ठं कण्ठपर्यन्तं अम्बुनि जले निमग्नानां तापसानां शिरस्सु चञ्चन्तीनां चलन्तीनां जटानां मण्डलात् समूहात् त्रासेन भीत्या उद्भ्रान्तानां उद्घूर्णितानां रथाङ्गनाम्नां चक्रवाकानां मिथुनानां स्त्रीपुंससमूहानां क्रेङ्कारेण क्रेङ्कारध्वनिना नीरन्ध्रया निबिडया । अनया दिशा । क्षोणीं महीम् । अवतरतु अवरोहतु । यत्र क्षोण्यां दिशि वा । धुतानि कम्पितानि गन्धेन जितानि वा अम्बुजानि पद्मानि येन सः । जनकजायाः सीतायाः निश्वासेन रम्यः अनिलः पवनः । आवाति समन्ततः वहति । तां क्षोणीं वा । तया दिशावेति पूर्वेण योज्यम् । शार्दूलविक्रीडितवृत्तम् ॥ ३४ ॥

**महेति** ॥ यावत् शीघ्रम् । विविक्तरमणीये विजने रम्ये च । **अत इति** ॥ तिरस्करणीप्रभावात् । अन्तर्धानविद्यामहिम्ना । अनालक्षितशरीरैः केनाप्यदृष्टदेहैः । आक्रमितव्याः गन्तव्याः ॥

यतः ।

नीरन्ध्र एष निवहः परितस्तरूणां
शार्दूलचर्मकुशविष्टरसान्द्रमूलैः ।
तस्याश्रमं कथयतीव मुनेः प्रकृष्टं
शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः ॥ ३५ ॥

**दशाननः**—युक्तमभिहितं सारणेन । यदस्माभिरिह निभृतमुपलब्धव्या किंवदन्ती ।

**विद्यु.**—( चक्षुषीनिमील्य तिरस्करणीविद्यामभिध्यायति । )

**दशाननः**—पर्यन्ते दन्तदृष्टीकावेतौ समित्कुशपाणी वर्णिनावित एव अभिवर्तेते ।

**सारणः**—भवितव्यमेताभ्यां गाधिसूनोरन्तेवासिभ्याम् ।

( ततः प्रविशतो द्वौ वर्णिनौ । )

**एकः**—अहं किल भगवता साकेतं प्रतिष्ठमानेन कुलपतिना

---

**नीरन्ध्र इति** ॥ परितः समन्ततः । शार्दूलचर्मभिः व्याघ्राजिनैः । कुशविष्टरैः दर्भासनैश्च सान्द्रं निबिडं मूलं अधोभागः यस्य तथाभूतः । नीरन्ध्रः निरवकाशः । एषः तरूणां निवहः समूहः । उज्ज्वलानि प्रकाशमानानि मृगाजिनानि कृष्णाजिनानि वल्कलानि च यासु ताभिः । शाखाभिः विटपैः । तस्य मुनेः विश्वामित्रस्य । प्रकृष्टं उत्तमम् । आश्रमम् । कथयतीव अनुमापयतीव । इवशब्दो वाक्यालङ्कारे । अनुमानालङ्कारः । तल्लक्षणन्तु 'अनुमानन्तदुक्तं यत्साध्यसाधनयोर्वचः' इति वसन्ततिलकावृत्तम् ॥ ३५ ॥

**अभिहितं** उक्तम् । निभृतं निगूढम् । उपलब्धव्या ज्ञातव्या । किंवदन्ती जनश्रुतिः । **निमील्य** पिधाय । अभिध्यायति चिन्तयति । **पर्यन्ते** प्रान्ते । वर्णिनौ ब्रह्मचारिणौ । अन्तेवासिभ्यां शिष्याभ्यां ( अलुक्समासः ) । **अहमिति** ॥ साकेतम् । अयोध्याम् । **कुलपतिना** " मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्

कुशिकनन्दनेन तावदग्निपरिचरणार्थमग्निशरणे नियुक्तोस्मि। अतः खलु कौशिकीतीरे समित्कुशमाहृत्य गच्छामि । (इति परिक्रामति ।)

द्वितीयः—मयेदानीं महीराजजनकपुरोधसो गौतमनन्दनस्य महर्षेरनुज्ञया समित्कुशमाहृतवता वसतिरुपगन्तव्या महाराजजनकस्य । (इति परिक्रामति ।)

सखे सत्यव्रत कथय । कियन्ति दिवसानि महाराजजनकः कौशिकाश्रमे निवत्स्यति ।

प्रथमः—यावदस्मत्कुलगुरोः यक्ष्यमाणस्य परिसमाप्यतेऽवभृथमहोत्सवः ।

दशाननः—सारण विश्वामित्रशतानन्दशिष्याविमौ । तदनयोरशृणुमो निलीना एव विस्रम्भजल्पितानि ।

सारणः—किन्न पश्यसि महाराज तिरस्करणीविद्याप्रयोगं विद्युज्जिह्वस्य । तन्नः कुतो निलयनम् ।

दशाननः—(सहर्षम् ।) अहो विद्याप्रभावः । न केवलमस्मान् जनो न पश्यति । न शृणोति च वचनानि ।

विद्यु.—महाराज विस्रब्धमिह सञ्चरिष्यामः ।

द्वितीयः—सत्यव्रत कथमध्वरविध्वंसिषु रजनीचरेषु मखमारप्स्यते भगवान् कुशिकनन्दनः ।

---

अध्यापयति विप्रर्षिस्सवैकुलपतिस्स्मृतः" इत्युक्तलक्षणेन । अग्निपरिचरणार्थं अग्निपूजायै । अग्निशरणे अग्निशालायाम् । समिधश्च कुशाश्च समित्कुशम् । पुरोधसः । पुरोहितस्य शतानन्दस्य वसतिः वासस्थानम् । **सखे इति** ॥ निवत्स्यति वासं करिष्यति । यक्ष्यमाणस्य यागङ्करिष्यमाणस्य । अवभृथः । दीक्षान्तः । **सारणेति** ॥ निलीना एव तिरोहिता एव । विस्रंभजल्पितानि । यथेच्छभाषितानि । **किन्नेति** ॥ निलयनं निलीनत्वम् । **सहर्षमिति** ॥ विस्रब्धं निर्भयम् । **सत्यव्रतेति**॥ अध्वरविध्वंसिषु यज्ञविनाशकेषु सत्सु मखं आरप्स्यते यज्ञारम्भं करिष्यते ।

**सत्यव्रतः**—सखे देवव्रत, शृणु तावत्।

प्रतित्रिदिवनिर्मितित्रसदशेषबर्हिर्मुख-
प्रसक्तगुणवर्णनध्वनितपूर्णकर्णाध्वनः।
अमुष्य किल रुष्यतस्स्वयमुपेत्य सत्यात्क्षितिं
करेण करमामृशन् कमलभू रुरोध क्रुधः॥ ३६॥

तस्यैतस्य महातपोनिधेः गाधिसूनोः कियती पुनरियं रजनीचरा इति विभीषिका।

विद्यु.—सारण अपि श्रुतं विप्रवटोर्वचनम्।

**सारणः**—अत एव हि महाराजेन कौशिकस्य विविधमायाविहारी मारीचः प्रतिबलीकृतः।

विद्यु.—उपपन्नमिदम्। यतः।

सकृत्प्रौढध्वान्तं सकृदलघुमेघव्यतिकरं
सकृद्धूमोन्नद्धं सकृदपि रजोवृष्टिकलुषम्।

---

**प्रतीति**॥ प्रतित्रिदिवस्य प्रतिस्वर्गस्य निर्मितेः निर्माणात् त्रसद्भिः बिभ्यद्भिः अशेषैः बर्हिर्मुखैः देवैः प्रसक्तस्य आरब्धस्य। गुणवर्णनस्य। ध्वनितेन ध्वनिना। पूर्णः कर्णाध्वा श्रोत्रमार्गः यस्य तथाभूतस्य। रुष्यतः कुप्यतः। अमुष्य कौशिकस्य। करम् हस्तम्। कमलभूः ब्रह्मा स्वयम्। सत्यात् सत्यलोकात्। क्षितिं भूमिम्। उपेत्य प्राप्य। करेण निजहस्तेन। आमृशन्। स्पृशन् सन्। क्रुधः अमुष्य कोपान्। रुरोध निवारयामास॥ पृथ्वीवृत्तम्॥ ३६॥

**कियती** किं परिमाणं अस्या इति कियती अल्पपरिमाणेत्यर्थः। **विभीषिका**। बालभयजनकपाञ्चालिकेत्यर्थः। **विप्रवटोः** द्विजमाणवकस्य। **विविधेति**। अनेकमायाविहरणशीलः। **प्रतिबलीकृतः** प्रतिपक्षीकृतः। **उपपन्नम्** युक्तम्। **सकृदिति**॥ अतुलेन असदृशेन मायाबलेन मदः गर्वः यस्य सः। अयम्। मारीचः। पुरा। युधि युद्धे। व्योमस्थलं गगनतलम्। सकृत् एकवारम्। प्रौढं प्रवृद्धं ध्वान्तं तमः यस्मिंस्तत्। सकृत्। अलघूनां बृहतां मेघानां व्यतिकरः

अभिव्यञ्जन्व्योमस्थलमतुलमायाबलमदः
पुरा मारीचोऽयं युधि भयमनैषीद्दिविषदः ॥ ३७ ॥

**दशाननः**—( सस्नेहबहुमानम् । विद्युज्जिह्वं प्रति । )

मारीचस्य भवानेव मायाबलमिवात्मनः ।
विद्युज्जिह्व विजानाति ह्यहिरेव पदानहेः ॥ ३८ ॥

**देव.**—सखे महातपोनिधिरिति युक्तमाह भवान् । पश्य यदेतस्य कुलपतेराश्रमपदे ।

शुण्डाग्रेण सलीलमेष कळभो वक्त्रान्मृणाळोज्ज्वलान्
जृम्भारम्भविकस्वरान्मृगपतेर्दंष्ट्राङ्कुरान् कर्षति ।
एषा वत्सतरी च मातरि तृणान्यत्तुङ्गतायां क्वचि
द्द्वीपिन्यावरकन्दरस्थितिजुषः स्तन्यं पयश्चूषति ॥ ३९ ॥

सम्बन्धः यस्मिस्तत् । सकृत् धूमेन उनद्धं व्याप्तम् । सकृदपि रजसां पांसूनां वृष्ट्या वर्षेण कलुषं आविलञ्च अभिव्यञ्जन् प्रकटयन् सन् । दिवि देवान् । भयं भीतिं अनैषीत् प्रापयामास । शिखरिणीवृत्तम् ॥ ३७ ॥

**मारीचस्येति** ॥ विद्युज्जिह्व आत्मनः मायाबलमिव मारीचस्य मायाबलमपि । भवानेव विजानाति अहिः सर्पएव आत्मनः पदानीव अहेः अन्यस्य सर्पस्य पदान्यपि विजानाति । अत्र उपमा लोकोक्तिश्च अलङ्कारौ । ३८ ॥

**शुण्डाग्रेणेति** ॥ एषः कलभः त्रिंशद्वर्षः करी । सलीलं शुण्डाग्रेण कराग्रेण । जृम्भाया जृम्भणस्य आरम्भे विकस्वरात् विवृतात् । मृगपतेः सिंहस्य । वक्त्रात् मुखात् । मृणालवत् बिसवत् । उज्ज्वलान् प्रकाशमानान् । दंष्ट्रांकुरान् दन्तप्ररोहान् । कर्षति मृणालभ्रान्त्या आकर्षति । किञ्च । एषा वत्सतरी तनुः गोवत्सा मातरि तृणानि अत्तुं भक्षयितुं क्वचित् गतायां सत्याम् । वरकन्दरे श्रेष्ठगुहायां स्थितिजुषः स्थितिं प्राप्तवत्याः । द्वीपिन्याः व्याघ्रयाः । स्तन्यं स्तनेषु भवं पयः क्षीरम् । चूषति पिबति । अत्रोपमा भ्रान्तिमदलङ्कारौ । शार्दू...॥३९ ॥

किञ्च ।

पितृभ्यां विक्रीतं पशुमिव परित्रातुमलसं-
स्वमात्मानं दीनं दृशमवकिरन्तं दिशि दिशि ।
शुनश्शेपं यूपग्रथितमशुभान्मोचितवतो
मुनेरस्य ज्ञातुं भवति महिमानं जगति कः ॥ ४० ॥

विद्यु.—न जानाति विप्रवटुर्मारीचस्य मायाबलम् । तत एवमाह ।

सारणः—भवतु को दोषः सर्वे जनाः स्वजनं प्रशंसन्ति ।

विद्यु.—अस्त्विदं पुनरेवं मारीचे । पश्य ।

त्रेतागारमलक्षितः प्रविशति व्यापादयन् ऋत्विजः
स्रुग्भाण्डानि भिनत्ति खादति पशून् गृह्णात्यशेषं हविः ।
भीमभ्रूकुटि दर्शयन्मुखमृषिस्त्रीणां विधत्ते भयं
मारीचोऽयमशक्यशासन इति ज्ञातं न केषामिदम् ॥ ४१ ॥

---

**पितृभ्यामिति** ॥ पितृभ्यां मातापितृभ्याम् । पशुं छागमिव । विक्रीतम् । स्वं आत्मानं देहं परित्रातुं रक्षितुं अलसं असमर्थम् । दीनं अनाथम् । दिशि दिशि । दृशं दृष्टिम् । अवकिरन्तं विकिरन्तम् । यूपे उपाकरणार्थपशुबन्धनदारुणि । ग्रथितं बद्धम् । शुनश्शेपं तदाख्यम् । अशुभात् मरणरूपामङ्गलात । मोचितवतः । विमुक्तं कृतवतः । अस्य मुनेः महिमानम् । ज्ञातुम् । जगति कः भवति अस्ति । विश्वामित्रः ऋचीकपुत्रं पितृभ्यां अम्बरीषाय पशुत्वेन विक्रीतं स्वं शरणमापन्नं शुनश्शेपं 'शुनःशेप यूपबद्धस्त्वमाभ्यां मन्त्राभ्यां यज्ञपुरुषं स्तुहि सत्वां मोचयिष्यती' त्युक्त्वा द्वौ मन्त्रावुपदिश्य ररक्षेति रामायणकथात्रानुसन्धेया । शिखरिणीवृत्तम् ॥ ४० ॥

**त्रेतेति** ॥ अयं मारीचः । त्रायन्त इति त्राः आहुतयः ताभिरिता त्रेता गार्हपत्याहवनीयदक्षिणाग्निरूपाग्नित्रयम् । तस्याः अगारं शालाम् । अलक्षितः । प्रविशति । ऋतौ यजन्तीति ऋत्विजः अध्वर्युप्रमुखास्तान् । व्यापादयन् संहरन् । स्रुग्भाण्डानि स्रुक्प्रभृतीनि यज्ञपात्राणि भिनत्ति विदलयति । पशून् । छागान् । खादति अत्ति । अशेषं हविः सोमादिकम् । गृह्णाति अपहरति । भीमा भयदा

**सत्य.**—अत एव निश्शङ्कमाहरिष्यमाणमखः प्रियसखं दशरथमिक्ष्वाकुकुलनाथमानेतुमयोध्यां गतः कुलपतिः ।

**सारणः**—( सामर्षस्मितम् । )

जामदग्न्यमुखाद्देवस्सवनायान्वनाधि यत् ।
सर्वं तद्विस्मृतं हन्त यक्ष्यते निर्भयो मुनिः ॥ ४२ ॥

**विद्यु.**—सारण किं ते विप्रवटोर्मूढस्य वचस्यमर्षः । गुप्तमन्त्रः खलु कुशिकनन्दनः ।

**सारणः**—किमनेन गोपनेन कुशिकनन्दनस्य । यद्भार्गवमुखेन देवं प्रतिप्रार्थनां शिष्योपि स्वस्य न जानाति ।

**विद्यु.**—स्वजनस्य स्वस्मिन्नभीष्टघटनक्षम इति विस्रम्भाय । यदुक्तं भवता जनकस्तमृषिं वरोपसङ्ग्रहणे प्रतिभूकृतवानिति ।

**सारणः**—( विहस्य । ) बलवानिति तेन जाल्मेन प्रतिभूः कृतो गाधिसूनुः ।

---

भ्रूकुटिः भ्रूभङ्गः यस्मिंस्तत् मुखं दर्शयन् । ऋषिस्त्रीणां भयं विधत्ते करोति । तस्मादयं मारीचः । अशक्यं अनतिलंघ्यं शासनं यस्य स इति । यत् इदं केषां ज्ञातं न कैः न बुद्ध्यते सर्वैः ज्ञायत इत्यर्थः । 'क्तस्य च वर्तमाने' इति षष्ठी । शार्दू ... ॥ ४१ ॥

**अतएवेति** ॥ निश्शङ्कं निर्भयम् । आहरिष्यमाणमखः करिष्यमाणयज्ञः । **जामदग्न्येति**॥ जामदग्न्यमुखात् परशुरामद्वारा । देवः रावणः । सवनाय यागाय । मुनिना । अन्वनाधि अयाच्यतेति यत् । तत् । सर्वं मुनिना । विस्मृतम् हन्त आश्चर्यम् । यतः मुनिः विश्वामित्रः । निर्भयस्सन् । यक्ष्यते यागं करिष्यते ॥

**गुप्तमन्त्रः** संवृतमन्त्रालोचनः । **गोपनेन** संवरणेन । **भार्गवमुखेन** परशुरामद्वारा । **स्वजनस्येति** ॥ अभीष्टघटने इतरानपेक्षं अभीप्सितकार्यसंघटने क्षमः शक्तः इति स्वस्मिन् स्वजनस्य शिष्यादिजनस्य । विस्रम्भाय विश्वासाय । **प्रतिभूकृतवान्** । लग्नकं कृतवान् । **तेन** जनकेन । **जाल्मेन** असमीक्ष्य-

पश्यतु भवानस्य विक्रमविजृम्भितम् ।

निर्वास्य ध्वजिनीं निहत्य तुरगान् निर्भिद्य च स्यन्दनं

द्वेधाकृत्य च कार्मुकं रणमुखे दूरेण विद्रावितः ।

वासिष्ठ्या जनितैर्गवा खलु शकम्लेच्छादिभिस्सैनिकै-

र्दीनो यः प्रययौ पुरा तपसितुं सोयं बली कौशिकः ॥ ४३ ॥

देव.—

श्रूयते तस्य राजर्षेर्ब्रह्मचर्यव्रते स्थिताः ।

ऋश्यशृङ्गचरोर्भागाश्चत्वारस्तनया इति ॥ ४४ ॥

सत्य.—

तेषामपि महातेजा रामो रतिकरः पितुः ।

स्वयम्भूरिव भूतानां श्रूयते गुणवत्तरः ॥ ४५ ॥

---

कारिणा । **विक्रमविजृम्भितम्** । पराक्रमविजृम्भणम् । **निर्वास्येति** । पुरा । रणमुखे युद्धारम्भएव । वसिष्ठस्य इयं वासिष्ठी तया । गवा । धेन्वा । जनितैः उत्पादितैः । शकदेशाद्भवाः शकाः म्लेच्छाः अपभाषणवन्तः तदादिभिः । सेनायां समवयन्तीति सैनिकाः तैः । ध्वजिनीं सेनाम् । निर्वास्य विद्राव्य । तुरगान् अश्वान् निहत्य विनाश्य । स्यन्दनं रथम् । निर्भिद्य विदार्य च । कर्मणे प्रभवति कार्मुकं धनुः । द्वेधाकृत्य द्विधा कृत्वा च । दूरेण दूरात् । विद्रावितः निर्वासितः । दीनः अनाथः । यः कौशिकः । तपसितुं तपः कर्तुम् । प्रययौ जगाम । सोयं कौशिकः । बली खल्विति परिहासोक्तिः । शार्दू... ॥ ४३ ॥

**श्रूयतइति** ॥ तस्य राजर्षेः दशरथस्य । ऋश्यशृङ्गचरोः ऋश्यशृङ्गानुग्रहद्वारा प्राजापत्यपुरुषदत्तपायसस्य । भागाः अंशाः । चत्वारः तनयाः । ब्रह्मणः वेदस्य चर्या अध्ययनं यस्मिंस्तदेव व्रतं नियमः तत्र स्थिता इति श्रूयते ॥ ४४ ॥

**तेषामिति** ॥ भूतानां उत्पन्नानां सर्वेषाम्मध्ये स्वयंभूः ब्रह्मेव । तेषां पुत्राणामपि मध्ये । रामः महातेजाः । पितुः दशरथस्य ब्रह्मपक्षे नारायणस्य । रतिकरः प्रीतिकरः । गुणवत्तरः अतिशयेन गुणवांश्च । श्रूयते ॥ ४५ ॥

**दशाननः**—( साभ्यसूयम् । ) किमाह विप्रवटुः ।

**विद्यु.**—महाराज, जनश्रुतिस्तादृशी ।

**सारणः**—अत एव जामिक्या अस्मिन् प्रेमाभिनिवेशः । अतएव च महाराजेन जिघृक्षितं जानकीपरिणयाय ताद्रूप्यम् ।

**देव.**—( सशिरःकम्पम् । ) जानामि महाराजजनकस्य परिसरे रामेति नामानुगुणमसावाम्रेडितगुणग्रामो गुरुणा गौतमनन्दनेन ।

तथाहि ।

वीरो विश्वजनप्रियश्शमधनश्शौर्येऽप्यनुत्सेकवान्
क्षात्रं धर्ममसुत्र भूरिफलदं सम्भावयन्नात्मनः ।
धर्मज्ञश्शुचिरुज्झितानृतकथो दीनानुकम्पी पटु-
र्धीमानस्त्रविशारदो विजयते रामो जगन्नायकः ॥ ४६ ॥

**दशाननः**—( सरोमाञ्चम् । स्वगतम् । ) किमेतद्गुणवर्णनं परमार्थत-

---

**जनश्रुतिः** किंवदन्ती । **प्रेमाभिनिवेशः** प्रेम्णः प्रीतेः अभिनिवेशः अभ्यासः । सान्तत्यमित्यर्थः । महाराजेन रावणेन । ताद्रूप्यम् । तस्येव रामस्येव रूपं यस्य सः तद्रूपः तस्य भावः ताद्रूप्यम् । जिघृक्षितम् । ग्रहीतुमिष्टं । **जानामीति** । परिसरे समीपे । रामेति ( केवलप्रातिपदिकानुकरणं ) नाम्नः अनुगुणं सदृशं यथा तथा । असौ रामः । आम्रेडितः पुनःपुनः कथितः गुणानां ग्रामः समूहः यस्य सः ।

**वीर इति** ॥ वीरः विक्रान्तः । विश्वस्य समस्तस्य जनस्य प्रियः । शमः इन्द्रियनिग्रहः कोपादिशान्तिसाधनं यस्य सः । शौर्ये विक्रमे सत्यपि । अनुत्सेकवान् गर्वरहितः । आत्मनः स्वस्य । क्षात्रं धर्मं प्रजापालनादिरूपक्षत्रियधर्मम् । अमुत्र परलोके भूरिफलदं अधिकफलदं सम्भावयन् चिन्तयन् । धर्मज्ञः सकलधर्मवित् । शुचिः शुद्धः । उज्झितानृतकथः त्यक्तासत्यभाषणः । दीनानुकम्पी दीनदयाशीलः । पटुः समर्थः । धीमान् बुद्धिमान् । अस्त्रेषु विशारदः प्रवीणः । जगतां नायकः । रामः । विजयते सर्वोत्कृष्टो वर्तते । शार्दूलविक्रीडितवृत्तम् ॥ ४६ ॥

**यत्किञ्चिदिति** ॥ प्रलपितं जल्पितम् । **राजेति** । राजाऽनेन जीवतः ।

स्स्यात् । ( प्रकाशम् । ) यत्किञ्चित्प्रलपितं जनकसान्निधौ राजपिण्डोपजीविनो गौतमदुरपत्यस्य विप्रवटुरनुवदति ।

**विद्यु.**—( ससंरम्भम् । ) पश्य सारण पश्य ।

स्वस्या मातुरुपेत्य नक्तमकरोद्यश्शीलभङ्गं शठो
दुर्दान्तस्सचिराय येन मघवा काराकुटुम्बीकृतः ।
एतस्मिन्नुपकुर्वति प्रथमतस्तुत्येऽपि लङ्केश्वरे
रामं मैथिलिसन्निधौ बत किमित्यस्तौदहल्यासुतः ॥ ४७॥

**सत्य.**—अत एव गुणनिधावस्मिन् राघवे स्वयमनुरक्तां सीतां सम्मन्यते जनक इति मन्ये ।

**सारणः**—हन्त दुरात्मना दाशरथिं प्रशंसतानेन परां कोटिं नीतस्सीतायास्तस्मिन्ननुरागः ।

**दशाननः**—

रामानुरक्ता सीतेति वचो मर्मभिदेकतः ।
अन्यतः स्मरनाराचाः शृण्वतस्तत्कथां मम ॥ ४८ ॥

**गौतमदुरपत्यस्य** शतानन्दस्य । अहल्यासम्भृतत्वेन दुरपत्यमिति राक्षसावहेलनम् । **अनुवदति** अनुसृत्य वदति । **ससंरम्भम्** ससम्भ्रमम् ॥ **स्वस्या इति** । यः मघवा । नक्तं रात्रौ उपेत्य आगत्य स्वस्याः मातुः । शीलभङ्गं पातिव्रत्यभङ्गम् । अकरोत् । सः । शठः गूढविप्रियकृत । दुर्दान्तः दुर्दमितः उद्धृत इति यावत् । मघवा इन्द्रः । येन लङ्केश्वरेण ।चिराय चिरम् । काराकुटुम्बीकृतः कारागृहस्थः कृतः । उपकुर्वति स्वमातृशीलभञ्जकशिक्षणरूपमुपकारमाचरति । एतस्मिन् । लङ्केश्वरे । प्रथमतः प्रथमम् । स्तुत्येपि स्तोतुं योग्ये सम्भाव्यमाने सति । अपिरत्रसम्भावनायाम् । अहल्यासुतः । शतानन्दः । मैथिलस्य जनकस्य सन्निधौ रामं किमिति अस्तौत् स्तौति स्म । बत आश्चर्यम् । शार्दूल .. ॥ ४७ ॥

**अतइति** ॥ सम्मन्यते अभ्यनुजानाति। **पराङ्कोटिम्** । अधिकमुत्कर्षम् ।

**रामेति** ॥ सीता रामे अनुरक्तेति वचः वचनं एकतः । एकत्रपार्श्वे । मर्माणि आयुस्स्थानानि भिनत्तीति मर्मभित् । अस्ति । तत्कथां तस्याः सीतायाः

**विद्यु.**—( सकोपनिश्वासम् । ) अहल्यातनयएव घातयितव्यः प्रथमं ताटकेयेन । पश्चादन्ये ।

अथवा ।

स्तोता स्तवीतु निश्शङ्कं यत्किञ्चिद्गौतमात्मजः ।
शृण्वता स्वामिनस्सख्या जनकेन कथं स्थितम् ॥ ४९ ॥

**देव.**—एवमेवैतत् । परं तु रामप्रशंसापरमस्मद्गुरुं प्रतिवदत्येवं महाराजः ।

**सन्य.**—कथमिव । ( अन्ये सादरमाकर्णयन्ति । )

**देव.**—

अस्तु रामोत्सुका वत्सा प्रशंसतु च तं भवान् ।
अर्केन्दुकुलसम्बन्धो युक्तोप्येष तु दुर्घटः ॥ ५० ॥ इति ।

**विद्यु.**—साधु जनक साधु । सम्यग्दृष्टं भवता ।

**दशाननः**—अभिज्ञः खल्वयम् ।

---

कथम् । शृण्वतः मम अन्यतः अन्यत्र । स्मरस्य कामस्य नाराचाः बाणविशेषाः । मर्मभिदस्सन्तीत्यर्थः ॥ ४८ ॥

**ताटकेयेन** ताटकायाः अपत्यं पुमान् ताटकेयः मारीचस्तेन । **स्तोतेति** ॥ स्तोता स्तुतिकर्ता । गौतमात्मजः । निश्शङ्कं निर्भयं यत्किञ्चित् स्तवीतु स्तौतु । शृण्वता स्तोत्रमाकर्णयता । स्वामिनः रावणस्य सख्या मित्रेण । जनकेन । कथं ( अप्रतिषिध्य ) स्थितम् ॥ ४९ ॥

**अस्त्विति** ॥ वत्सा सीता रामे उत्सुका आसक्ता अस्तु । भवांश्च । तं रामं प्रशंसतु । किन्तु युक्तोपि अनुरूपोपि । एषः अर्केन्दुकुलयोः सूर्यवंश्यस्य दशरथस्य चन्द्रवंश्यस्य मम चेत्यर्थः । सम्बन्धः । दुर्घटः । घटयितुमशक्यः ॥ ५० ॥

**सारणः**—कथमेष घटते कन्याभिलाषिणि महाराजे ।

**सत्य.**—कुत एतत् ।

**देव.**—शेषमपि महाराजवचनं शृणोतु । यत्किल ।

काङ्क्षत्यर्थयितुं स्नेहात्कन्यारत्नमिदं मम ।
केकसीसूनुरित्येवं कर्णाकर्णिकया श्रुतम् ॥ ५१ ॥

ततश्च ।

कन्यामर्थयते यदि त्रिभुवनप्रोच्चण्डदोर्विक्रमो
नप्ता विश्वसृजस्सखा मम दशग्रीवस्स शैवाग्रणीः ।
तामस्मै रघुनन्दनैकहृदयां दातुं कथं शक्नुयां
दद्यां नेति कथं वदेयमिति च क्लिश्येऽधुना केवलम् ॥५२॥

**विद्यु.**—युक्तमुपन्यस्तं जनकेन शतानन्दाय ।

**दशाननः**—(सबाष्पगद्गदम् ।) सखे सीरध्वजे, मास्तु ते क्लेशः । किन्तवैव क्लेशाय भवेयम् ।

---

**कथमिति** ॥ घटते निर्वर्तते । **कांक्षतीति** ॥ केकसीसूनुः रावणः । इदं मम कन्यारूपं रत्नम् । स्नेहात् । अर्थयितुं याचितुम् । काङ्क्षति वाञ्छतीति एवं कर्णाकर्णिकया कर्णपरम्परया । श्रुतम् ॥ ५१ ॥

**कन्यामिति** ॥ त्रिभुवने प्रोच्चण्डः अत्युग्रः दोर्विक्रमः भुजपराक्रमः यस्य सः । विश्वसृजः ब्रह्मणः । नप्ता प्रपौत्रः । मम सखा । शैवाग्रणीः शिवभक्ताऽग्रेसरः । दशग्रीवः रावणः । कन्यां अर्थयते यदि । रघुनन्दने रामे एकस्मिन्नेव हृदयं यस्यास्ताम् । ताम् । अस्मै रावणाय । दातुं कथं शक्नुयां शक्तो भवेयम् । न दद्यामिति च कथं वदेयम् । इति अधुना क्लिश्ये केवलम् । क्लेशं केवलमनुभवामि । शार्दूलविक्रीडितवृत्तम् ॥ ५१॥

**उपन्यस्तम्** कथितम् । **सबाष्पगद्गदम्** बाष्पेण अश्रुणा गद्गदेन

सारणः—महाराज, न हि भवान्निजरूपेण कन्यां याचते। अपि तु रघुकुमारवेषेण तां परिणेष्यति।

सत्य.—( विहस्य । ) किमिदमुक्तं महाराजजनकेन । शृणु तावत् ।

कपिप्रवरकक्षगो दुरपकर्षदोर्विंशति-
शिरोदशकमग्रतः पदचतुष्टयं चान्यतः ।
अभीक्ष्णमधुनीतयः स्वतनुमोचनार्थं पुरा
कथं स दशकन्धरो भुवनभीमदोर्विक्रमः ॥ ५३ ॥

दशाननः—( सरोषम् । ) दुरात्मनोस्य विप्रवटोः कंण्ठमवरुञ्जेयमित्युत्थाय द्वाभ्यां निवारितस्तिष्ठति ।

विष्णु.—धिङ्मूढ नैतज्जानासि ।

निष्पर्यायनिवेशिताङ्गुळिशतप्रक्षुण्णपर्यन्तभू
बन्धोदञ्चितशङ्कराचलधुरा-दीव्यद्भुजाविंशतेः ।
अस्य त्रस्यदुमा-स्वयं-कृतपरिष्वङ्गप्रहृष्यन्मृड-
प्रक्रान्तस्तुति-साक्षि राक्षसपतेरास्ते गुणानां कुलम् ॥५४॥

---

अस्फुटवचनेन च सहितम् । **कपीति** ॥ पुरा कपिप्रवरस्य वानरश्रेष्ठस्य वालिनः कक्षगः कक्षस्थलगतः । दुरपकर्षा आक्रष्टुमशक्या दोर्विंशतिः बाहुविंशतिर्यस्य तथाभूतः । यः दशकन्धरः । स्वस्य तनोः देहस्य मोचनार्थं अग्रतः अग्रभागे शिरोदशकं दशशिरांसि । अन्यतः पश्चाद्भागे । पदचतुष्टयं चतुरः पादांश्च । अभीक्ष्णं असकृत् । अधुनीत कम्पयति स्म । सः दशकन्धरः कथं भुवने जगति भीमः भयङ्करः दोर्विक्रमः बाहुपराक्रमः यस्य तथाभूतः । पृथ्वीवृत्तम् ॥ ५३ ॥

**अवरुञ्जेयम्** भञ्ज्याम् । **निष्पर्यायेति** ॥ निष्पर्यायं अक्रमं युगपत् विनिवेशितानां उत्पाटनाय विनियोजितानां अङ्गुलीनां शतेन प्रक्षुण्णः चूर्णितः पर्यन्तभुवः परिसरस्य बन्धः दृढसन्धिबन्धः यस्य सः । अतएव उदञ्चितः उद्धृतः शङ्कराचलः कैलासः तस्य धुरया भारेण दीव्यन्ति राजन्ती भुजाविंशतिः बाहुविंशतिः यस्य तथाभूतस्य । अस्य राक्षसपतेः रावणस्य । त्रस्यन्त्या बिभ्यत्या

**दशाननः**—( सविनयम् । ) विद्युज्जिह्व मामैवम् । केयं स्तुत्यस्य भगवतः स्तावकता नाम । कथयामि पुनरेतत् । पुरा किल घोरेतपसि वर्तमानस्य ।

करकमलतलेन शैलकन्या-कुचतटसङ्गतकुङ्कुमारुणेन ।
सकरुणममृशन्ममापराङ्गं त्वमसि कृशस्तपसेति चन्द्रमौलिः ॥

**देव.**—सत्यव्रत किमुच्यते । क्वचित् कस्यचित् प्रतापस्खलनं न दोषाय ।

**दशाननः**—( सामर्षं विहस्य । ) कथं नाम प्रतापस्खलनम् ।

वाली नाम कपिस्तु कश्चन मया योद्धुं बलीति भ्रमा-
दाहूतो मम बाहुसारमविदन्कक्षे स मामग्रहीत् ।

---

उमया पार्वत्या स्वयं आत्मनैव । कृतः परिष्वङ्गः आलिङ्गनं तेन प्रहृष्यन् प्रतुष्यन् मृडः शिवः तेन प्रक्रान्ता आरब्धा स्तुतिः ( रावणगुणानां ) स्तवः तस्याः साक्षि साक्षाद्द्रष्टृ । यत् गुणानां कुलं बृन्दम् । आस्ते अस्ति । एतन्न जानासीति पूर्वेण सम्बन्धः ॥ ५४ ॥

**स्तुत्यस्य** स्तोतुमर्हस्य । **स्तावकता** स्तोतृत्वम् । **करेति** ॥ चन्द्रमौलिः शिवः । ( रावण ) त्वं तपसा कृशः असीति ( वदन्सन् ) शैलकन्यायाः पार्वत्याः कुचतटात् सङ्गतेन संलग्नेन कुङ्कुमेन अरुणेन शोणेन । करकमलतलेन हस्ताब्जतलेन । मम अपराङ्गं ऊर्ध्वावयवम् । यद्वा नतस्य मम पश्चादवयवम् । सकरुणं सदयम् । अमृशत् आमृशति स्म । पुष्पिताग्रावृत्तम् । तल्लक्षणन्तु 'अयुजिनयुगरेफतोयकारोयुजितु नजौ जरगाश्च पुष्पिताग्रा ' इति ॥ ५५ ॥

**प्रतापेति** ॥ प्रतापस्य पराक्रमस्य स्खलनं कुण्ठनम् । **वालीति** ॥ वाली नाम । ( नामेति कुत्सायां ) कश्चन कपिस्तु । बलीति भ्रमात् । मया । योद्धुं आहूतः। सः वाली मम बाहुसारं भुजबलम् । अविदन् अबुध्यमानस्सन् । कक्षे । माम् । अग्रहीत् जग्राह । तदनु सः मम मुष्टिभिः आघातेन ताडनेन विघूर्णितः भ्रमणे

मुष्ट्याघातविघूर्णितस्तदनु मामुन्मुच्य सख्यं व्यधा
न्नो वेद्मि स्खलितप्रताप इति तत्कोयं कळङ्को मम ॥५६॥

**सारणः**—मूढाः प्रकृतयो लङ्केश्वरस्य प्रतापं न जानन्ति ।

क्षिपति गगने कैलासं योजवाद्दशभिः करै-
र्दशभिरितरैस्तम्भ्रश्यन्तं प्रतीच्छति लीलया ।
भुवनजयिनो रक्षोनेतुः किमस्य पुरः क्षमः
परिगणयितुं वालीनाम प्लवङ्गकुलाधमः ॥ ५७ ॥

**सत्य.**—देवव्रत तवालमिदानीं लङ्केश्वरकळङ्कसंवरणेन ।

रेवायां खलु पञ्चभिर्भुजशतैरुध्वा प्रवाहं
बलादन्यैरम्बरवेणिकर्षणपयोविक्षेपकेळीपरैः ।
स्वच्छन्दं वनिताजनं रमयता प्रागर्जुनेनागतो
मध्ये युद्धमदेन किं दशमुखो नीतो न कारागृहम् ॥५८॥

---

गतस्सन । मां उन्मुच्य त्यक्त्वा । मया सख्यं मैत्रीम् । व्यधात् अकरोत् । तत् तस्मात् । स्खलितप्रतापः अहं कुण्ठितपराक्रम इति । मम कोयं कलङ्कः दोषः । नो वेद्मि न जाने । शार्दूलविक्रीडितवृत्तम् ॥ ५६ ॥

**प्रकृतयः** जनाः । **क्षिपतीति** ॥ यः जवात् । दशभिः करैः कैलासं गगने क्षिपति अस्यति । इतरैः दशभिः करैः भ्रश्यन्तं अधः पतन्तं तं कैलासं लीलया प्रतीच्छति गृह्णाति । भुवनजयिनः जगद्विजयिनः तस्य अस्य रक्षोनेतुः रावणस्य पुरः अग्रे वालीनाम प्लवङ्गकुले वानरकुले अधमः नीचः । परिगणयितुं क्षमः अर्हः किम् । हरिणीवृत्तम् । 'रसयुगहयैर्न्सौम्रौ स्लौ गो यदा कथिता हरिः' इति तल्लक्षणात् ॥ ५७ ॥

**संवरणम्** प्रच्छादनम् । **रेवायामिति** प्राक् पुरा रेवायां नर्मदायां ( खेलिवाति प्रसिद्धौ ) बलात् पञ्चभिः भुजशतैः प्रवाहं रुध्वा निरुध्य अम्बरवेणिकर्षणानि ( वनिताजनस्य ) वस्त्रकबरीकर्षणानि पयोविक्षेपाः ( वनिताजनोपरि )

दशाननः—अहो दुरात्मा त्रिशङ्कुयाजिनो मुनिपाशस्य शिष्यस्त-
दनुरूपं प्रलपति । तदयं भक्षयितव्यो राक्षसानाम् ।

देव.—तत्तिष्ठतु श्रूयतामिदम् ।

यस्मिन् विस्मितदेवदानवकुलप्रक्रान्तसन्दर्शन-
क्षिप्रोन्मोचितघोरनारकगतप्राणिप्रणीतस्तवे ।
मुञ्चत्युद्भटमट्टहासमभितो विद्रावितात्कासरा-
त्प्रभ्रष्टं जहसुर्यमं निशिचरा वर्ण्यस्स किं रावणः ॥ ५९॥

विद्यु.—साधु देवव्रत साधु नन्दनीयोऽसि वचनेन ।

सारणः—न केवलमयम् । अपि तु यस्यायं शिष्यः ।

जलप्रक्षेपाश्चैव केल्यः क्रीडाः पराः मुख्याः येषान्तथाभूतैः । अन्यैः पञ्चभिः भुजशतैः (सहस्रबाहुत्वात्) स्वच्छन्दं यथेच्छं वनिताजनम् । स्त्रीजनम् । रमयता तोषयता । अर्जुनेन कार्तवीर्येण । मध्ये क्रीडामध्ये युद्धमदेन आगतः प्राप्तः दशमुखः कारागृहं न नीतः किम् । शार्दू...॥ ५८ ॥

त्रीति ॥ चण्डालरूपं त्रिशङ्कुं याजितवतः । अतएव पाश्यः (निकृष्टः) मुनिः मुनिपाशस्तस्य कौशिकस्य । यस्मिन्निति ॥ विस्मितेन आश्चर्ययुक्तेन देवदानवानां कुलेन समूहेन प्रक्रान्तं आरब्धं सन्दर्शनं येषां तथोक्ताः क्षिप्रं शीघ्र (रावणेन स्वशक्त्याविष्करणाय न तु दयया) उन्मोचिताः घोरं नारकं नरकं गताः प्राणिनः जीवाः तैः प्रणीतः कृतः स्तवः स्तुतिर्यस्य तथोक्ते । यस्मिन् रावणे । उद्भटं भयङ्करं अट्टहासं रौद्ररसजातहासम् । मुञ्चति तन्वति सति । अभितः समन्ततः विद्रावितात् पलायितात् । कासरात् महिषात् प्रभ्रष्टं पतितं यमं अन्तकं निशिचराः राक्षसाः जहसुः हसन्ति स्म । सः रावणः वर्ण्यः वर्णयितुं शक्यः किम् । शार्दू .....॥ ५९ ॥

दशाननः—

मन्ये जनकसम्बन्धी यः कश्चिदपि मे प्रियः ।
चम्पकस्यानुषङ्गेण सम्पुटो ह्यधिवास्यते ॥ ६० ॥

सत्य.—किमनेनावयोः वृथावाक्कलहेन । अतिक्रामति समयः । गुरुकुलमेव गच्छावः । ( इति द्वावपि निष्क्रान्तौ । )

दशाननः—वयमपि कौशिकीतीरपरिसरारण्यभूषणेनानेन सहकारकाननेन प्रचरन्तस्तत्र तत्र प्रवृत्तिमुपलभमाना जानकीजन्मसूचितसुकृतभाजनं जनकराजमुपसर्पामः ।

इतरौ—यथा रोचते महाराजाय ।

( इति निष्क्रान्ताः सर्वे । )

**इति जानकीपरिणयनाटके प्रथमोऽङ्कः ॥**

**मन्य इति**॥ जनकसम्बन्धी जनकराजसम्बन्धवान् यः कश्चिदपि निकृष्टोऽपि मे प्रियः इति मन्ये । तथाहि चम्पकस्य चाम्पेयपुष्पस्य अनुषङ्गेण सम्बन्धेन । संपुटः अधिवास्यते वासनायुक्तः क्रियते । दृष्टान्तालङ्कारः । तल्लक्षणन्तु 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' इति ॥ ६० ॥

**गुरुकुलम्** गुरुगृहम् । **सहकारकाननेन** चूतवनेन । **प्रवृत्तिं** वृत्तान्तम् । उपलभमानाः बुध्यमानाः । जानक्याः जन्मना सूचितस्य अनुमितस्य सुकृतस्य पुण्यस्य भाजनं आश्रयम् । जनकराजम् । उपसर्पामः प्राप्नुमः ॥

इति श्री श्वेतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां बालरञ्जन्याख्यायां प्रथमाङ्कव्याख्या पूर्णा ॥

# द्वितीयोऽङ्कः ।



( ततः प्रविशति अत्रिरनसूया च । )

**अत्रिः**—अनसूये समाहूतोऽस्मि यक्ष्यमाणेन महर्षिणा कौशिकेन । सम्प्राप्तश्च भवत्या सहैव तदीयमाश्रमपदम् । किन्तु जनकेन समभिहागतायाः वत्सायाः किमुपहरावस्सीतायाः ।

**अनसूया**—नन्वस्ति किल मम वशे देवैर्दत्तं चीनांशुकमङ्गरागश्च ययोः किल धारणे यक्षराक्षसादितर्जितोऽपि कुलपालिकाजनो न लभेत कातर्यम् । न मुञ्चेत नैसर्गिकं शीलञ्च ।

**अत्रिः**—उपपन्नमेतत् । श्रृणुमः किल जानकीं दशाननः प्रार्थयितुं उद्युक्त इति । (पुरतोऽवलोक्य ।) केयं कराभ्यामुपनयति सरसानि कमलिनीदळानि मृणाळानि च ।

**अनसूया**—भवितव्यमनया सुचरितया नाम सख्या विदेहतनयायाः । अतो मन्ये मदनानलेन वा प्रौढातपलङ्घनेन वा बलवदस्वस्था जानकीति ।

द्वितीयाङ्कमारभमाणश्शुद्धविष्कम्भकमादौ रचयति—**ततः प्रविशतीति** ॥ अनसूया अत्रिभार्या । **उपहरावः** पारितोषिकत्वेन नयावः । **चीनांशुकम्** चीनदेशीयं वस्त्रम् । वस्त्रभेदो वा । ‘चीनोदेशांशुकव्रीहिभेदेतन्तौमृगान्तरे’ इति मेदिनी । **अङ्गरागः** विलेपनम् । **तर्जितः** भर्त्सितः । **कुलपालिकाजनः** कुलस्त्रीजनः । **कातर्यम्** भीतिम् । **नैसर्गिकम्** स्वाभाविकम् । **शीलम्** सदाचारम् । **उपपन्नम्** युक्तम् । **उपनयति** आनयति । सरसानि आर्द्राणि ।

**अत्रिः**— (स्मृतिमभिनीय ।) मदनानलेनैव । यतः दृष्टं हि मया समाधिस्थेन ।

जनकनृपतिकन्या जातु निद्रां भजन्ती
स्मरमिव रुचिराङ्गं वीरमालोक्य रामम् ।
अरतिरखिलकृत्ये चेतसा तद्गतेन
श्रयति सहचरीभिः पालिता पुष्पशय्याम् ॥

भवतु जनकसमीपमेव तावदुपगच्छावः ।

(इति निष्क्रान्तौ । )

**शुद्धविष्कम्भः** ॥

(ततः प्रविशति सारणेन विद्युज्जिह्वेन च दशाननः ।)

**दशाननः**—

यदीयं सौन्दर्यं जनयति रतेरप्यवमतिं
यया चाविर्भूतं जनकनृपतेर्देवयजनात् ।

कमलिनीदलानि पद्मपत्राणि । मृणालानि बिसानि । **मदनानलेन** कामाग्निना । प्रौढस्य गाढस्य आतपस्य लङ्घनेन आक्रमणेन वा । बलवत् दृढं यथा तथा । अस्वस्था रुग्णा । **समाधिस्थेन** ध्यानास्थितेन । **जनकेति** ॥ जनकनृपतिकन्या सीता जातु कदाचित् निद्रां भजन्ती सती । स्मरं काममिव रुचिराङ्गं सुन्दरावयवम् । ( उपमालङ्कारः ) वीरं रामं आलोक्य । तद्गतेन तं रामं गतेन प्राप्तेन चेतसा मनसा युक्ता । अतएव अखिलकृत्ये सर्वकार्ये अरतिः प्रीतिरहिता सहचरीभिः सखीभिः पालिता शिशिरोपचारादिभिः रक्षिता च सती । पुष्पशय्यां श्रयति 'चक्षुः प्रीतिर्मनः सङ्गस्सङ्कल्पोथ प्रलापिता । जागरः कार्श्यमरतिर्लज्जात्यागोथ संज्वरः । उन्मादोमूर्च्छनञ्चैव मरणञ्चरमं विदुः। अवस्थाद्वादशमताः कामशास्त्रानुसारतः' इत्युक्तासु द्वादशमन्मथावस्थासु चक्षुः प्रीति मनस्सङ्गारतिसंज्वरा अत्र कथिताः । मालिनीवृत्तम् ॥ १ ॥

**यदीयमिति** ॥ यस्याः सीतायाः इदं यदीयं सौन्दर्यं रतेः कामपत्न्या अपि अवमतिं परिभवं जनयति । किञ्च यया सीतया जनकनृपतेः देवयजनात् यज्ञभूमेः

मम द्रष्टुं शक्या युवतिरियमद्येति मनसः
परीणामः कोपि स्फुरति ननु हर्षाद्भुतमयः ॥ २ ॥

तदिह सारण कथय कथमेन पथा कौशिकाश्रमवाटमुपगच्छामः ।

**सारणः**—नन्वनेन दक्षिणतो विकङ्कताटवेरुत्तरतः किंशुकारण्यस्य ।

**विद्यु.**—महाराज इतइतो भवान् । ( सर्वे परिक्रामन्ति । )

**दशाननः**—सारण किमस्ति कौशिकीतीरेऽपि नन्दनवनम् ।

**सारणः**—न हि न हि ।

रसालानामन्तर्मदकलरणत्कोकिलकुलं
समन्तादुन्मीलद्बकुळमुकुळामोदभरितम् ।
घनस्निग्धच्छायक्रमुककदळीशीतिलतलं
ननु प्रीतिं धत्ते नवमिदमृषेराश्रमपदम् ॥ ३ ॥

---

आविर्भूतं प्रादुर्भूतं भावे क्तः सेयं युवतिः तरुणी सीता अद्य मम मया द्रष्टुं शक्या कृत्यानाङ्कर्तरि वा इति षष्ठी । इति मनसः हर्षाद्भुतमयः आनन्दाश्चर्यप्रचुरः । कोपि अनिर्वचनीयः परीणामः परिपाकः स्फुरति राजति ननु नन्वित्यवधारणे आमन्त्रणे वा शिखरिणीवृत्तम् ॥ २ ॥

**आश्रमवाटं** आश्रमस्थानम् । **विकङ्कताटवेः** स्रुवावृक्षवनस्य । **किंशुकारण्यस्य** पलाशवनस्य । **रसालानामिति** ॥ रसालानां चूतानां अन्तः मद्ध्ये मदेन यौवनमदेन फलरसभक्षणजातमदेन वा कलं अव्यक्तमधुरं यथा तथा रणत् शब्दायमानं कोकिलकुलं पिकसमूहः यस्मिंस्तत् । समन्तात् सर्वतः उन्मीलतां विकसतां बकुलमुकुलानां आमोदेन परिमलेन भरितं निबिडं घना अधिका स्निग्धा मसृणा च्छाया यासान्ताभिः क्रमुककदलीभिः पूगैः कदलीभिश्च शीतलतलम् । नवं नूतनं ऋषेः इदं आश्रमपदं प्रीतिं धत्ते करोति ननु । काव्यलिङ्गमलङ्कारः । शिखरिणीवृत्तम् ॥ ३ ॥

विदू.—अहो रामणीयकं मुनेराश्रमस्य । इह हि ।

पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि
स्पन्दन्ते राजरम्भाः फलभरनमितावातिमन्दानिलोपि ।
सन्दृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला
भारेणामीफलानां युवति-कुचभरस्पर्धिनो नालिकेराः ॥४॥

( नेपथ्ये । )

जावचित्तळेहणणिमित्तं पिअसही सीळवदी चित्तसंभारं आणेदुं गदा । सुअरिदा अ सिसिरोवआरणिमित्तं णळिनीपत्ताइ । तदो आरहिअ विअणंति करिअ बळीअं खु मम्महो बाहेइ । कागई ।

दशाननः—( आकर्ण्य । )

निनदः पिकाङ्गनायाः कबलितमाकन्दकन्दळकषायः ।
आकर्ण्यते रतिपते कल इव भोगावलीपाठः ॥ ५ ॥

---

१. यावच्चित्रलेखननिमित्तं प्रियसखी शीलवती चित्रसम्भारमानेतुं गता । सुचरिता च शिशिरोपचारनिमित्तं नळिनीपत्राणि । तत आरभ्य विजनमिति कृत्वा बलीयः खलु मन्मथो बाधते । का गतिः ।

---

रामणीयकं रमणीयस्य भावः रामणीयकम् । पक्वानीति ॥ उच्छ्रितानां उत्तुङ्गानां क्रमुकविटपिनां पूगवृक्षाणां पक्वानि फलानि प्रच्यवन्ते गलन्ति फलानां भरेण भारेण नमिताः अवनमिताः राजरम्भाः श्रेष्ठकदल्यः स्पन्दन्ते किञ्चिच्चलन्ति मन्दानिलः मन्दमारुतोपि वाति वहति रसालाः सहकाराः विपाकेन विशिष्टपाकेन च्युतैः गलितैः मधुरैः फलैः व्याप्तं मूलं येषान्तथोक्ताः सन्दृश्यन्ते । अमी नालिकेराः फलानां भारेण युवतीनां कुचभरैः ताच्छील्येन स्पर्धन्त इति तथोक्ताः युवति-कुचभरसदृशाः ( उपमालङ्कारः ) सन्दृश्यन्ते । स्रग्धरावृत्तं 'म्रभ्नैर्यानान्त्रयेणात्रिमुनियतियुतास्रग्धरा कीर्तितेयं' इति तल्लक्षणात् ॥ ४ ॥

विजनं सख्योरभावान्निर्जनस्थलमिदम् । बलीयः अतिशयेन बलवद्यथा तथा । का गतिः किं शरणम् । निनदइति ॥ कबलितैः भक्षितैः माकन्दस्य

**सारणः**—महाराज नायमभिव्यक्तवर्णरमणीयः पिकशब्दः । अपि तु मन्ये शारिका व्याहरतीति ।

(पुनर्नेपथ्ये ।)

¹भअवं कुसुमाउह एक्कवारंवि आळेख्ख लिहिदं तं पिअअणं दट्ठूण तदो मए तुह किदे पाणा विसंजअंदि । ता खणमेत्थं मरिसेहि ।

**दशाननः**—(आकर्ण्य ।) काचिदियमविसोढप्रियतम–विरहपरवशा विलपति तपस्विनी । तत्परितोपि दृश्यतां केयमिति ।

न विशिष्यते यदुक्तिर्मदकलपिकशारिका–निनदात् ।
रूपेण च भवितव्यं तस्मात्त्रैलोक्यरुचिरेण ॥ ६ ॥

१. भगवन्कुसुमायुध एकवारमप्यालेख्य लिखितं प्रियजनं दृष्ट्वा ततो मया तव कृते प्राणा विसृज्यन्ते । तस्मात्क्षणमात्रं मर्षय ।

---

रसालस्य कन्दलैः पल्लवाङ्कुरैः कषायः मधुरः अतएव रतिपतेः कामस्य कलः अव्यक्तमधुरः भोगावलीपाठ इव 'आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका । अष्टभिर्वा चतुर्भिर्वा वाक्यैस्स्कन्धसमन्विता । प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपान्विता । सर्वतोदेवशब्दादिरेषा भोगावलीमता' इत्युक्तलक्षणभोगावल्याख्यक्षुद्रप्रबन्धस्य पठनमित्युत्प्रेक्ष्यमाणः पिकाङ्गनानायाः कोकिलस्त्रियः निनदः ध्वनिः आकर्ण्यते श्रूयते । आर्यावृत्तम् ॥ ५ ॥

**अभिव्यक्तः** सर्वतः स्फुटः । **शारिका** पक्षिभेदः । **एकवारं** सकृत् । **आलेख्यं** चित्रम् । **मर्षय** सहस्व । **अविसोढेति** ॥ अविसोढः न सोढः प्रियतमस्य विरहः तेन परवशा अस्वतन्त्रा तपस्विनी शोच्या । **नेति** ॥ यस्याः उक्तिः मदेन कलात् अव्यक्तमधुरात् पिकशारिकयोः निनदात् ध्वनेः । न विशिष्यते न भिद्यते । तन्निनदसमाना भवतीत्यर्थः (उपमालङ्कारः) तस्याः रूपेण आकृत्या त्रैलोक्यरुचिरेण त्रिभुवनसुन्दरेण भवितव्यम् । अनुमानालङ्कारः । आर्यावृत्तम् ॥ ६ ॥

**सारणः**—यदाज्ञापयति देवः । ( इति परिक्रम्य पुनः प्रविश्य । सविस्मयम् । ) महाराज न क्वापि किञ्चिदस्ति येनेदं व्याहृतम् ।

**दशाननः**—(साश्चर्यम् । स्वयमुत्थाय विलोक्य । ) हन्त न किञ्चिदत्र । कथमेतत् । महदिदमाश्चर्यस्थानम् ।

( पुनर्नेपथ्ये । )

णिक्करुणो[1] मअणो मं साणुणअं पत्थिदोवि बाहेइ ।

**सारणः**—अहो पुनरपि निरालम्बा वाणी ।

**दशाननः**—हन्त कथमनभ्रा सुधावृष्टिः ।

**विद्यु.**—अचिन्त्यमहिमा हि तपस्विनामाश्रमव्यापारः ।

( पुनर्नेपथ्ये । )

सेरणमज्ज[2] विसं वा

**सर्वे**—( आकर्ण्य । ) निश्चितेयमस्मादृशामदृश्या काचिदुत्कण्ठिता विलपति ।

( प्रविश्य पटाक्षेपेण । मृणालनालिनीपत्त्रहस्ता सुचरिता। )

**सुचरिता**—हळा[3] मा एव्वं असोहणं भण ।

१. निष्करुणो मदनो मां सानुनयं प्रार्थितोऽपि बाधते ।

२. शरणमद्य विषं वा

३. सखि मैवमशोभनं भण ।

**व्याहृतं** उक्तम् । **हन्त** आश्चर्यम् । **निष्करुण इति** निष्करुणः निर्दयः मदनः कामः सानुनयं सोपचारं यथा तथा । प्रार्थितोऽपि मां बाधते [ **निरालम्बा** निराश्रया । अनभ्रा मेघरहिता सुधावृष्टिः अमृतवर्षं 'लोकोक्तिरियं'] **शरणमिति** ॥ अद्य विषं वा शरणं रक्षकं विषपानस्य मृतिद्वारा विद्यमानदुःखानिवर्तकत्वादिति भावः ( **उत्कण्ठिता** प्रियविषयकोत्कालिकायुक्ता । **विलपति** विलापं करोति । **प्रविश्य पटाक्षेपेणेति** ॥ पात्रस्यासूचितत्वात् एवं कथनम् । पटस्य

( ततः प्रविशति किसलयशयनोपविष्टा सीता । )

**सीता**—[1]पिअअणमुहचंददंसणसुहं वा ॥७ ॥ (इति मूर्च्छति । )

**सुचरिता**—[2]हला, समस्ससिहि समस्ससिहि । (इति नलिनीदलेन वीजयति । )

**दशाननः**—

सा नूनं नळिनेक्षणा प्रियजनं व्याहृत्य मोहं गता
येनाली नलिनीदलेन सहसा तां वीजयत्यन्तिके ।
एनां द्रष्टुमनङ्गतापविधुरां भाग्यं न मे वर्तते
यद्वा किं व्यसनेन वज्रमणिरप्यस्याः स्फुटेदीक्षणे ॥ ८ ॥

**सारणः**—सा तु न दृश्यते सहचरी तु दृश्यत इति महदिदमाश्चर्यम् ।

१. प्रियजनमुखचन्द्रदर्शनसुखं वा ॥

२. सखि समाश्वसिहि समाश्वसिहि ।

---

यवनिकायाः आक्षेपेण क्षेपणेन । **मा भण** मा वद । **किसलयं** पल्लवं) **प्रियेति**॥ प्रियजनस्य मुखचन्द्रस्य दर्शनेन जातं सुखं वा शरणम् । सर्वसन्तापनिवर्तकत्वादिति भावः । विकल्पालङ्कारः ॥ ७ ॥

**वीजयति** वीजनङ्करोति । **सेति** ॥ सा नळिनेक्षणा कमलनयना स्त्री प्रियजनं व्याहृत्य विलप्य नूनं ध्रुवं मोहं गता मूर्च्छिता । येन कारणेन आली तस्यास्सखी सहसा अतर्कितं यथा तथा । अन्तिके समीपे नलिनीदलेन तां वीजयति । अनङ्गतापेन कामाग्निसन्तापेन विधुरां विगतकार्यभरां एनां द्रष्टुं मे भाग्यं न वर्तते यद्वा अथवा व्यसनेन एतद्दर्शनोत्कण्ठया किं न किमपि प्रयोजनमित्यर्थः प्रत्युत विरुद्धं प्रयोजनम्भवेदित्याह—अस्याः एतादृशास्थितियुक्तायाः ईक्षणे दर्शने वज्रमणिः सर्वभेदकवज्ररत्नमपि स्फुटेत् विदीर्णो भवेत् । शार्दू... ॥ ८ ॥

**त्रिशु.**—क्रमेण तदपि ज्ञास्यामः ।

**सुचरिता**—हंद्धि हद्धि,[1] अदिभूमिं गदो से संदावो । ता दाणिं चंदणपल्लवरसेहिं सिंचेमि णम् ।

(इति कराभ्यां चन्दनपल्लवानि निष्पीडयति ।)

**दशाननः**—

चन्दनकिसलयनिकरः सख्याः करयन्त्रपीडितो नूनम् ।
वपुषो मृगशावाक्ष्या मार्दवमपहृतमनेनेति ॥ ९ ॥

**सुचरिता**—(निषिच्य ।) [2]हेला, दे सुहअंदी एदे चंदणरसणिषेआ ।

**सीता**—(कथंचित्समाश्वस्य ।) [3]केत्तिअं कालं एव्वं सहीणं आआसआरिणी होह्मि ।

**सुचरिता**—[4]हेला, दाणिं तुह वल्लहो आआमिणिदिणे आअमिस्सदित्ति सुणिअदि ।

**सारणः**—कः पुनरस्या वल्लभः ।

१. हा धिक् हा धिक् । अतिभूमिं गतोऽस्यास्सन्तापः । तस्मादिदानीं चन्दनपल्लवरसैस्सिञ्चाम्येनाम् ।

२. सखि ते सुखयन्त्येते चन्दनरसनिषेकाः ।

३. कियन्तं कालमेवं सखीनामायासकारिणी भवामि ।

४. सखीदानीं तव वल्लभो आगामिनिदिने आगमिष्यतीति श्रूयते ।

**अतिभूमिं** सीमातिगप्रदेशम् । निष्पीडयति विमर्दयति । **चन्दनेति** ॥ मृगशावाक्ष्याः बालहरिणनयनायाः अस्याः वपुषः शरीरस्य मार्दवं मृदुत्वं अनेन चन्दनकिसलयनिकरेण अपहृतमिति मत्वा चन्दनकिसलयस्य निकरः समूहः सख्याः करएव यन्त्रं तेन पीडितः घट्टितः नूनम् । सश्लेषोत्प्रेक्षालङ्कारः ॥ ९ ॥

**सुखयन्ति** सुखं कुर्वन्ति । सुखायन्त इति पाठे सुखं वेदयन्तइत्यर्थः । निषेकाः नितरां सेचनानि । **आगामिनिदिने** आगमिष्यति दिने श्वइत्यर्थः ।

**दशाननः**—यः कृतपुण्यः।

**सीता**—[1]अज्ज खु जीवंदीए आआमिदिणं पत्थणिज्जम्।

**दशाननः**—

येनायमुत्पलाक्ष्याः क्षणमप्यविषह्यवेदनो मदनः।
स तु धन्योऽपि न धन्यो यदेवमस्यामुदासीनः॥ १०॥

**सुचरिता**—[2]हला, मा एव्वम्। आलेक्खलिहिदं वल्लहं दिट्ठूण एदं एक्कं दिणं अदिवाहिअदु।

(ततः प्रविशति चित्रसम्भारहस्ता शीलवती।)

**शीलवती**—[3]हला, एदं चित्तफलअं इमे चित्तसंभाराओ।

(इत्यर्पयति।)

**सुचरिता**—[4]कहं वि धेरं गह्णीअ आलिहदु पिअसहि।

(सीता नाट्येन चित्रफलकं गृहीत्वा गात्रस्तम्भं नाटयति।)

**सुचरिता**—[5]हला, किं चिन्तेसि।

**शीलवती**—[6]सुअरिदे, किं पुच्छिदव्वं, जो महाणुहावो सेविणए दंसिदो मअणेणं।

१. अद्य खलु जीवन्त्या आगामिदिनं प्रार्थनीयम्।
२. सखि मैवम्। आलेख्यलिखितं वल्लभं दृष्ट्वा एतदेकं दिनमतिवाह्यताम्।
३. सखि एतच्चित्रफलकं इमे चित्रसम्भाराः।
४. कथमपि धैर्यं गृहीत्वा आलिखतु प्रियसखी।
५. सखि किं चिन्तयसि।
६. सुचरिते किं प्रष्टव्यं यो महानुभाव स्वप्ने दर्शितो मदनेन।

**येनेति**॥ येन पुरुषेण उत्पलाक्ष्याः नीलोत्पलतुल्यनयनायाः अस्याः अयं मदनः कामः क्षणमपि अविषह्या सोढुमशक्या वेदना उपद्रवः यस्य तथाभूतोऽस्ति। स तु सः पुरुषः पुनः। धन्यः पुण्यवानपि। यत् यस्मात् अस्यां एवं उदासीनः पराङ्मुखः। तस्मात् सः धन्यः न। उपमा विरोधाभासकाव्यलिङ्गान्यलङ्काराः॥१०॥

**अतिवाह्यतां** अतिवाहितं क्रियताम्। **गात्रस्तम्भं** अङ्गस्थैर्यम्। **दिष्ट्या**

सारणः—महाराज, दिष्ट्या वर्धसे । त्वामन्तरेण भुवनेषु कोऽन्यो महानुभावः ।

दशाननः—अस्ति मे कुतूहलम् । उपर्यपि पश्यामः ।

सीता—

मुत्ता लज्जा गुरुई गहिदं धीरत्तणं पआसेण ।
जर दे लहेहि दाणिं पुण्णं खणमेत्तदाणेण ॥ ११ ॥

(इति कथंचिल्लिखति ।)

दशाननः—

यथा रेखान्यासो विमलमधुराश्लिष्टफलके
दृशोः प्रत्यासङ्गादविकलगृहीतः प्रतिपदम् ।
तथा कर्णग्राह्यः कमलदृशमेनां प्रियतमं
लिखन्तीमालेख्ये कथयति मृदुः कङ्कणरवः ॥ १२ ॥

सीता—हला सुअरिदे, दुल्लहजणलेहणप्पआसेण किं पओअणं त्ति लज्जइ मे हिअअम् (इत्यश्रूणि मुञ्चति)

---

१. मुक्ता लज्जा गुर्वी गृहीतं धीरत्वं प्रयासेन ।
ज्वर ते लभस्वेदानीं पुण्यं क्षणमात्रदानेन ॥

२. सखि सुचरिते, दुर्लभजनलेखनप्रयासेन किं प्रयोजनमिति लज्जते मे हृदयम् ।

---

आनन्दे । त्वामन्तरेण त्वां विहाय । **मुक्तेति** ॥ गुर्वी अधिका लज्जा मुक्ता । प्रयासेन प्रयत्नेन धीरत्वं धैर्यं गृहीतम् । हे ज्वर कामसन्ताप इदानीं ते तव क्षणः निर्व्यापारस्थितिरेव क्षणमात्रं तस्य दानेन पुण्यं लभस्व ॥ ११ ॥

**यथेति** ॥ चित्रफलके विमलः स्वच्छः मधुरः रम्यः प्रत्यासङ्गात् सम्बन्धात् अविकलं पूर्णं यथा तथा गृहीतश्च रेखान्यासः रेखाविन्यासः एनां कमलदृशं पद्माक्षीं नारीं आलेख्ये चित्रे प्रियतमं लिखन्तीं यथा कथयति अनुमापयति । तथा कर्णाभ्यां ग्राह्यः ग्रहीतुं योग्यः मृदुः (अस्याः) कङ्कणरवः एनां कमलदृशं आलेख्ये प्रियतमं लिखन्तीं कथयति । अनुमानालङ्कारः उपमा च । शिखरिणी वृत्तम् ॥ १२

**दशाननः**—नूनमियं रोदिति ।

यदनुज्झितलोचनाञ्जनो विगलत्यात्तकपोलकुङ्कुमः ।
अरविन्दपरागरूषितभ्रमरश्रीरयमश्रुशीकरः ॥ १३ ॥

**सुचरिता**—[1]हला, अलं रोदणेण । सुलहो एव्व सो जणो ।

( सीता मुखमुन्मृज्य पुनर्लिखति । )

**शीलवती**—( अपवार्य । ) [2]हेला सुअरिदे, पिअसहीए बलवन्तो एव्व तस्सिं जणे अहिणिवेसो, जं पुलइदकवोलमण्डलं सुमरिअ सुमरिअ पकम्पिदङ्गुलिदलं लिहिअ लिहिअ हरिसपप्फुल्लेहिं लोअणेहिं णिज्झाअइ ।

**सुचरिता**—[3]जह सिविणए दिट्ठो तह लिहिदव्वो त्ति से अहिलासो ।

---

१. सखि अलं रोदनेन । सुलभ एव स जनः ।

२. सखि सुचरिते प्रियसख्याः बलवानेव तस्मिन् जनेभिनिवेशः । यत्पुलकितकपोलमण्डलं स्मृत्वा स्मृत्वा प्रकम्पिताङ्गुलिदलं लिखित्वा लिखित्वा हर्षप्रफुल्लाभ्यां लोचनाभ्यां निध्यायति ।

३. यथा स्वप्ने दृष्टस्तथा लिखितव्यइत्यस्या अभिलाषः ।

---

**यदिति** ॥ यत् यस्मात् कारणात् अनुज्झितं अत्यक्तं लोचनाञ्जनं येन सः । आत्तं गृहीतं कपोलकुङ्कुमं येन सः । अतएव अरविन्दस्य पद्मस्य परागेण रजसा रूषितस्य लिप्तस्य भ्रमरस्य भृङ्गस्य श्रीरिव श्रीः शोभा यस्य तथाभूतः अयं अश्रुशीकरः बाष्पबिन्दुः विगलति निपतति । ततइयं रोदितीति पूर्वेण सम्बन्धः । निदर्शनालङ्कारः । चम्पकमालिका वृत्तम् । तल्लक्षणन्तु—'विषमे ससजा गुरुस्समे सभराश्चम्पकमालिका लगौ' इति ॥ १३ ॥

**उन्मृज्य** अपगतबाष्पं कृत्वेत्यर्थः । अपवार्य अपवारितं कृत्वा । तल्लक्षणन्तु—'रहस्यं कथ्यतेन्यस्य परावृत्यापवारितम्' इति । **यदिति** ॥ पुलकितं रोमाञ्चितं कपोलमण्डलं गण्डप्रदेशः यस्मिन् कर्मणि तद्यथा भवति तथा प्रकम्पितानि अधिककम्पयुक्तानि अङ्गुलिदलानि पद्मदलसदृशाङ्गुलयः यस्मिन् कर्मणि तद्यथा भवति तथा । हर्षप्रफुल्लाभ्यां सन्तोषेण विकसिताभ्याम् । निध्यायति

**दशाननः**—(आकर्ण्य ।) हृदय, किमस्थाने चपलमासे । पश्य पुरस्तादपि ।

**सीता**—(विलिख्य । चित्रं दृष्ट्वा । आत्मगतम् ।)

केंदोट्ठसामलङ्गो कण्णंताणिविट्ठरत्तणयणंतो ।
अदिदीहपीवरभुओ कहं वि सो एव्व तारिसो लिहिदो ॥ १४ ॥

(सहर्षं । संस्कृतमाश्रित्य ।) इदमिदानीम् ।

पाणौ कार्मुकमाकलेयमिषुधी पाश्चात्ययोरंसयो-
भस्मस्तोकमुरःस्थले कटितटे मौञ्जीमयीं मेखलाम् ।
किंचाहं वदनारविन्दमधुपश्रेणीमनोहारिणी-
मस्य श्मश्रुपरंपरामभिनवां कुर्यां कपोलस्थले ॥ १५ ॥

(इति पुनर्लिखति ।)

---

१. उत्पलश्यामलाङ्गः कर्णान्तनिविष्टरक्तनयनान्तः ।
अतिदीर्घपीवरभुजः कथमपि स एव तादृशो लिखितः ॥

---

पश्येति । अस्थाने अकारणे । **उत्पलेति** ॥ प्राकृते उत्पलशब्दस्य कन्दोट्ठादेशः । उत्पलवत् नीलोत्पलवत् श्यामलाङ्गः (उपमालङ्कारः) कर्णान्तयोः निविष्टौ स्थितौ रक्तौ नयनान्तौ यस्य सः । अतीदीर्घौ पीवरौ पीनौ भुजौ यस्य सः । स एव स्वप्ने दृष्ट एव तादृशः तथाविधः कथमपि अधिकप्रयासेन लिखितः ॥ १४ ॥

**संस्कृतमाश्रित्य** 'वेश्यानामप्सरसामन्तःपुरिकासु पौरवनितानाम् । संस्कृतमपि योज्यं स्यात् प्रस्तावेनागतं किंचित्' इत्युक्तत्वात्संस्कृताश्रयणम् । **पाणाविति** ॥ अहं अस्य पाणौ कर्मणे प्रभवतीति कार्मुकं धनुः आकलेयं लिखेयम् । चुरादिणिचः पाक्षिकत्वादाकलेयमिति सिद्ध्यति । अस्य पश्चाद्भवौ पाश्चात्यौ जघन्यौ तयोः अंसयोः भुजशिखरयोः । इषुधी तूणीरौ आकलेयं अस्य उरःस्थले वक्षःस्थले स्तोकं अल्पं भस्म भसितं आकलेयं अस्य कटितटे मुञ्जाः तृणविशेषास्तएव मौञ्ज्याः । प्रज्ञाद्यण् । स्त्रीत्वविवक्षायां कुम्भीत्यादिवत् बह्वादेराकृतिगणत्वाद्ङीष् । तद्विकृतां मौञ्जीमयीं मेखलां रशनां आकलेयं किञ्च अस्य कपोलस्थले वदनं मुखं अरविन्दं पद्ममिव तत्र मधुपश्रेणीं भृङ्गपङ्क्तिमिव मनोहारिणीं रम्यां अभिनवां

**दशाननः**—( चित्रं दृष्ट्वा । निश्वस्य । आत्मगतम् । ) कथमिदमन्यथा वर्तते । हृदय, वृथा ते मनोरथः ।

**सीता**—(विलिख्य । चित्रगतं नायकं प्रत्यञ्जलिं बद्ध्वा । संस्कृतमाश्रित्य ।) अयि कान्त, संप्रति हि ।

मयि मलयसमीरो वर्षतीव स्फुलिङ्गान्
अहह हिमकरो मामग्निना सिञ्चतीव ।
किमिव मकरकेतोः कर्म वक्ष्ये कठोरं
कथमपि तदहं ते नाथ नोपेक्षणीया ॥ १६ ॥

अपि च । मानद, ( इत्यर्धोक्ते । आत्मगतम् । ) कहं आलेक्खगअं पिअजणं परमत्थोत्ति गह्णीअ मए विमुद्धाए उवालद्धुं पउत्तं ।

( इति संवरणं नाटयति । )

१. कथमालेख्यगतमपि प्रियजनं परमार्थ इति गृहीत्वा मया विमूढया उपालब्धुं प्रवृत्तम् ।

नूतनां श्मश्रुपरम्परां श्मश्रुपङ्क्तिम् । कुर्यां लिखेयम् । ननु 'मौञ्जी मेखला त्रिवृद्ब्राह्मणस्य । ज्या राजन्यस्य आवीसूत्रं वैश्यस्य ' इति वचनैः । क्षत्रियब्रह्मचारिणः मौर्वी मेखलैव विहिता न तु मौञ्जीति चेत्सत्यं तथापि "मौञ्जीवायोमिश्रा" इति वचनेन क्षत्रियस्य पाक्षिकतया मौञ्जीविधानान्नदोषः । शार्दू ... ॥ १५ ॥

**अयीति** ॥ कोमलामन्त्रणे । **मयीति** मयि मलयसमीरः मलयमारुतः शैत्यादिविशिष्टोपि स्फुलिङ्गान् अग्निकणान् वर्षतीव (अत्रोत्तरत्र चोत्प्रेक्षा) अहह कष्टं हिमकरः चन्द्रः हिमकिरणयुक्तोपि मां अग्निना सिञ्चतीव (अत्र पूर्वत्र च विरोधाभासश्च कामिनामुद्दीपकत्वात्तथोक्तिरिति परिहारः) मकरकेतोः मीनध्वजस्य कठोरं कठिनं कर्म किमिव अनुपमहिंस्रत्वात् केन घातुकेन कर्मणा तुल्यं वक्ष्ये कथयिष्यामि । तत् तस्मात् हे नाथ अहं ते कथमपि नोपेक्षणीया त्वया कृच्छ्रादपि रक्ष्या न तूपेक्ष्येति भावः । मालिनीवृत्तम् ॥ १६ ॥

**मानद** मानः प्रियस्यान्यासङ्गादिजनिता प्रियाया चित्तसमुन्नतिः तन्ददातीति मानदः तस्य सम्बुद्धिः । अर्धं उक्तस्य अर्धोक्तं तस्मिन् । **उपालब्धुं**

**शीलवती**—( विहस्य । ) हला, सावसेसं विअ तुह वअणम् ।

**सीता**—( सलज्जम् । ) हलां, ण किं वि अवसिस्सइ । लिहिदो एव्व सो जणो ।

**सख्यौ**—( चित्रं दृष्ट्वा । अन्योन्यं प्रति । ) सहि, जह चित्तगअस्स एदस्स आकिदी तह मण्णे उइदो पिअसहीए अहिणिवेसो त्ति ।

**सारणः**—( दृष्ट्वा साश्चर्यम् । )

एतत्पद्मदलेक्षणं मुखमिमौ बाहू युगव्यायता-
वत्याभोगमिदं भुजान्तरमयं मध्यः प्रकामं तनुः ।
साम्राज्योचितचिह्नमुद्रितमिदं द्वन्द्वं पुनः पादयोः
को नामैष जगत्त्रयेऽपि न पुरा दृष्टः पुमानीदृशः ॥१७॥

**दशाननः**—( आत्मगतम् । )

नवकुवलयदामश्याममस्येदमङ्गं
घटयितुमलमक्ष्णोरुत्सवं विद्विषोऽपि ।

---

१. सखि सावशेषमिव तव वचनम् ।

२. सखि न किमप्यवशिष्यते लिखित एव सजनः ।

३. सखि यथा चित्रगतस्य एतस्य आकृतिस्तथा मन्ये उचितः प्रियसख्या अभिनिवेश इति ।

---

अधिक्षेप्तुं **संवरणं** आकारगोपनम् । **एतदिति** ॥ एतत् मुखं पद्मदले इव ईक्षणे नयने यस्य तत् ( अत्रोत्तरत्र चोपमा) इमौ बाहू युगं हलाङ्गं तद्वत् व्यायतौ दीर्घौ इदं भुजान्तरं वक्षः अत्याभोगं अत्यन्तविस्तृतं अयं मध्यः मध्य प्रदेशः प्रकामं भृशं तनुः कृशः इदं पादयोः द्वंद्वं द्वयं पुनः सम्राजो भावस्साम्राज्यं अखण्डमण्डलाधिपत्यं तस्य उचितानि अनुगुणानि चिह्नानि लक्षणानि तैः मुद्रितं अङ्कितं तस्मात् जगत्त्रयेपि पुरा न दृष्टः ईदृशः एवंविधः एषः पुमान् को नाम कस्स्यात् नामेति सम्भावनायाम् । शार्दू ..॥ १७ ॥

**नवेति** नवं नूतनं कुवलयदाम नीलोत्पलस्रक् तद्वत् श्यामं ( अत्रोपमा ) अस्य इदं अङ्गं विद्विषोपि शत्रोरपि ( किमुतमित्रस्येत्यर्थापत्तिध्वनिः ) अक्ष्णोः

प्रकृतिरियमुदारा साधुभिः श्लाघनीया
कथयति च महत्त्वं दुर्लभं यत्परेण ॥ १८ ॥

(प्रकाशम् ।) पश्य विद्युज्जिह्व, चित्रलिखितम् ।

**विद्यु.**—दृश्यत एवायम् । यं किल ।

महात्मानं ब्रूते युगलमरुणान्तं नयनयो-
रुरो भस्मस्तोकच्छुरितमथ वर्णीति वदति ।
युवानं व्याचष्टे विरलमधुरश्मश्रु वदनं
करः कोदण्डाङ्कः कथयति च राजन्य इति नः ॥ १९ ॥

**सीता**—सुअरिदे, पेक्खदु होदि । (इति चित्रं दर्शयति ।)

---

१. सुचरिते पश्यतु भवती ।

---

नयनयोः उत्सवं सन्तोषं घटयितु रचयितुं अलं समर्थम् । किञ्चास्य साधुभिः यद्वा असाधुभिः खलैरपि श्लाघनीया उदारा महती गम्भीरा प्रकृतिः स्वभावः आकृतिः यन्महत्त्वं परेण इतरेण दुर्लभं दुष्प्रापं तन्महत्त्वं महिमानं कथयति अनुमापयति । अनुमानालङ्कारः । मालिनीवृत्तम् ॥ १८ ॥

**यं किल** ॥ **महात्मानमिति** ॥ अरुणान्तं रक्ताञ्चलं नयनयोः युगलं द्वय यं महात्मानं अत्युन्नतस्वभावं ब्रूते कथयति किल । भस्मना समिदाधानभसितेन (न तु चन्दनादिना) स्तोकं असान्द्रं यथा तथा च्छुरितं लिप्तं अथ कृत्स्नं 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । उरः वक्षः यं वर्णीति ब्रह्मचारीति वदति । निपातेनेति शब्देन कर्मणोभिहितत्वात् वर्णीत्यत्र न द्वितीया किन्तु प्रथमा । विरलं अल्पं मधुरं रुचिरं श्मश्रु मुखलोम यस्मिंस्तत् वदनं मुखं यं युवानं अचिरप्राप्तयौवनं व्याचष्टे वदति किञ्च कोदण्डाङ्कः चापभूषितः करः यं राजन्य इति मूर्धाभिषिक्तक्षत्रियकुमार इति नः अस्मान् कथयति अनुमापयति नः इति सर्वत्र सम्बद्ध्यते कथनार्थकधातूनां द्विकर्मकत्वात् । मालारूपः अनुमानालङ्कारः । शिखरिणीवृत्तम् ॥ १९ ॥

**सुचरिता**—(विहस्य ।) हला किं मए पेक्खंदीए, जइ सो पिअ-जणो एदं सव्वं पेक्खइ । तदो तुह करकमलस्स पारितोसिअं रअण-कडअं अवमुञ्चेइ ।

**दशाननः**—सत्यमाह सुचरिता । यतः ।

न रेखाः सांकर्यं दधति न च वर्णव्यतिकरो

निवेशैरङ्गानामपि सरसभावो न विवृतः ।

किमन्यच्चैतन्यं जनितमिव चित्रे शुचितया

तदस्या वैदग्ध्यं जयति जगदानन्दयति च ॥ २० ॥

**शीलवती**—सुअरिदे, अहं भणामि । पिअसहीए करकोसलं उप्पे-क्खिअ तुए पुढमं एव्व से हत्थे कडअजुअलं आमोचिअम् । जं ता-

---

१. सखि किं मया पश्यन्त्या । यदि सप्रियजनः एतत्सर्वं पश्यति । ततस्तव करकमलस्य पारितोषिकं रत्नकटकमवमुच्येत ।

२. सुचरिते, अहं भणामि—प्रियसख्याः करकौशलमुत्प्रेक्ष्य त्वया प्रथममेवा-

---

**पारितोषिकं** परितोषः प्रयोजनमस्य पारितोषिकं उपायनं रत्नकटकं रत्नवलयं अवमुच्येत आमुक्तं स्वयं आबद्धं कुर्यात् । (कर्मकर्तरि लकारः) । **न रेखाइति** ॥ रेखाः साङ्कर्यं सङ्कीर्णतां नदधति न धारयन्ति वर्णानां शुक्लपीता-दीनां व्यतिकरः साङ्कर्यञ्च नास्ति अपि किंच अङ्गानां अवयवानां निवेशैः विन्यासैः रसभावः रसस्य श्रृङ्गारादेः भावः रत्यादिस्थायिभावः न विवृतः न प्रकटित इति न अपि तु विवृत एव । अन्यत वक्ष्यमाणादितरत् किम् । तया लेखित्र्या चित्रे शुचि शुद्धं निर्दुष्टं परमार्थमिति यावत् चैतन्यं चित्रलिखितस्य चेतनत्वं जनितमिव उत्पादितमिवेत्युत्प्रेक्षितम् । तत् तस्मात् अस्याः वैदग्ध्यं चित्रलेखनचातुर्यं जयति लोकोत्तरं वर्तते जगत् आनन्दयति च । उत्प्रेक्षा काव्यलिङ्गसमुच्चया अलङ्काराः । शिखरिणीवृत्तम् ॥ २० ॥

**कौशलं** सामर्थ्यम् । **आमोचितं** आबद्धम् । **तातकौशिकेन** जनक-

दकोसिएण रक्खणत्थं जाणईए हत्थे आमुञ्चेहि त्ति तुह हत्थे समप्पिदं आसि। जस्सिं रक्खसंधंकरणो णाम मणी।

(दशाननः सारणश्च श्रुत्वा परस्परं मुखमवलोकयतः।)

**विद्यु.**—(विहस्य।) श्रुतं च श्रोतव्यं विदितं वेदितव्यम्। इयं च सीता, अयं च रामः यास्माभिर्न दृष्टा। यश्चैतया लिखितः।

**दशाननः**—किमयमेव वैदेहीप्रणयावतारदुर्ललितो रामहतकः।

(सामर्षं चित्रं प्रति।)

मा गर्वं वह रघुवंशपांसन त्वं वैदेह्याः प्रणयपदं वपुर्ममेति।
मारीचस्तव निधनाय मत्प्रयुक्तस्त्वद्धाताद्विरमति किंनु तावतैव २१

**सारणः**—महाराज, पश्यतु भवानाविनयं कौशिकस्य—यदेवमस्यै राक्षसान्धंकरणमणिघटितं कटकमर्पितवान्। नूनमनेन दृष्टमात्रामेनामपहरिष्यति भवानीति तर्कितं भवेत्।

---

स्या हस्ते कटकयुगलमामोचितं। यत्तातकौशिकेन रक्षार्थं जानक्याः हस्ते आमोचयेति तव हस्ते समर्पितमासीत्। यस्मिन् राक्षसान्धंकरणो नाम मणिः।

---

तुल्येन विश्वामित्रेण। **आमोचय** आबद्धं कुरु। **राक्षसान्धंकरणः** अनन्धं अन्धं कुर्वन्त्यनेनेति अन्धङ्करणः 'आढ्यसुभग' इत्यादिना ख्युन्। राक्षसानां अन्धंकरणः राक्षसान्धङ्करणः। **मणिः** रत्नम्। **वैदेहीति** ॥ वैदेह्याः सीतायाः प्रणयावतारेण स्नेहोत्पत्त्या दुर्ललितः गर्वितः रामहतकः राम इति हतकः अशूरः 'अशूरो हतकः क्लीबः' इति यादवः। **मेति** ॥ हे रघुवंशपांसन रघुवंशापशद राम त्वं मम वपुः शरीरं वैदेह्याः प्रणयपदं स्नेहास्पदमिति गर्वं मा वह मा प्राप्नुहि माङर्थकः माशब्दोयं तेन 'माङि लुङ्' इति लुङ्न। तव निधनाय मरणाय मया प्रयुक्तः प्रेरितः मारीचः तावतैव सीताप्रणयास्पदवपुर्विशिष्टत्वमात्रेण। तव घातात् हननात् विरमति विरतो भविष्यति किन्तु न विरंस्यतीत्यर्थः। वर्तमानसामीप्ये भविष्यति लट्। प्रहर्षिणी वृत्तम् ॥ २१ ॥

**अविनयं** उद्धतत्वम्। अस्यै सीतायै। घटितं युक्तम्। अनेन कौशिकेन

विद्यु.—एवमेतत् । अभिज्ञः खल्वयं क्षत्रियब्राह्मणः !

दशाननः—(आकाशे लक्ष्यं बध्वा । सक्रोधहासम् ।) रे रे कौशिकापशद ।

स्रष्टुं द्यां चतुरोऽसि नाभिभवितुं मारीचमायोधने
रम्भां स्तम्भयितुं क्षमोऽसि न पुनर्जेतुं रणे ताटकाम् ।
शक्तस्त्रातुमसि त्रिशङ्कुमलसं वध्यं न मे राघवं
तन्मन्ये मयि विप्रियाचरणतो मर्तुं पुनश्चेष्टसे ॥ २२ ॥

सारणः—आः किमुच्यते 'मर्तुं पुनश्चेष्टसे' इति । मृत एवायम् ।

दशाननः—(सोत्कण्ठम् ।) तत्तिष्ठतु, जानकीं द्रष्टुमुपायश्चिन्त्यताम् ।

सारणः—दृष्ट एव मया ।

दशाननः—(सोत्साहम् ।) कथमिव ।

---

तर्कितम् । ऊहितम् । **आकाशे लक्ष्यं बध्वा** गगने वेधनीयं लक्ष्यमिव लक्ष्यं कौशिकं परिकल्प्य । **स्रष्टुमिति** ॥ रे रे अपशद नीच कौशिक द्यां अन्यं स्वर्गं स्रष्टुं जनयितुं चतुरः समर्थः असि आयोधने युद्धे मारीचं त्वद्वधाय मया प्रेरितं ताटकासुतं अभिभवितुं अवमन्तुं हन्तुमित्यर्थः । चतुरो नासि । रम्भां त्वत्तपोभङ्गाय देवैः प्रेषितां रम्भां स्तम्भयितुं शापात् शिलावत् स्तब्धां कर्तुं क्षमः शक्तः असि रणे (मया प्रेषितां) ताटकां जेतुं पुनः न क्षमोऽसि । अलसं मन्दं त्रिशङ्कुं रक्षितुं शक्तः असि । 'त्रिशङ्कुर्गुरुशापात्प्राप्तचण्डालभावः कौशिकं शरणं प्राप्य तेन सशरीरस्वर्गाय याजितः तत्तपोमहिम्ना स्वर्गमारुह्य देवैः पातितः कौशिकमाक्रुश्य तेन मध्येगगनपथमास्थाप्य रक्षित इति पौराणिकी कथा ' मे मया वध्यं हन्तुमर्हम् । 'कृत्यानां कर्तरि वा ' इति वा षष्ठी । राघवं त्रातुं शक्तः नासि । तत् तस्मात् कारणात् मयि विप्रियस्य अहितस्य आचरणतः आचरणात् मर्तुं पुनः प्राणान् त्यक्तुमेव चेष्टसे चेष्टां करोषि यतस इत्यर्थः । परिसङ्ख्यालङ्कारः । शार्दूलविक्रीडितवृत्तम् ॥ २२ ॥

आः इति कोपे 'आस्तुस्यात् कोपपीडयोः' इत्यमरः । सोत्कण्ठं

**सारणः**—(कर्णे ।) एवमिव । (इति कथयति ।)

**दशाननः**—(विहस्य) निपुणमुपक्रान्तम् । भवतु भवानायोध्यक-मुनिवेषेण कटकग्रहणाय ।

**सारणः**—तथा (इत्युत्थाय मुनिवेषेण प्रविशति ।) आयोध्यकोऽह-मध्वपरिश्रान्त्या विह्वलोऽस्मि । भोः भोः संभावयतु मां छायादानेन व्यजनपवनदानेन वा । (इति मूर्च्छां नाटयति ।)

**विद्यु.**—देव, सारणस्य कौशलम् । पश्य पश्य ।

बद्धश्लथपिङ्गजटः स्वेदकणक्लिन्नभस्मपुण्ड्रमुखः ।
निश्वसिति दण्डपाणिर्व्याकुलकृष्णाजिनोऽयमृषिः ॥ २३ ॥

**सीता**—(ससंभ्रमम् ।) आओज्झओ त्ति सुणिअदि । ता सुअरिदे संभावेहि बम्हणम् ।

**सुचरिता**—(उपसृत्य ।) बम्हण, विस्सामिअदु । (इति नलिनीदलेन वीजयति ।)

---

१. आयोध्यक इति श्रूयते । तस्मात्सुचरिते, संभावय ब्राह्मणम् ।

२. ब्राह्मण, विश्रम्यताम् ।

---

साभिलाषम् । **कर्णे एवमिवेति** ॥ मुनिवेषेण अस्यै रामागमनरूपप्रियमावेद्य अस्याःसकाशात्तत्कटकं पारितोषिकं ग्रहीष्यामीत्येवं रूपम् । **आयोध्यकः** अयोध्यायां भवः अध्वपरिश्रान्त्या । मार्गायासेन । विह्वलः शरीरधारणेप्यसमर्थः । सम्भावयतु सम्मानयतु । छायादानेन अनातपप्रदेशदानेन । व्यजनपवनस्य तालवृन्तवायोः दानेन वा । **बद्धेति** ॥ बद्धा पूर्वं नद्धा श्लथा पश्चाच्छिथिला पिङ्गा पिङ्गलवर्णा जटा यस्य सः । स्वेदकणैः घर्मजलशीकरैः क्लिन्नः सिक्तः भस्मपुण्ड्रः भसितकृतः रेखा त्रयरूपः तिलकविशेषः यस्मिंस्तत् मुखं यस्य सः । दण्डयुक्तः पाणिर्यस्य सः । व्याकुलं विक्षिप्तं कृष्णाजिनं कृष्णमृगचर्म यस्य सः अयं ऋषिः । निश्वसिति नितरां श्वासं करोति । आर्या वृत्तम् ॥ २३ ॥

**विश्रम्यतां** श्रमनिवृत्तिः क्रियताम् । **अकारणवत्सलया** निष्कारणं

मुनिः—(चक्षुषी उन्मील्य।) उज्जीवितोऽस्म्यहमकारणवत्सलया ननु भवत्या।

सुचरिता—(आत्मगतम्।)[१] दिट्ठिआ लद्धसण्णो बम्हणो। (प्रकाशम्।) को भवं कुदो एव्व आअमिअदि।

मुनिः—अस्ति खलु दशरथस्य राजर्षेः प्रथमः सूनुः।

सीता—(ससंभ्रमम्।)[२] किं तस्स।

दशाननः—(साभ्यसूयम्।) ताटकया मारीचेन विनिपातितः।

सुचरिता—[३]बम्हण, उवरि कहेहि।

मुनिः—शुष्यति मे जिह्वा।

दशाननः—(विहस्य।) किं न दीर्यते विपक्षकथनेन।

सीता—(सावेगम्।)[४] एसो अप्पिअं वत्तुकामो विअ दिस्सइ।

(इति विषादं नाटयति।)

शीलवती—[५]हला, बम्हणस्स जलपाणं णिव्वट्टेहि। सुणुमो सेसं वि वअणम्। (सुचरिता नलिनीपत्रपुटेन नदीजलमाहृत्य ददाति।)

मुनिः—न पिबामि स्त्रीजनदत्तमुदकम्।

---

१. दिष्ट्या लब्धसंज्ञो ब्राह्मणः। को भवान्, कुत एवागम्यते।

२. किं तस्य।

३. ब्राह्मण, उपरि कथय।

४. एषः अप्रियं वक्तुकाम इव दृश्यते।

५. सखि ब्राह्मणस्य जलपानं निर्वर्तय। शृणुमः शेषमपि वचनम्।

---

यथा तथा प्रीतिमत्या। दिष्ट्येत्यानन्दे। लब्धसंज्ञः प्राप्तचेतनः। **साभ्यसूयं** परोत्कर्षासहिष्णुत्वमभ्यसूया तया सहितं यथा तथा। **शुष्यति** शुष्का भवति। जिह्वा रसना। **न विदीर्यते** न भिद्यते। विपक्षस्य शत्रोः कथनेन नामकीर्तनेन। सावेगं ससंभ्रमम्। **विषादं** शोकम्। **निर्वर्तय** निष्पन्नं कारय। **सार्थं**

**सीता**—( सास्रम् । ) [1]सच्चं जलपाणविमुहो विसण्णो अअं बम्हणो, ता दुल्लहं पिअजणस्स जीविदं तक्केमि ।

**मुनिः**—( स्वगतम् । ) न केवलं तस्य । किं तु कौशिकस्यापि तदभिमानिनः । ( प्रकाशम् । ) अलमावेगेन । सत्यमुदकं न पिबामि स्त्रीजनदत्तं व्रतग्रहणेन ।

**सुचरिता**—[2]भअवं उपरि कहेहि ।

**सीता**—[3]दाणिं खु मे हिअअं जुलणस्स वा अमिदस्स वा अंदरे चिट्ठइ ।

**मुनिः**—नूनमिदानीमीदृशस्य मम दर्शनेन प्रियपुत्रौ पितरौ शोचिष्यतः ।

**विद्यु.**—( सोपहासम् । ) न केवलं तौ । किं तु विरुद्धवेषग्रहणेन सर्वापि राक्षसजातिः ।

---

१. सत्यं जलपानविमुखो विषण्णोऽयं ब्राह्मणः तस्माद्दुर्लभं प्रियजनस्य जीवितं तर्कयामि ।

२. भगवन् उपरि कथय ।

३. इदानीं खलु मे हृदयं ज्वलनस्य वा अमृतस्य वा अन्तरे तिष्ठति ।

---

सबाष्पम् । **विमुखः** अनुत्सुकः । **विषण्णः** विषादयुक्तः । **तदभिमानिनः** तस्मिन् रामे अभिमानिनः प्रेमवतः । अलमावेगेन । सम्भ्रमेण अलम् । सम्भ्रमं मा कुर्वित्यर्थः । **व्रतं** नियमः । **ज्वलनस्य** अग्नेः । अन्तरे मध्ये । **प्रियपुत्रौ** प्रियः पुत्रः ययोस्तौ । पितरौ मम मातापितरौ । शोचिष्यतः शोकमनुभविष्यतः ।

सीता—[1]किं इमिणा वअणेण समाउलस्स मे हिअअस्स।

शीलवती—[2]सच्चं एसो रक्खसो, जो एव्वं पिअसहीए उव्वेअं करिअ उवरि ण कहेइ।

मुनिः—(सभयम्। स्वगतम्।) कथं विज्ञातोऽहमनया। (विमृश्य।) नैतत्संभाव्यते (प्रकाशम्।) तस्याहं प्रियसखो रामभद्रस्य।

दशाननः—(विहस्य।) कः संदेहः। येन तं घातयितुं प्रथममारब्धम्।

सीता—[3]एदं वि णालं आसासस्स।

सुचरिता—[4]बम्हण, कहेहि कहेहि। किं एद्ध आअमणे पओअणम्।

मुनिः—सर्वं कथयिष्यामि वः। न खलु दशग्रीवपक्षपातिन्यो यूयम्।

सीता—(स्वगतम्।) [5]सच्चं एसो तस्स पिअजणस्स अब्भंदरो। जो एव्वं भणदि।

शीलवती—[6]हला सुअरिदे, दसग्गीवो णाम को एसो।

दशाननः—(सरोषम्।) धिङ्मूर्खे, त्रैलोक्यविजयिनं न जानासि।

---

१. किमनेन वचनेन समाकुलस्य मे हृदयस्य।

२. सत्यमेष राक्षसः। य एवं प्रियसख्याः उद्वेगं कृत्वा उपरि न कथयति।

३. एतदपि नालमाश्वासस्य।

४. ब्राह्मण, कथय कथय। किमत्रागमने प्रयोजनम्।

५. सत्यं एष तस्य प्रियजनस्याभ्यन्तरः। य एवं भणति।

६. सखि सुचरिते, दशग्रीवो नाम क एषः।

---

**समाकुलस्य** विषण्णस्य। **उद्वेगं** आवेगं 'इष्टानिष्टागमाज्जात आवेगश्चित्तसम्भ्रमः' इति। **घातयितुं** मारयितुम्। **आश्वासस्य** आश्वासनस्य। उद्वेगनिवर्तनस्येत्यर्थः। **दशेति** रावणे प्रेमवत्यः। **तस्य प्रियजनस्य** मत्प्रियस्य

मुनिः—

हराद्रेरुद्धर्ता हरिहयकिरीटार्चितपदः
कठोरस्कन्धाग्रप्रकटहरिचक्रव्रणकिणः ।
प्रपौत्रो यः साक्षात्त्रिभुवनविधातुर्भगवतो
दशग्रीवोऽयं वः कथमनवतीर्णः श्रुतिपथम् ॥ २४ ॥

सीता—(सामर्षम् ।) [1]किं इमिणा से गुणकहणेण । जस्सिं रक्खसो त्ति सअललोअस्स महंतो उवक्कोसो ।

दशाननः—(समुखभङ्गम् ।) विद्युज्जिह्व, श्रुतं श्रोतव्यम् ।

विद्यु.—अत एवास्या वशीकरणे तस्य रामभद्रस्य रूपग्रहणं विना न पश्याम्युपायान्तरम् ।

दशाननः—अशक्यमिदं रावणस्य । पश्य ।

युक्तं किं वरवर्णिनीं वरयितुं या नानुरक्ता स्वयं
तस्याः संवननाय हन्त नृपशोः किं धर्तुमर्हं वपुः ।

---

१. किमनेनास्य गुणकथनेन । यस्मिन् राक्षस इति सकललोकस्य महानुपक्रोशः ।

---

रामस्य । अभ्यन्तरः स्निग्धः । हरेति ॥ यः दशग्रीवः हराद्रेः कैलासस्य उद्धर्ता उत्पाटयिता । हरिहयस्य इन्द्रस्य किरीटेन अर्चितपदः पूजितचरणः । कठोरे कठिने स्कन्धाग्रे बाहुशिखराग्रे प्रकटः व्यक्तः हरेः विष्णोः चक्रेण सुदर्शनेन जातं व्रणं अरुः तेन किणः मांसग्रन्थिः यस्य सः । भगवतः षाड्गुण्यपूर्णस्य त्रिभुवनविधातुः त्रिजगत्स्रष्टुः ब्रह्मणः प्रपौत्रः पौत्रस्य पुत्रः । अयं दशग्रीवः कथं वः श्रुतिपथं कर्णमार्गं अनवतीर्णः अप्रविष्टः । शिखरिणीवृत्तम् ॥ २४ ॥

सामर्षं सकोपम् । उपक्रोशः निन्दा । समुखभङ्गं मुखस्य भङ्गः भेदः पूर्वावस्थातः अवस्थान्तरमित्यर्थः । तेन सहितं यथा तथा । वशीकरणे स्वीकरणे उपायान्तरं अन्यमुपायम् । युक्तमिति ॥ या स्वयं अनुरक्ता मयि अनुरागवती न तां वरवर्णिनीं वरश्चासौ वर्णश्च वरवर्णः सः अस्या अस्तीति वरवर्णिनी उत्तमसौन्दर्या तां सीताम् । वरयितुं युक्तं किम् । अननुरक्ता वरयितुं न शक्येत्यर्थः । तस्याः रामानुरक्तायाः सीतायाः

आ बाल्यादपि यः सखा किमुचितस्तद्विप्रलम्भोऽथवा
किं वा मे विनिपात्यमानयशसः कामोऽनुरोद्धुं क्षमः ॥२५

विद्यु.—महाराज, किमकाण्डे विक्लवोऽसि ।

यदस्ति वञ्चननाम तद्धि नः कुलजीवितम् ।
तदालम्ब्य गृहीतेयं क्रमेण वशमेष्यति ॥ २६ ॥

सुचरिता—हंला सीलवदी, किं ण जाणासि । सो लङ्केसुरो, जं महप्पहावं तादजणओ पिअसहो त्ति पसंसंदो चिट्ठइ ।

१. सखि शीलवति, किं न जानासि । स लङ्केश्वरः, यं महाप्रभावं तातजनकः प्रियसख इति प्रशंसन् तिष्ठति ।

संवननाय वशीकरणाय हन्तेति खेदे नृपशोः पशुप्रायनरस्य रामस्य वपुः शरीरं धर्तुं अर्हं किम् । नरान् पशून् गणयतो मम नृपशुरूपग्रहणमनर्हमिति भावः। अथवा । आ बाल्यात् शैशवात्प्रभृति यः माहेश्वरो जनकः सखा मम मित्रम् । तस्य विप्रलम्भः उचितः किं वञ्चना युक्ता किम् । नृपशुरूपग्रहणेन सीतां यदि वशीकुर्यां तदा सख्युर्जनकस्य वञ्चनां कृतवान् भवेयामिति भावः । वा अथवा विनिपात्यमानं कामपरवशतया विनाश्यमानं यशः येन तथाभूतस्य मे मम कामः सीताभिलाषः अनुरोद्धुं निरोद्धुं त्यक्तुमित्यर्थः । क्षमः शक्तः किम् । यशो-विनाशित्वेन जायमानोपि कामः त्यक्तुं न शक्यत इति भावः । यद्वा अनुरोद्धुं कामयितुं क्षमः किम् । यशोविनाशी काम आश्रयितुं न शक्य इति भावः । काव्य-लिङ्गमलङ्कृतिः शार्दू... ॥ २५ ॥

अकाण्डे अकस्मात् । विक्लवः व्याकुलः । यदस्तीति ॥ वञ्चनेति नाम यस्य तत् वञ्चननाम यत् वस्तु अस्ति । तत् नः अस्माकं कुलस्य जीवितं जीवनं हि । प्राणवत्परमप्रेमास्पदमिति प्रसिद्धम् । तत् वञ्चनारूपकुलधनम् । अवलम्ब्य आश्रित्य गृहीता इयं सीता क्रमेण कालक्रमेण वशं स्वाधीनतां एष्यति गमिष्यति ॥ २६ ॥

**दशाननः**—अत एव खलु मया स्नेहान्नावस्कन्द्यते जानकी।

**शीलवती**—[1]बम्हण सुमरिओ सो दसग्गीओ। अह्म ण एदस्स पक्खवादिणीओ रक्खसीओ। किं दु। एसा जाणई, अहं एसा अ एदाए सहीओ।

**मुनिः**—(स्वगतम्।) हन्त 'एषा जानकी' इति सम्यगवनितलं निर्दिशति।

**सुचरिता**—[2]भअवं दाणिं भण विस्सद्धम्।

**शीलवती**—[3]बम्हण, जदि कुसलं भणिस्ससि, तदो जाणई तुह हत्थे रअणकडअजुअलं पारितोसिअं दास्सइ।

**मुनिः**—(स्वगतम्।) यदर्थोऽयमारम्भः। (प्रकाशम्।) किमन्यद्भणितव्यम्।

**सीता**—(सावेगम्।) [4]किं उवरदो मज्झमलोअस्स अलंकारो।

(इति मूर्च्छति।)

---

१. ब्राह्मण स्मारितः स दशग्रीवः। वयं नैतस्य पक्षपातिन्यो राक्षस्यः। किं तु। एषा जानकी, अहमेषा चैतस्याः सख्यौ।

२. भगवन्, इदानीं भण विस्रब्धम्।

३. ब्राह्मण, यदि कुशलं भणिष्यसि, ततो जानकी तव हस्ते रत्नकटकयुगलं पारितोषिकं दास्यति।

४. किमुपरतो मध्यमलोकस्यालंकारः।

**स्नेहात्**। जनकस्य मम च परस्परस्नेहात्। नावस्कन्द्यते बलात् नापह्रियते। **स्मारितः** स्मृतिमुपलम्भितः। **हन्त** इति सम्बोधने हे सख्यौ। यद्वा हर्षे विषादे वा। अवनितलं निर्दिशति। राक्षसेन स्वेन अदृष्टायाः सीतायाः सकाशात् कटकग्रहणाय तद्वर्तनभूतलं सखीवाक्येन विज्ञाय तत् अङ्गुल्या प्रदर्श्य निश्चिनोतीत्यर्थः। **विस्रब्धं** निर्भयम्। **कुशलं** क्षेमवृत्तान्तं भणिष्यसि कथयिष्यसि। **यदर्थः** यस्मै यदर्थः। रत्नकटकयुगलग्रहणार्थं इत्यर्थः। **सावेगं** सोद्वेगम्। उपरतः मृतः। मध्यमलोकस्य भूलोकस्य अलङ्कारः अलङ्कारभूतो राम इत्यर्थः।

**सख्यौ**—हला जाणइ, हा सहीजणवच्छले, हा भूलोअमङ्गलदीविए, एत्तिअं कालं अणुवट्टमाणं सहीजणं उज्झिअ णिक्करुणाए तुए अइरपरिचिदस्स मणोरहवल्लहस्स तस्स एव्व अणुप्पआणं ववसिदम्।[1]

(इति रुदितं नाटयतः।)

**मुनिः**—कथमस्थाने महानातङ्कः। श्रोतव्यं मे वचः।

**सख्यौ**—हला, समस्ससिहि समस्ससिहि। सुणुमो सेसं वि।[2]

(सीता समाश्वस्य मुनिं पश्यति।)

**मुनिः**—

स्मर एव राममूर्तिः कौशिकवपुषा त्वदीयपुण्येन।
आनेष्यते दिनेऽस्मिन् प्रहर्षितव्ये कुतः शोकः॥ २७॥

**दशाननः**—(विहस्य।) अयि सारण, मुनिर्भवन्नपि कथमनृत वदसि 'दशग्रीवो विद्युज्जिह्वेन' इति हि पठितव्यम्।

**सख्यौ**—हला, दिट्ठिआ वड्ढसि।[3]

---

१. सखि जानकि, हा सखीजनवत्सले, हा भूलोकमङ्गलदीपिके, एतावन्तं कालमनुवर्तमानं सखीजनमुज्झित्वा निष्करुणया त्वया अचिरपरिचितस्य मनोरथवल्लभस्य तस्यैवानुप्रयाणं व्यवसितम्।

२. सखि, समाश्वसिहि समाश्वसिहि। शृणुम शेषमपि।

३. सखि, दिष्ट्या वर्धसे।

---

**हा** इति विषादे। **वत्सले** प्रेमवति। **मङ्गलदीपिके** कल्याणदीपिकातुल्ये। एतावन्त कालम् एतावत्कालपर्यन्तम्। अनुवर्तमानं अनुसरन्तम्। **निष्करुणया** निर्दयया। अचिरपरिचितस्य। न तु सखीजनस्येव चिरपरिचितस्य। मनोरथवल्लभस्य न तु प्रत्यक्षतः प्रियस्य। तस्यैव रामस्यैव। अनुप्रयाणं अनुगमनं व्यवसितं निश्चितम्। **अस्थाने** अकाण्डे। **आतङ्कः** सन्तापः। **समाश्वसिहि** सम्यगाश्वासं स्वास्थ्यं प्राप्नुहि। **स्मर इति**॥ राममूर्तिः रामरूपः स्मरः काम एव कौशिकवपुषा कौशिकरूपेण त्वदीयपुण्येन तव सुकृतेन। अस्मिन् दिने आनेष्यते प्राप्स्यते एवञ्च प्रहर्षितव्ये सन्तोष्टव्ये सति कुतः कस्मात् युष्माकं शोकः जातः। परिणामालङ्कारः। आर्यावृत्तम्॥ २७॥

( सीता सहर्षसंभ्रममुत्थाय सारणहस्तयोः कटकद्वयं पारितोषिकं ददाति )

दशाननः—( सविस्मयम् । )

विद्युद्भिः प्रकटितकुङ्कुमप्रभाभिः
किं विष्वक् प्रविततमभ्रनिर्व्यपेक्षम् ।
निष्टप्तद्रुतकनकद्रवैरिदानीं
लिप्यन्ते यदवनिरम्बरं दिशश्च ॥ २८ ॥

हन्त कथमेतत् ।

प्रभापटलमीलितामपि कथञ्चिदुन्मीलय-
न्न यावदहमर्पये तत इतोऽपि दृग्विंशतिम् ।
तटिद्भिरिव निर्मिता मम हि तावदग्रे वधू-
रनन्यसुलभाकृतिर्जगति काचिदालक्ष्यते ॥ २९ ॥

---

राक्षसान्धकरणमणिघटितकटकवियोगात्प्रत्यक्षतो दृश्यमानां प्रभापरिवृतां सीतामदृष्ट्वा रावणस्तत्प्रभाविसरं तटिद्विसरम्मत्वाह विद्युद्भिरिति॥ यत् यस्मात्कारणात् अवनिः भूमिः अम्बरं गगनं दिशः हरितश्च । निष्टप्तानां प्रतप्तानां अतएव द्रुतानां विद्रुतानां कनकानां स्वर्णानां द्रवैः रसैः इदानीं लिप्यन्ते उपदिह्यन्ते ततः अभ्रनिर्व्यपेक्षं मेघसाहित्यरहितं यथा भवति तथा (अत्र व्यतिरेकः) प्रकटिता व्यक्तीकृता कुङ्कुमानामिव प्रभा शोभा याभिस्ताभिः । (अत्र निदर्शना) विद्युद्भिः तटिद्भिः विष्वक् सर्वतः प्रविततं किं प्रसृतं किम् । सीताप्रभापरिसर तटिद्विसरयोर्भेदेपि अभेदेन वर्णनादतिशयोक्तिः । समर्थनकथनात् काव्यलिङ्गञ्च । प्रहर्षिणी वृत्तम् ॥ २८ ॥

हन्तेत्याश्चर्ये । प्रभेति ॥ प्रभायाः पटलेन समूहेन मीलितां पिहितामपि दृशां विंशतिं कथञ्चित् अधिकप्रयासेन उन्मीलयन् विकासयन् अहं यावत् तत इतः तत्रात्रापि अर्पये प्रेरये । तावत् सटिद्भिः विद्युद्भिः निर्मिता सृष्टेवेत्युत्प्रेक्ष्यमाणा । जगति अनन्यसुलभाकृतिः इतरदुर्लभाकारा काचित् वधूः नारी मम अग्रे पुरो लक्ष्यते दृश्यते हि । पृथ्वीवृत्तम् ॥ २९ ॥

( नेपथ्ये । )

अवेक्षितुं कौशिकयज्ञमत्रिः प्राप्तोऽनसूयासहितो महर्षिः ।
अतः कृतार्घ्यो जनकः कुमारीमामन्त्रयत्यस्य हि वन्दनाय॥२०॥

शीलवती—[1]दिट्टिआ पिअसहीए उत्तरुत्तरं पिअं दिस्सइ । चिरकालपुरंधिआ पुण्णदंसणा खु भअवदी अणसूआ ।

सीता—( सविस्मयम् । ) [2]अत्थि मे कोदूहलं । ता गच्छम्ह ।

( इति सर्वा निष्क्रान्ताः । )

दशाननः—हा कथमक्षिपथमतिक्रान्तैव सुन्दरी ।

दृष्टं नाननमिन्दुबिम्बमधुरं दृष्टौ न पीनौ स्तनौ
तस्याः किं कथयामि पक्ष्मलदृशो व्यक्तं न काञ्चीपदम् ।
एका खड्गलतेव पुष्पधनुषो दृष्टा परं वेणिका ।
न त्वङ्गान्तरदर्शनाय विदधे साध्वं स दग्धो विधिः ॥२१॥

---

१. दिष्ट्या प्रियसख्या उत्तरोत्तरं प्रियं दृश्यते । चिरकालपुरन्ध्री पुण्यदर्शना खलु भगवत्यनसूया ।

२. अस्ति मे कौतूहलम् । तस्माद्गच्छामः ।

---

**अवेक्षितुमिति** ॥ अत्रिः तदाख्यः महर्षिः अनसूयया तन्नाम्न्या स्वभार्यया सहितः कौशिकयज्ञं अवेक्षितुं द्रष्टुं प्राप्तः । अतः (सार्वविभक्तिकस्तसिः) अस्मै अत्रये कृतं (अर्घाय इदं) अर्घ्यं येन सः । जनकः जनकनृपः अस्य अत्रेः वन्दनाय कुमारीं आमन्त्रयति आह्वयति । वृत्तमुपजातिः ॥ २० ॥

**चिरकालपुरन्ध्री** पुरन्धारयतीति पुरन्ध्री कुटुम्बिनी चिरकालादारभ्य स्थिता पुरन्ध्री । **दृष्टमिति** ॥ पक्ष्मलदृशः प्रशस्तानि पक्ष्माणि अनयोः स्त इति पक्ष्मले दृशौ यस्यास्तस्याः तस्याः सीतायाः इन्दुबिम्बवन्मधुरं रम्यं आननं मुखं न दृष्टम् । पीनौ पीवरौ स्तनौ न दृष्टौ । पुनः किं कथयामि । काञ्चीपदं रशनास्थानं न व्यक्तं नाभिव्यक्तमभूत् । परन्तु पुष्पधनुषः कामस्य खड्गलतेव असिवल्लीव स्थिता एका वेणिका कबरी दृष्टा । अङ्गान्तरदर्शनाय इतरावयवदर्शनाय स दग्धः

**विद्यु.**——किं न दृष्टः सारणाय कटके प्रदाय प्रतिनिवृत्तोऽस्याः करपल्लवः ।

**दशाननः**——दिष्ट्या खल्वयमत्रभवता प्रतिबोधितोऽस्मि ।

शुकतुण्डकुटिलपाटलकरजः कनकाङ्गुलीयकमनीयः ।
स्फुटितकमलोदरश्रीः स्मरामि तस्याः करो दृष्टः ॥ ३२ ॥

अपि च ।

आनीता नृपकन्यका मम वशे तिष्ठन्तु मा वाधुना
स्वर्बन्द्योऽपि भवन्तु मे परिसरे जम्भद्विषो वा पुरे ।
किं ताभिर्दशकन्धरस्य कमलश्रीगर्वसर्वंकषो
यद्यस्याः कमनीयकङ्कणधरः सोऽयं गृहीतः करः ॥ ३३ ॥

**विद्यु.**——किमिदं दुर्लभं गृहीतरामवेषस्य ।

हतकः विधिः दैवं साह्यं सहायतां न विदधे न चकार । उपमानोत्प्रेक्षा काव्यलिङ्ग-परिकरालङ्काराः । शार्दू... ॥ ३१ ॥

**शुकेति** ॥ शुकतुण्डवत् कीरवदनवत् कुटिलाः वक्राः पाटलाः श्वेतरक्तवर्णाश्च करजाः नखानि यस्य सः । कनकाङ्गुलीयैः स्वर्णाङ्गुलीयकैः कमनीयः रम्यः अतएव स्फुटितस्य विकसितस्य कमलस्य पद्मस्य उदरस्य मद्ध्यस्य श्रीरिव श्रीः शोभा यस्य सः तस्याः करः दृष्टः । स्मरामि । उपमानिदर्शनालङ्कारौ । आर्यावृत्तम् ॥ ३२ ॥

**आनीतेति** कमलस्य श्रियाः कान्त्याः गर्वस्य (सर्वंकषतीति) सर्वंकषः सर्वापहारी कमनीयकङ्कणधरः सः त्वया स्मारितः अस्याः अयं करः गृहीतो यदि । आनीताः नृपकन्यकाः मम वशे अधुना अद्य तिष्ठन्तु वा उत मा तिष्ठन्तु । स्वर्बन्द्यः कारानिवेशिताः देवस्त्रियोऽपि मे मम परिसरे समीपे भवन्तु वा उत जम्भद्विषः इन्द्रस्य पुरे भवन्तु । ताभिः दशकन्धरस्य मम किं न किमपि प्रयोजनमित्यर्थः उपमाविकल्पालङ्कारौ । शार्दू... ॥ ३३ ॥

**दशाननः**—

मनुष्यवेषग्रहणं दुष्करं यदतोऽपि वा ।
तत्कर्ता रावणो लब्धुं जगन्मङ्गलदीपिकाम् ॥ ३४ ॥

त्वरस्व तावत्कौशिकवेषग्रहणाय ।

**विद्यु.**—गृहीत एव हि मया तदीयो वेषः, सारणोऽपि लक्ष्मणवेषो भविष्यति ।

**सारणः**—अचिन्त्यमहिमानः खलु महर्षयः ।

काञ्चने कटके तस्याः करेण प्रतिगृह्णतः ।
यन्मयैव ममाङ्गानि न शक्यन्ते निरीक्षितुम् ॥ ३५ ॥

( पार्श्वतोऽवलोक्य । ) कथं बन्धुजनविलोकनकौतूहलिनीभिः कन्यकाभिर्विस्मृतश्चित्रपटः । तदेनं देवाय समर्पये । ( इति चित्रपटं गृहीत्वा । ) 'इमे तस्याः कटके अयं चित्रपटः' ( इति दशाननाय निवेदयति । )

**विद्यु.**—पश्य महाराज, पश्य । राक्षसान्धंकरणमणिघटितं कटकयुगलं रघुशिशुसमधिष्ठितं चित्रपटं च ।

---

**मनुष्येति** ॥ मनुष्यवेषग्रहणं ( रावणेन ) दुष्करं यत् दुष्करं यद्यपि कर्तुमशक्यमेव अतोपि तथापि ( वाकारो वाक्यालङ्कारे ) रावणः जगतः मङ्गलदीपिकामिव स्थितां सीतां लब्धुं तत् मनुष्यवेषग्रहणं कर्ता करिष्यति ॥ ३४ ॥

**त्वरस्व** त्वरां अविलम्बं कुरु । **तदीयः** तस्य कौशिकस्य अयन्तदीयः । लक्ष्मणस्येववेषः यस्य सः लक्ष्मणवेषः । **काञ्चने इति** ॥ यत् यतः तस्याः सीतायाः काञ्चने स्वर्णमये कटके कटकद्वय करेण प्रतिगृह्णतः स्वीकुर्वत मम अङ्गानि निरीक्षितुं द्रष्टुं मयैव न शक्यन्ते ततः महर्षयः अचिन्त्यमहिमानः खलु ॥

**देवाय** राज्ञे रावणाय । **रघुशिशुसमधिष्ठितं** रामयुक्तम् । **धिगिति** ॥ यत् कटकद्वन्द्वं तन्वीं कृशाङ्गीं सीतां नादर्शयत् । एतत् कटकद्वन्द्वं धिक् । यत्र चित्रपटे तस्याः सीतायाः भावहरः अभिलाषास्पदमित्यर्थः । नरः ( लिखितः ) एतं चित्रपटञ्च धिक् । एतदुभयमपि निन्दनीयमित्यर्थः । काव्यलिङ्गमलङ्कृतिः ॥

**दशाननः**—

धिगेतत्कटकद्वन्द्वं यन्न तन्वीमदर्शयत् ।
धिक् च चित्रपटं यत्र तस्या भावहरो नरः ॥ ३६ ॥

**सारणः**—किं बहुना । त्वमपि न दृश्यसे यस्य धारणेन ।

**विद्यु.**—ततश्च निगूढं विमान एव निक्षिप्यतामिदम् । भविष्यति कदाचिदनेन किंचित्प्रयोजनम् ।

( सारणस्तथा करोति । )

**दशाननः**—( विमृश्य । )

सुहृदपि वञ्चयितव्यो गर्ह्यापि तनुर्ग्रहीतव्या ।
सांप्रतमनुभवितव्यस्तस्याः पाणिग्रहोत्सवोपि मया ॥ ३७ ॥

( इति निष्क्रान्ताः सर्वे । )

**इति जानकीपरिणयनाटके द्वितीयोऽङ्कः ।**

**किं बहुना** बहुना उक्तेन किं प्रयोजनम् । **यस्य** कटकद्वयस्य । **निगूढं** गुप्तम् । **सुहृदिति** ॥ मया साम्प्रतं अद्य सुहृत् सखापि जनकः वञ्चयितव्यः । गर्ह्यापि तनुः ग्रहीतव्या निन्द्योपि रामवेषः स्वीकर्तव्यः तस्याः सीतायाः पाणिग्रह एव उत्सवः अनुभवितव्यः अनेकक्रियागतमेककारकन्दीपकमलालङ्कृतिः । आर्यावृत्तम् ॥ ३७ ॥

इति श्री श्वेतारण्यनारायणशर्मणः कृतिषु जानकी-
परिणयव्याख्यायां बालरञ्जन्याख्यायां
द्वितीयाङ्कव्याख्या पूर्णा ॥

## तृतीयोऽङ्कः ॥



(ततः प्रविशति मारीचः ।)

**मारीचः**—(सानुस्मरणम् ।)

तत्क्षत्रियार्भकविमुक्तमहास्त्रवात्या-
चक्रभ्रमीकवलितश्लथसन्धिबन्धः ।
यावद्भ्रमामि गगने कथमम्बुराशिं
तावत्प्रविश्य शतयोजनमुत्थितोऽस्मि ॥ १ ॥

हन्त निरुपमपराक्रमः क्षत्रियवटुः । यतः ।

असिन्विकृष्य धनुरुज्झति बाणमुग्रं
पश्यन् बलानि पुरतो विनिपातितानि ।
जीमूतपङ्क्तिषु निलीय निलीय भूयो
मायी सुबाहुरपि हा मरणं प्रपन्नः ॥ २ ॥

---

तृतीयाङ्कमारप्स्यमानश्शुद्धविष्कम्भमारचयति—**ततः प्रविशतीत्यादिना** ॥ सानुस्मरणं मुख्यविषयस्मरणसहितं यथा भवति तथा । **तदिति** ॥ तेन क्षत्रियार्भकेण क्षत्रियशिशुना रामेण विमुक्तस्य महतः अस्त्रस्य वायव्यास्त्रस्य वात्यया वातसमूहेन जातया चक्रभ्रम्या मण्डलभ्रमणेन कवलितः भक्षितः गृहीत इत्यर्थः। अतएव श्लथः शिथिलः सन्धिबन्धः यस्य तथाभूतोहम् । गगने नभसि यावद्भ्रमामि यावताःकालमानेन परिभ्रमितुमारभे तावत् कथ शतंयोजनानि यस्य तम् । अम्बुराशिं समुद्रं प्रविश्य उत्थितः अस्मि । वसन्ततिलकावृत्तम् ॥ १ ॥

**हन्त** इत्याश्चर्ये । **अस्मिन्निति** ॥ अस्मिन् क्षत्रियवटौ रामे धनुः विकृष्य आकृष्य उग्रं रौद्रं बाणं शरं उज्झति मुञ्चति सति । पुरतः अग्रे विनिपातितानि नाशितानि बलानि सैन्यानि पश्यन् मायी मायावान् सुबाहुः जीमूतानां मेघानां पङ्क्तिषु भूयः बहुवारं निलीय निलीयापि अन्तर्धायान्तर्धायापि मरणं प्रपन्नः प्राप्तः । हा कष्टं वसन्ततिलकावृत्तम् ॥ २ ॥

किं च ।

यावद्बाणसमीरवारितमहामायारजोदुर्दिनां
तेन क्षत्रियबालकेन बलिना दृष्ट्वा पुरस्ताटकाम् ।
हन्त स्त्रीति जुगुप्सया शिथिलितो मौर्वीविकर्षी करो
वेगादुत्पतितेन तावदिषुणा सा च स्वयं चिच्छिदे ॥ ३ ॥

(सशोकावेगम् ।) हा जननि हा ताटके, हा सुतवत्सले, हा नागसहस्र-बलशालिनि, तवापि क्षत्रियवटुना तादृशो विपाक इति दुरतिक्रमोऽयं दैवनियोगः ।

अये मातः क्वासि प्रदिश रुदतो मे प्रतिवचो
(सामर्षम् ।)
विमोक्ष्ये नाहं त्वां प्रथमकृतवैरं नृपवटो ।
(सकरुणम् ।)
सुबाहो धिग्धिङ्मां यदभिमुखमेवैवमभवः
(सचिन्ताश्वासम् ।)
कराल त्वं वत्स क्व गत इति नाद्यापि विदितः ॥ ४ ॥

**यावदिति** ॥ यावत् बलिना तेन क्षत्रियबालकेन पुरः । बाणसमीरेण (रामप्रयुक्त) शरवातेन निवारितं महत्या मायया उत्पादितानि रजांसि पांसव एव दुर्दिनं मेघच्छन्नमहः यस्यास्तथाभूताम् । ताटकां दृष्ट्वा स्त्री इति जुगुप्सया घृणया मौर्वीविकर्षी ज्याकर्षणशीलः करः शिथिलितः बाणप्रयोगे विमुखः कृतः । तावत् स्वयं अप्रेरित वेगात् उत्पतितेन उद्गतेन इषुणा सा ताटका च चिच्छिदे छिद्यते स्म हन्त कष्टम् । रूपककाव्यलिङ्गाख्यालङ्कारौ । शार्दू...॥ ३ ॥

**नागाः** गजाः । **विपाकः** परिणामः । **अये इति** ॥ अये हे मातः क्व असि । रुदतः रोदनं कुर्वतः मे प्रतिवचः प्रदिश देहि ( सामर्षं सकोपं ) हे नृपवटो राम अहं प्रथमं कृतं वैर अपकारः येन तं त्वां न विमोक्ष्ये न त्यक्ष्यामि (सकरुणं सकृपं) हे सुबाहो यत् यतः ज्येष्ठस्य मम अभिमुखमेव प्रत्यक्षमेव एवं त्वं अभवः ततः मां धिक् धिक् (सचिन्ताश्वासं चिन्तया श्वासेन च सहितं यथा तथा ) हे वत्स कराल त्वं क्व गतः इति अद्यापि न विदितः न ज्ञातः । शिखरिणीवृत्तम् ॥ ४ ॥

( ततः प्रविशति करालः । )

**करालः—**

दिष्ट्या भीतो रणमुखाद्दिष्ट्या दूरं पलायितः ।
दिष्ट्या रामास्त्रपदवीमप्राप्तो जीवितोऽस्म्यहम् ॥ ५ ॥

किं तु न जानामि रामास्त्रगृहीतः स मारीचो जीवति वा न वेति । यतः ।

प्रभ्रष्टरत्नमकुटं पतितासिखेटं
विस्रस्तकेशमभितस्ततपाणिपादम् ।
मारीचमभ्रमिव चण्डमरुद्विधून्व-
न्निन्ये क्वचिद्रघुकिशोरशरः क्षणेन ॥ ६ ॥

प्रायेण महेन्द्रशैलस्य कटके महोदधेर्वीचिषु वा पतितः स्यात् । तदेनमन्वेष्टुमुपसर्पतापि मया महेन्द्रशैलोऽयमासादित एव । तथा हि ।

एते ते गिरिकूटसङ्कटशिलासङ्घट्टशीर्णाम्भस-
प्रेङ्खच्चामरचारुशीकरगणस्मेरा दरीनिर्झराः ।

**दिष्ट्येति** ॥ अहं दिष्ट्या दैवात् रणमुखात् युद्धारम्भात् भीतः अस्मि । दिष्ट्या दूरे पलायितः विद्रुतः अस्मि । दिष्ट्या रामास्त्रस्य पदवीं मार्गं अप्राप्तः अतएव जीवितः अस्मि ॥ ५ ॥

**प्रभ्रष्टेति** ॥ चण्डमरुत् प्रचण्डमारुतः अभ्रं मेघमिव रघुकिशोरस्य रघुशिशोः शरः मारीचं विधून्वन् कम्पयन् प्रभ्रष्टं गलितं रत्नमकुटं मणिमयकिरीटं यस्य तथाभूतम् । पतितौ असिखेटौ खड्गचर्मणी यस्य तथाभूतम् । अभितः सर्वतः विस्रस्ताः विकीर्णाः केशाः यस्य तम् । ततं विस्तृतं पाणिपादं ( पाणी च पादौ च ) यस्य तम् । क्षणेन । क्वचित् कुत्रापि निन्ये नीतवान् । उपमालङ्कारः । वसन्ततिलकावृत्तम् ॥ ६ ॥

प्रायेण बहुशः । कटके सानुनि । वीचिषु तरङ्गेषु । अन्वेष्टुं मृगयितुम् । उपसर्पता गच्छता । आसादितः प्राप्तः । **एत इति** ॥ येषां दरीनिर्झराणां पातेषु

यत्पातेषु निकुञ्जकुञ्जरमुखभ्रश्यन्मृणालाङ्कुर-
ग्रासोद्ग्रन्थिततटं रटन्ति परितः कण्ठीरवा भैरवम् ॥ ७ ॥

अपि च ।

मृगपतिकराघातत्रुट्यत्कठोरशिरस्तटी-
परिगलदसृग्धारासंसिक्तमौक्तिकपङ्क्तिभिः ।
वनभुवमिभश्रेणी शोणीकृतां निजफीट्कृतैः
कलयति समुत्सर्पद्भल्लूकमल्लविराविणीम् ॥ ८ ॥

(अग्रतोऽवलोक्य ।) कथमार्यो मारीचः समुद्रमध्यपतितोत्थित इव दृश्यते । यतः ।

---

पतनप्रान्तेषु निकुञ्जेषु कुञ्जेषु स्थितानां कुञ्जराणां गजानां मुखेभ्यः भ्रश्यतां गलतां मृणालाङ्कुराणां बिसप्ररोहाणां ग्रासैः कवलशिष्टभागैरित्यर्थः उद्ग्रन्थि सन्दब्धं व्याप्तम् । तटं परितः तटस्य समन्ततः । कण्ठीरवाः सिंहाः भैरवं (गजमुखगलितमृणालकवलदर्शनेन गजभ्रान्त्या सञ्जातकोपेन भीषणं यथा तथा । रटन्ति नदन्ति ते एते दरीनिर्झराः गिरिकन्दरनिर्गतजलप्रवाहाः गिरिकूटानां गिरिशिखराणां सङ्कटशिलानां सङ्कीर्णग्राव्णां सङ्घट्टेन सङ्घट्टनेन शीर्णं अम्भः जलं येषान्तथाभूताः । अतएव । प्रेङ्खच्चामरवत चलच्चामरवत् चारुभिः रम्यैः शीकरगणैः अम्बुकणसमूहैः स्मेराः अद्भुताश्च दृश्यन्त इति शेषः । अत्रोपमाकाव्यलिङ्गे अलङ्कृती । शार्दू...॥ ७ ॥

**मृगेति** ॥ इभश्रेणी गजततिः मृगपतेः सिंहस्य कराघातेन हस्तताडनेन त्रुट्यन्त्याः भेदनं प्राप्नुवन्त्याः कठोरशिरस्तट्याः कठिनकुम्भस्थलात परिगलन्त्या परितस्स्रवन्त्या असृग्धारया रक्तधारया संसिक्तानां आर्द्रीकृतानां मौक्तिकानां मुक्ताफलानां पङ्क्तिभिः । शोणीकृतां अरुणीकृतां वनभुव काननभूमिं निजफीट्कृतैः स्वीयफीट्कारैः समुत्सर्पतां समुद्गच्छतां भल्लूकमल्लानां ऋक्षश्रेष्ठानां विरावः ध्वनिः सः अधिकः अस्यामस्तीति विराविणी तथाभूताम् । कलयति करोति हरिणीवृत्तम् ॥

**समुद्रेति** ॥ समुद्रमध्ये (पूर्वं पतितः पश्चादुत्थितः) पतितोत्थितः ।

क्लिन्नांशुकग्रथितशैवलखण्डजालं
फेनानुविद्धघनमेदुरकेशपाशम् ।
नीरक्तधौतकरपादतलं पुरस्ता-
दास्ते महेन्द्रकटके ननु ताटकेयः ॥ ९ ॥

**मारीचः**—(करालं विलोक्य । सविस्मयम् ।) अपि कराल, जीवसि । तदेहि परिष्वजस्व माम् ।

**करालः**—आर्य मारीच दिष्ट्या रामबाणान्मुक्तोऽसि ।

(इति सबाष्पमालिङ्गति ।)

**मारीचः**—वत्स, किमन्यद्ब्रवीमि ।

स तस्य ज्याघोषः शरपतनझङ्कारनिनदः
शरेणाकृष्टोऽसाविति मुदितविद्याधरगिरः ।
ध्वनिः सिन्धोरौर्वानलपतितयादःकलकलो
मयैकस्मिन् काले निखिलमिदमाकर्णितमभूत् ॥ १० ॥

**क्लिन्नेति** ॥ क्लिन्नांशुके आर्द्रवस्त्रे ग्रथितं सम्बद्धं शैवलखण्डजालं जलनीलीशकलसमूहः यस्मिन् कर्मणि तत् फेनैः डिण्डीरैः अनुविद्धः युक्तः घनः दृढः यद्वा घनवत् मेघवत् मेदुरः सान्द्रस्निग्धः केशपाशः यस्मिन् कर्मणि तत् । नीरक्तं निर्गतारुण्यं यथा तथा धौतं क्षालितं करपादतलं यस्मिन् कर्मणि तद्यथा भवति तथा । ताटकेयः ननु मारीच एव महेन्द्रपर्वतस्य कटके सानौ पुरस्तात् पुरः आस्ते । वसन्ततिलकावृत्तम् ॥ ९ ॥

अपि जीवसि जीवसि किम् । परिष्वजस्व आलिङ्ग ।

**स तस्येति** ॥ तस्य रामस्य सः ज्यायाः मौर्व्याः घोषः । शराणां पतने पतनसमये झङ्कारनिनदः झङ्कारध्वनिः । असौ मारीचः शरेण आकृष्टः इति मुदितानां सन्तुष्टानां विद्याधराणां युद्धदिदृक्षागतदेवयोनिविशेषाणां गिरः वादः । सिन्धोः समुद्रस्य ध्वनिः और्वानले वाडवाग्नौ पतितानां यादसां जलजन्तूनां कलकलः मर्मरध्वनिः इतीदं निखिलं मया एकस्मिन् काले आकर्णितं अभूत् । अक्रमातिशयोक्त्यलङ्कारः । शिखरिणीवृत्तम् ॥ १० ॥

अनन्तरं च ।

मत्पातस्खलितविशीर्णवीचिमुक्त-
व्यक्ताधोभुवनपथोदरावगाढम् ।
तन्मार्गप्रसृतनिजान्तराम्बुवेगा-
न्मामुच्चैरुदधिरुदक्षिपत्क्षणेन ॥ ११ ॥

**करालः**—साधु महार्णव, साधु । सत्यं त्वया महाराजदशग्रीव-प्रतापभीतेन तदनुचरो मारीचः परित्रातः ।

**मारीचः**—(सानुशयम् ।) कराल, किमुच्यते ।

दशग्रीवः श्रीमान्मयि करुणया तिष्ठति तथा
यथैतेऽपि त्रस्यन्त्युदधिवसुधारण्यगिरयः ।
अहं तूदासीनः स्वजनविनिपातेप्यनुचरः
कलङ्कं देवस्य स्वयमुपहरामि प्रतिपदम् ॥ १२ ॥

**मदिति** ॥ मम पातेन पतनेन स्खलिताः स्वस्थानाच्चलिताः विशीर्णाश्च वीचयः तरङ्गाः ताभिर्मुक्तः अतएव व्यक्तः स्फुटः (अधोभुवनस्य पातालस्य पन्थाः) अधोभुवनपथः तस्य उदरं मद्धयं अवगाढं प्रविष्टम् । माम् । उदधिः । तस्मिन्मार्गे प्रसृतानि प्रचलितानि निजानि आन्तराणि अम्बूनि तेषां वेगात् । क्षणेन उच्चैः उदक्षिपत् उत्क्षिपति स्म । प्रहर्षिणीवृत्तम् ॥ ११ ॥

तदनुचरः तत्किंकरः । परित्रातः रक्षितः । सानुशयम् । ससन्तापम् । **दशग्रीव इति** ॥ एते उदधिवसुधारण्यगिरयः समुद्र भूमि वन शैला अपि । मत् यथा त्रस्यन्ति बिभ्यति । तथा मयि श्रीमान् दशग्रीवः करुणया दयया तिष्ठति । अनुचरः किंकरः अहन्तु स्वजनस्य विनिपातेपि शत्रुजनितविनाशेपि उदासीनः अकृतप्रतिकारस्सन् प्रतिपदं पदे पदे देवस्य प्रभोः रावणस्य कलङ्कं अङ्कं अप-वादम् । स्वयं उपहरामि सम्पादयामि । शिखरिणीवृत्तम् ॥ १२ ॥

**करालः**—आर्य, मामैवम्। मायाबलमालम्ब्य बलवानपि क्षत्रियवटुर्घातयितव्यः। यदेनमहत्वा 'प्रतिनिवृत्तानप्यस्मान्न बहु मन्यते महाराजः। किं च। कौशिकः स मुनिपाशोऽप्यपरीक्षितेन क्षत्रियवटुना गृहीततद्रूपस्यापि देवस्य सीतापरिणये प्रत्यूहमाचरिष्यति। उक्तं च खलु ताटकया 'तद्वेषो ग्रहीष्यते महाराजेन' इति।

**मारीचः**—अतः खलु सानुगस्य मुनेः स्वकुलप्रस्थानं विघटयितव्यम्।

**करालः**—तत्र किमार्यस्य व्यापृतमुपायदर्शने प्रज्ञाचक्षुः।

**मारीचः**—(क्षण विचिन्त्य।) अथ किम्।

**करालः**—कथमिव।

**मारीचः**—(कर्णे।) एवमिव (इति कथयति।)

**करालः**—(विहस्य।) ईषत्करमेवेदानीमार्यस्य। यतः।

विप्रियश्रवणात्सद्यः पतन्तीं हव्यवाहने।
मायासीतामनुपतेद्रामस्तत्प्रेमगौरवात्॥ १२॥

आलम्ब्य आश्रित्य। **मुनिपाशः** कुत्सितो मुनिः। अपरीक्षितेन। (सुबाहुवधादिना शौर्यविषये) अल्प परीक्षितः अपरीक्षितः तेन। अनुदराकन्येतिवदल्पार्थो नञ्। क्षत्रियवटुना क्षत्रियमाणवकेण रामेण सह। गृहीतं तस्य रामस्य रूपं येन तस्य। देवस्य रावणस्य। प्रत्यूहं विघ्नम्। **सानुगस्य** सानुचरस्य। स्वकुलं स्वगृहं प्रति प्रस्थानं विघटयितव्यं विहन्तव्यम्। **तत्रेति**॥ तत्र उपायदर्शने कौशिकस्य स्वाश्रमागमनविघटनोपायावलोकने। आर्यस्य तव प्रज्ञा धीः एव चक्षुः व्यापृतं प्रवृत्तं किम्। **अथ किं** इत्यङ्गीकारे। **कर्णे एवमिवेति**॥ विप्रियश्रवणादित्यादिना विवरिष्यमाणम्। **ईषत्करं** अनायासेन कर्तुं शक्यमित्यर्थः। **विप्रियेति**॥ विप्रियस्य अनिष्टस्य श्रवणात् सद्यः सपदि हव्यवाहने अग्नौ पतन्तीं मायासीतां अनु लक्षीकृत्य रामः तस्याः सीतायाः प्रेम्णः स्नेहस्य गौरवात् गुरुत्वात् हव्यवाहने पतेत्॥ १२॥

अनन्तरं पुत्रशोकेन मोहितं दशरथं समाश्वासयन् विश्वामित्रोऽप्ययोध्यां सहैव तेन राज्ञा प्रतिनिवर्तिष्यते। परं तु तस्य महर्षेः संनिधानमन्तरेण माया प्रयोक्तव्या।

**मारीचः**—युक्तमाह भवान्। तदुपसर्पावः। यत्र ते रामादयः।

(इति परिक्रामतः।)

**करालः**—(पुरोऽवलोक्य।) कथमध्यर्धयोजन एव कौशिकाश्रमस्य कौशिकीतीरे निवेशितस्कन्धावारो दशरथः। तथा हि।

शश्वद्रथ्याश्वहेषासहवनमहिषोद्धूतशृङ्गप्रशीर्य-
द्वल्मीकोन्मीलदाशीविषपरुषविषोद्गारफूत्कारभीमाः।
दृश्यन्ते धीरभेरीनिनदकृतमदोद्दामनृत्यत्प्लवङ्गाः
सेनामातङ्गभुक्तोज्झितकुशकबलाः कौशिकीतीरदेशाः ॥१४

**मारीचः**—तदिदानीमस्माद्देशान्निष्क्रामयितव्यो दूर एव राघवशिशुः।

---

**सन्निधानं अन्तरेण** सान्निध्यं विना। **कथमिति**॥ अधिकं अर्धं यस्मिंस्तत् अध्यधिकं अर्धाधिकं योजनं तस्मिन्। निवेशितः स्थापितः स्कन्धावारः शिबिरः येन सः। **शश्वदिति**॥ कौशिक्याः कौशिकीनद्याः तीरदेशाः तटप्रदेशाः शश्वत् पुनःपुनः रथं वहन्तीति रथ्याः ये अश्वाः यद्वा रथानां समूहः रथ्या तत्र बद्धाः ये अश्वाः तेषां हेषां हेषारवं नसहन्त इति तथोक्ताः ये वनमहिषाः तैः उद्धूतैः उत्कम्पितैः शृङ्गैः विषाणैः प्रशीर्यद्भ्यः शिथिलीभवद्भ्यः वल्मीकेभ्यः उन्मीलतां उद्गच्छतां आशीविषाणां सर्पाणां परुषैः रौद्रैः विषोद्गारैः गरलोद्गिरणैः फूत्कारैश्च भीमाः भीषणाः। धीराः धैर्यान्विताः यद्वा धीरेण भेर्याः राजदुन्दुभेः निनदेन शब्देन कृतः मदः गर्वं हर्षो वा तेन उद्दामाः निरर्गलाः अतएव नृत्यन्तः प्लवङ्गाः वानराः येषु तथाभूताः। किञ्च। सेनामातङ्गैः सेनागजैः भुक्ताः उज्झिताः त्यक्ताश्च कुशकबलाः दर्भग्रासाः येषु तथाभूताः। दृश्यन्ते। स्रग्धरावृत्तम्॥ १४॥

(नेपथ्ये ।)

अध्वश्रान्त्या शयितमननुज्ञाप्य तातं नरेन्द्रं
विश्रान्त्यर्थं क्वचिदवरजानप्यनामन्त्र्य यातान् ।
चर्मोपानत्पिहितचरणः शस्त्रवानेष वेगा-
देकोऽरण्यं विशति मृगयाकौतुकी रामभद्रः ॥ १५ ॥

तदिदानीमनीकिनीनिवेशगतैः रामभद्रपरिजनैरप्यनुप्रवेष्टव्योऽयमरण्यभागः । यावदहमप्येनमनुप्रविशामि ।

**करालः**—कथमेष रामभद्रस्य प्रियसखः पिङ्गलो नाम विप्रवटुरेवमाघोषयति।

**मारीचः**—(सहर्षम् ।) दिष्ट्याऽयमावयोरन्तरलाभः। वत्स कराल, यावदयं न प्रविशति । तावदस्य रूपमवलम्ब्य मायया 'वनमदगजगृहीतोऽहम्' इति विलपन् सखिस्नेहादनुद्रवन्तं रामभद्रमुपसंक्रामय मुदूरमरण्यान्तरम् । अहमपि कौशिकमहर्षिशिष्यस्य काश्यपस्य रूप-

**निष्क्रामयितव्यः** निष्क्रमणं कारयितव्यः । **अध्वेति** ॥ रामसखस्य पिङ्गलस्य वचनमिदम् । अध्वश्रान्त्या मार्गश्रमेण शयितं सुप्तं नरेन्द्रं तातं पितरं अननुज्ञाप्य अनापृच्छ्य विश्रान्त्यर्थं मार्गायासनिवृत्त्यर्थं क्वचित् कुत्रापि यातान् गतान् अवरजान् अनुजानपि । अनामन्त्र्य अनाहूय । चर्मोपानद्भ्यां चर्मपादुकाभ्यां पिहितौ आच्छादितौ चरणौ यस्य सः । शस्त्रवान् आयुधवान् । एषः रामभद्रः । एकएव । मृगयायां आखेटके कौतुकी सन् । वेगात् अरण्यं विशति । मन्दाक्रान्तावृत्तम् ॥ १५ ॥

**तदिति** ॥ अनीकिनीनिवेशं सेनासमीपं गतैः । यावत् । शीघ्रम् । **दिष्ट्येति** ॥ अन्तरलाभः' मध्येलाभः । **अस्य** पिङ्गलस्य । विलपन् विलापकुर्वन् । सख्यौ पिङ्गले स्नेहात् । अनुद्रवन्त अनुधावन्तम् । उपसङ्क्रामय प्रापय । अन्यदरण्यं अरण्यान्तरम् । **अहमिति** ॥ राघवपोतस्य रघुशिशोः रामस्य हेतोः

मात्मना दर्शयन् राघवपोतस्य हेतोरनुभूयमानविरहव्यथां मैथिलीमस्मै मायाबलेन समभिव्यञ्जयन् यथामनोरथं निर्वर्तयिष्ये ।

( इति निष्क्रान्तौ । )

शुद्धविष्कम्भः ॥

( ततः प्रविशति शरचापहस्तो रामः । )

रामः—

दृष्टः कोपवतामरण्यकरिणां धीरोद्धतश्चङ्क्रमो-
दृष्टं केसरिणां च वक्रितगुरुग्रीवं रुषालोकनम् ।
दृष्टं ताण्डवमुद्भटं च शिखिनां ज्याघोषरुद्धे वने
दृष्टश्चैव मया चिराय मृगयालीलाविनोदक्रमः ॥ १६ ॥

अपि च । तत्रैव ।

कुवलयितवनान्तान्यन्तिकस्थैः किरातै-
रनवगतरसत्वात्त्यक्तसंभावनानि ।

---

कारणात् । अनुभूयमाना विरहव्यथा वियोगपीडा यया ताम् अस्मै रामाय । समभिव्यञ्जयन् प्रकाशयन् । यथा यथासङ्कल्पितं तथा मनोरथं अभिलाषं निर्वर्तयिष्ये पूरयिष्ये । **दृष्ट इति** ॥ मया । ज्यायाः मौर्व्याः घोषेण रुद्धे निरुद्धे वने । कोपवतां अरण्यकरिणां वनगजानां धीरः धैर्यान्वितः उद्धतः गर्वितश्च चङ्क्रमः गतिः दृष्टः । केसरिणां सिंहानाञ्च रुषा कोपेन वक्रिता कुटिलिता गुर्वी महती दीर्घा वा ग्रीवा कण्ठः यस्मिंस्तत् आलोकनं वीक्षणं दृष्टम् । किञ्च शिखिनां मयूराणां उद्भटं उद्धतं ताण्डवं ज्यानिनादे मेघध्वनिभ्रान्त्या । कृतं नर्तनं दृष्टम् । एवं मया चिराय चिरं मृगयालीला आखेटकक्रीडा तया विनोदः मनोविनोदनं तस्य क्रमः दृष्टः परिपाटी दृष्टा । आवृत्तिदीपकालङ्कारः । शार्दू ... ॥ १६ ॥

**कुवलयितेति** ॥ कुवलयवन्ति नीलोत्पलवन्ति कृतानि कुवलयितानि वनान्तानि वनमध्यानि यैस्तानि । अन्तिकस्थैः समीपस्थितैः किरातैः पुलिन्दैः अनवगतः अज्ञातः रसः आह्लादकरत्वादिगुणः यैस्तेषां भावस्तत्त्वं तस्मात् त्यक्तं सम्भावनं बहुमानः येषु तानि । चकितानां भीतानां हरिणशावानां मृगशिशूनां प्रेक्षि-

अभिलषितगुणानि प्रौढनारीकटाक्षै-
श्चकितहरिणशावप्रेक्षितानि प्रतीमः ॥ १७ ॥

(सोत्कण्टम्।)

यान्येवमाकुलहृदां हरिणार्भकाणा-
माविर्भवन्ति रुचिराणि विलोकितानि।
मन्ये ततोऽपि मधुराणि महीकुमार्या-
स्तस्यास्तु विभ्रमकटाक्षविजृम्भितानि ॥ १८ ॥

(नेपथ्ये।)

हा सखे रामभद्र, हा हतोऽस्मि।

**रामः**—(आकर्ण्य ससंभ्रमम्।) कथमत्र विजने वने पुरुषस्येवार्थं मां प्रति दीनस्वरः। (इति शरचापहस्त उद्धतं परिक्रामति।)

---

तानि विलोकनानि प्रौढानां 'स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना' इत्युक्तलक्षणानां नारीणां कटाक्षैः अपाङ्गालोकनैः अभिलषितः तदधिकत्वात् वाञ्छितः गुणः येषान्तथाभूतानि। प्रतीमः जानीमः। कटाक्षाणाम्मृगशिशुप्रेक्षणगुणाभिलाषायोगेपि तद्योगकल्पनात्संबन्धातिशयोक्तिः। मालिनीवृत्तम् ॥ १७ ॥

**सोत्कण्ठं** कामादिजन्यपूर्वानुभूतस्मृतिसहितं यथा तथा। 'चिन्ता तु-स्मृतिराध्यानं स्मरणं सस्पृहे पुनः। उत्कण्ठोत्कलिके तस्मिन्नभिध्यातूभयोरपि इति शब्दार्णवः। **यान्येवमिति** ॥ एवं आकुलहृदां व्याकुलमानसानां हरिणार्भकाणां मृगशिशूनां रुचिराणि रम्याणि यानि विलोकितानि विलोकनानि आविर्भवन्ति प्रादुर्भवन्ति। तस्याः महीकुमार्याः सीतायाः विभ्रमकटाक्षविजृम्भितानि लीलापाङ्गालोकनविजृम्भणानि तु ततः हरिणार्भकविलोकनेभ्योपि मधुराणि रुचिराणीति मन्ये। व्यतिकरालङ्कारः। वसन्ततिलकावृत्तम् ॥ १८ ॥

**हा** इति विषादे। ससम्भ्रमं। सत्वरम्। उद्धतं गर्वितं यथा तथा।

(पुनर्नेपथ्ये ।)

अयं खलु दुष्टमतङ्गजः करेण मां विकृष्य व्यापादयति ।

रामः—कथं पिङ्गलस्येव परिदेवितम् । (त्वरितं परिक्रम्य ।) कष्टं भोः कष्टम् ।

अभिनवमृगलोभान्मय्यरण्यान्तरस्थे
प्रियजनपरिमुक्ते पिङ्गलं प्राप्तमेकम् ।
वलयितपृथुशुण्डादण्डसंवेष्टिताङ्गं
नयति निजनिकुञ्जं कुञ्जरः संभ्रमेण ॥ १९ ॥

(पुनर्नेपथ्ये ।)

हा तात, हा सुतवत्सल, हा हतोऽस्मि । हा अम्ब मन्दभागिनि, मृत्युमुखे पातयितुं मां प्रसूतासि । हा सखे रामभद्र, विपाकदारुणस्ते मयि स्नेहानुबन्धः ।

रामः—(सकरुणावष्टम्भम् ।) न भेतव्यं न भेतव्यम् । अयमहमागत एव । (इति विकटं परिक्रम्य ।) अहो धिक् प्रमादः । कथमतिक्रान्त एव बाणगोचरमिभराजः (धनुरुपसहरन् पुरोऽवलोक्य ।) कथं न दृश्यते गजराजः ।

मतङ्गजः गजः । विकृष्य आकृष्य । व्यापादयति मारयति । परिदेवितम् । विलापः । अभीति ॥ अभिनवेषु नूतनेषु मृगेषु लोभात् आसङ्गात् प्रियजनपरिमुक्ते परित्यक्तमित्रजने मयि अरण्यान्तरस्थे वनान्तरास्थिते सति मदन्वेषणाय एकं प्राप्तं आगतं पिङ्गलं वलयितेन कुण्डलितेन पृथुना विपुलेन शुण्डादण्डेन दण्डसदृशकरेण वेष्टितानि संवीतानि अङ्गानि यस्य तथाभूतं कृत्वा । सम्भ्रमेण त्वरया निज निकुञ्जं लतादिपिहितोदरमावासम् । नयति । मालिनीवृत्तम् ॥ १९ ॥

विपाकदारुणः । परिणामे क्रूरः । स्नेहानुबन्धः स्नेहानुषङ्गः । सकरुणावष्टम्भम् करुणावलम्बसहितं यद्वा करुणया दयया अवष्टम्भेन गर्वेण धैर्येण वा सहितं यथा तथा । निकटं समीपम् । अहो चित्रम् । प्रमादः येन मया अनवधानता कृता

(सचिन्तोच्छ्वासम् ।)

भवतु पदवीमेतस्याहं गजस्य विलोकये
सुहृदमनया दूरं गत्वा विमोचयितास्मि च ।
सुलभममले यद्यप्यस्मिन् पदं न शिलातले
तदपि विदितं भृङ्गश्रेणीकृषा मदधारया ॥ २० ॥

(इति परिक्रामितकेनावलोक्य ।)

मरुत्तरलकोरकाकुलकरञ्जकुञ्जोदर-
स्खलन्मुखरनिर्झरक्कणदुदारकारण्डवम् ।
इदं खलु विशृङ्खलावटकुटीरकुम्भीनस-
त्रसन्मृगदृगुत्पलप्रकरनीलमद्रेस्तटम् ॥ २१ ॥

---

तन्मां धिगित्यर्थः । बाणगोचरं शरविषयम् । इभराजः गजश्रेष्ठः । **भवत्विति** ॥ भवतु गजो दर्शनागोचरोऽस्तु । तथापि । अहं एतस्य गजस्य पदवीं मार्गं विलोकये पश्यामि । अनया पदव्या दूरं गत्वा सुहृदं मित्रं पिङ्गलम् । विमोचयितास्मि विमोचयिष्यामि च । विमले निर्मले पांसुरहित इत्यर्थः । अस्मिन् शिलातले पदं गजचरणन्यासः । न सुलभं यद्यपि न सुप्रापमेव । तदपि तथापि भृङ्गाणां भ्रमराणां श्रेणीं पङ्क्तिं कर्षतीति भृङ्गश्रेणीकृट् तया मदधारया मदजलधारया । विदितं गजपदं अनुमितम् । समुच्चयः अनुमानश्चालङ्कारौ । हरिणीवृत्तम् ॥ २० ॥

परिक्रामितकेन परिक्रमणेन । **मरुदिति** ॥ इदं पुरोदृश्यमानम् । मरुता वातेन तरलाः चञ्चलाः कोरकाकुलाः मुकुलव्याप्ताः करञ्जाः नक्तमालाः तेषां कुञ्जः निकुञ्जः तस्य उदरे मध्ये स्खलन्तः सञ्चलन्तः मुखराः शब्दायमानाश्च ये निर्झराः गिरिनदीप्रवाहाः तेषु क्कणन्तः नदन्तः उदाराः महान्तः कारण्डवाः जलकाकाः यस्मिंस्तथाभूतम् । विशृङ्खलाः सङ्कटरहिताः अवटाः गर्ताः वल्मीकानीत्यर्थः । तएव कुटीः क्षुद्रगृहाणि तेषु स्थितेभ्यः कुम्भीनसेभ्यः सर्पेभ्यः त्रस्यतां बिभ्यतां मृगाणां हरिणानां दृशएव उत्पलानि नीलोत्पलानि तेषां प्रकरेण समूहेन नीलम् । अद्रेः गिरेः तटङ्खलु प्रदेशः किल । स्वभावोक्तिः रूपकश्चालङ्कारा पृथ्वीवृत्तम् ॥

तदत्रैव भवितव्यमिभराजेन, तत इतो मृगयिष्ये। (इति विलोक्य सहर्षम्।) दिष्ट्या कथमत्रैव गजगृहीतमुक्तः प्रमुग्ध इव लक्ष्यते पिङ्गलः।

(ततः प्रविशति पिङ्गलवेषेण शिलातलोपविष्टो मूर्च्छां नाटयन् करालः।)

रामः—(उपसृत्य।) सखे, समाश्वसिहि समाश्वसिहि।

(इति पटान्तेन वीजयति।)

अन्तर्दहति शोको मे मोहो मामावृणोति च।
एवं निपतितो भूमौ किं कर्तुं चेष्टसे मयि॥ २२॥

करालः—(स्वगतम्।) यद्दशाननस्य पथ्यं भवति (प्रकाशम्।) (कथंचिदिव चक्षुषी उन्मील्य।) कथं प्रियसखो रामभद्रः।

रामः—अथ किम्।

करालः—(आश्वस्य।) सखे, भवदीयमृगयादर्शनकुतूहलादुपसर्पन्नर्धपथे मदगजेन गृहीतोऽस्मि।

अनन्तरं च।

तव ज्याघोषपरुषे श्रुते सिंहस्य गर्जिते।
गजमात्मानमन्यं वा न जाने मूर्च्छितोऽस्म्यहम्॥ २३॥

---

प्रमुग्धः प्रकर्षेण मूर्च्छां गतः। उपसृत्य समीपं गत्वा। पटान्तेन वस्त्राञ्चलेन। **अन्तरिति**॥ मूर्च्छितं त्वां दृष्ट्वा शोकः दुःखाग्निः मे मम अन्तः मनसि दहति। मोहः मूर्च्छा मां आवृणोति आच्छादयति च। एवं भूमौ निपतितः त्वं मयि मद्विषये किं कर्तुं चेष्टसे यतसे। लोकोक्त्यलङ्कारः॥ २२॥

पथ्यं पथः अनपेतं पथ्यं अनुकूलमित्यर्थः। कथंचिदिव अधिकप्रयासेन। अथकिं इत्यङ्गीकारे। अर्धपथे मार्गमध्ये। **तवेति**॥ तव ज्याघोषवत् यद्वा ज्याघोषेण त्वन्मौर्वीरवजन्यकोपोद्दीपितत्वेनेत्यर्थः। परुषे दारुणे। सिंहस्य गर्जिते श्रुते सति। अहं गजं आत्मानं अन्यं वा न जाने मूर्च्छितः अस्मि॥ २३॥

**रामः**—अतो मन्ये सिंहगर्जितत्रस्तस्यकरिणो हस्ताद्भ्रष्टा परिभ्रष्टोसि । तदिह प्रच्छायशीतले बकुलतरुमूले विश्राम्यतु भवान् ।

**करालः**—भवतापि मृगयापरिश्रान्तेन क्षणमत्र विश्रम्यताम् । यतः ।

अविरलतरुषण्डश्यामलोऽयं वनान्तः
प्रवहति सरिदग्रे चारुपद्मावतंसा ।
अयमपि वनवातः शीतलामोदमुग्धो
मदकलपिकयूनां कूजितान्यातनोति ॥ २४ ॥

**रामः**—प्रकामरमणीयोऽयमुद्देशः, तदत्रैव यावत्परिजनागमनमवस्थातव्यमावाभ्याम् ।

**करालः**—(स्वगतम् ।) यावन्मारीचागमनमिति वक्तव्यम् । (प्रकाशम् ।) एवं भवतु ।

**रामः**—दिष्ट्या कुशलिनं त्वां पश्यामि ।

त्वया मम विना सखे जनककन्यकायाः प्रियं
करग्रहणमङ्गलं गलितमेव तत्तिष्ठतु ।

---

त्रस्तस्य भीतस्य । प्रच्छायशीतले प्रकृष्टा च्छाया यस्मिंस्तत् प्रच्छायं अत एव शीतलं तस्मिन् । **अविरलेति** ॥ अयं वनान्तः वनमध्यं अविरलेन निरवकाशेन तरुषण्डेन वृक्षसमूहेन श्यामलः नीलः अस्ति । अग्रे पुरः चारुपद्मानि रम्यकमलानि अवतंसः शिरोभूषा यस्यास्सा । सरित् नदी प्रवहति सप्रवाहा गच्छति । शीतलः शीतः आ आमोदः यस्मिन् सः आमोदः अधिकपरिमलयुक्तः मुग्धः मूढः अलसः मन्द इति यावत् । यद्वा शीतलामोदाभ्यां शैत्यसौरभ्याभ्यां मुग्धः रम्यः । अयं वनवातोपि । मदेन यौवनमदेन कलानां अव्यक्तमधुरध्वनीनां पिकयूनां तरुणकोकिलानां कूजितानि अव्यक्तनिनदान् । आतनोति विस्तारयति । काव्यलिङ्गालङ्कारः । मालिनीवृत्तम् ॥ २४ ॥

प्रकामं भृशम् । उद्देशः प्रदेशः । यावत्परिजनागमनम् । परिजनागमनपर्यन्तमित्यर्थः । 'यावदवधारणे' इत्यव्ययीभावः । **त्वयेति** ॥ हे सखे त्वया विना मम प्रियं जनककन्यकायाः करग्रहणं पाणिग्रहणमेव मङ्गलं गलितं [illegible]मेव ।

कथं कथय तावकप्रविलयाद्विषादो महा-
नसावविदलय्य मे हृदयमर्म निर्मोक्ष्यति ॥ २५ ॥

**करालः**—(स्वगतम् ।) कथमनेन राघववटुना जानकीकरग्रहण-मङ्गलमप्यात्मनो विदितमासीत् । (प्रकाशम् ।) सखे, मा मैवम् । त्वयि मद्विषादात्परिणयपराङ्मुखे न जीविष्यति सा जानकी ।

**रामः**—(सोत्कण्ठम् ।) अपि सखे, सत्यं तत्काश्यपवचनम्, यदुक्तं मां प्रति भवता ।

मनोभुवा स्वप्नमिषेण दर्शिते
दृढं त्वयि प्रेम निबध्य जानकी ।
कथंचिदध्यासितपल्लवास्तरा
सखीजनाश्वासगिरैव जीवति ॥ २६ ॥ इति ।

**करालः**—(अश्रुतिमभिनीय । आत्मगतम् ।) कथमेतावतापि मारीचो नागतः । (इति चिन्तयति ।)

**रामः**—अपि सखे सत्यमित्यादि पुनः पठति ।

**करालः**—कः काश्यपो नाम ।

तत् । सीतापाणिग्रहणं तिष्ठतु । तावकप्रविलयात् त्वन्नाशात् जातः असौ महान् विषादः शोकः मे मम हृदयस्य मर्म आयुस्स्थानं अविदलय्य अनिर्भिद्य कथं निर्मोक्ष्यति त्यक्ष्यति कथय । पृथ्वीवृत्तम् ॥ २५ ॥

परिणयपराङ्मुखे । विवाहविमुखे सति । **मन इति** ॥ मनोभुवा मन्मथेन स्वप्नमिषेण स्वप्नव्याजेन दर्शिते त्वयि जानकी दृढं प्रेम प्रीतिं निबध्य नितरां बध्वा कृत्वेत्यर्थः । कथञ्चित् कृच्छ्रेण अध्यासितपल्लवास्तरा त्वद्विषयककामताप-मसहमाना किसलयशयने स्थिता सती सखीजनानां आश्वासगिरा सान्त्ववचनेनैव जीवति । अत्र चक्षुःप्रीतिमनस्सङ्गसंज्वराख्यकामावस्था दर्शिताः । वंशस्थवृत्तम् ॥ अश्रुतिं तदुक्तवचनानाकर्णनम् । अभिनीय नाटत्वा । एतावता । इयता कालेनेत्यर्थः ।

**रामः**—किं विस्मृतवानसि। यं कौशिकशिष्य इति भवानेव मां प्रत्याह।

**करालः**—(सभयकम्पम्। आत्मगतम्।) अहो प्रमादः प्रमादः। यन्मारीचगतेन चेतसा प्रस्तुतप्रतीपमेव पृष्टवानस्मि। भवत्वेवं तावत्। (प्रकाशम्।) कस्तं विस्मृतवान्, परं तु मदगजग्रहणचिन्तया परवानस्मि। कथं मिथ्या भविष्यति काश्यपस्यापि वचनम्। शृणु तावत्।

तस्याः सत्यपि हंसतूलशयने शय्या नवैः पल्लवैः
सौवर्णेष्वपि कङ्कणेषु करयोर्भूषा मृणालाङ्कुरैः।
सङ्गीतेऽपि मनोविनोदनविधिस्त्वद्विभ्रमाकर्णनैः
सीता संप्रति किं ब्रवीमि भवता नीता दशामीदृशीम् ॥२७

**रामः**—(स्वगतम्।) कथमात्मनिमित्तमीदृशीमवस्थामनुभवति कल्याणी। (प्रकाशम्।) सखे कृतं परिहासेन।

**करालः**—(स्वगतम्।) प्रकृतोपयोगिन्येवास्य मनोवृत्तिः। तदेवं प्रवक्ष्यामि। (प्रकाशम्।) कथं मद्वचनेऽप्यनाश्वासः। संप्रति हि।

**प्रस्तुतप्रतीपं** प्रकृतपिङ्गलवेषग्रहणस्य प्रतिकूलम्। **परवान्** परवशः। मिथ्या अनृतम्। **तस्या इति** ॥ तस्याः सीतायाः हंसतूलशयने हंसतूलिकातल्पे सत्यपि नवैः पल्लवैः शय्या (रच्यते) सौवर्णेषु कनकमयेषु कङ्कणेषु वलयेषु सत्स्वपि मृणालाङ्कुरैः बिसप्ररोहैः करयोः भूषाभूषणं क्रियते। सङ्गीतेऽपि नृत्तगीतवाद्येषु सत्स्वपि तव विभ्रमस्य शोभायाः 'अथ विभ्रमः। शोभायां संशये हावे' इति हैमः। आकर्णनैः श्रवणैः मनोविनोदनविधिः चित्तविनोदव्यापारः भवति। किमन्यत् ब्रवीमि। सम्प्रति अद्य सीता भवता ईदृशीं दशां स्थितिं नीता प्रापिता। परिसंख्यालङ्कारः। शार्दू... ॥ २७ ॥

**कल्याणी** मङ्गलवती सीता। कृतं अलम्। प्रकृतोपयोगिनी। **प्रकृतं** सीतावृत्तान्तश्रवणे उपयोगिनी उपयुक्ता यद्वा मारीचमायाप्रदर्शयिष्यमाणप्रकृतसीता-

सा न स्नाति न चानुलिम्पति न वा केशेषु धत्ते स्रजं
न क्रीडासु मनो दधाति न सखीरालोकते चाटुषु ।
किंतु न्यस्तमुखाम्बुजं करतले बाष्पायमाणेक्षणं
निश्वासग्लपिताधरं च शयने जागर्ति ते चिन्तया ॥ २८ ॥

**रामः**—( स्वगतम् । )

उक्तिरियं प्रियसुहृदो हृदयमनङ्गेन मे किमपि ।
तरलयति हन्त सन्ध्या सागरमिव चन्द्रकिरणेन ॥ २९ ॥

**करालः**—अपि चेदमस्मदुक्तं काश्यपेन ।

**रामः**—कथमिव ।

**करालः**—

दीना दलत्कुमुदकुड्मलगन्धगर्भे
सन्ध्यानिले चलति सा तरलायताक्षी ।

---

वृत्तान्तानुगुणा । अनाश्वासः अविश्वासः । सेति ॥ सा सीता न स्नाति स्नानं न करोति । नानुलिंपति कुङ्कुमादिविलेपनं न करोति । केशेषु स्रजं मालां न वा धत्ते नैव धरति । क्रीडासु कन्तुकादिक्रीडासु मनः । न दधाति न वहति । चाटुषु सखीभिश्चाटुवाक्येषु कथ्यमानेषु सखीः नालोकते न पश्यति । किन्तु ते तव चिन्तया शयने । करतले न्यस्तं निहितं मुखांबुजं यस्मिन् कर्मणि । बाष्पं उद्गमत इति बाष्पायमाणे ईक्षणे नयने यस्मिन् कर्मणि । निश्वासेन ग्लपितः ग्लानिं प्रापितः अधरः ओष्ठः यस्मिन् कर्मणि तद्यथा भवति तथा । जागर्ति निद्रारहितास्ति । अत्र अरतिजागरसङ्कल्पाख्यमान्मथावस्थाः दर्शिताः । शार्दू... ॥

**उक्तिरिति** ॥ प्रियसुहृदः प्रियसखस्य पिङ्गलस्य इयं उक्तिः मे हृदयं अनङ्गेन कामेन किमपि कथमपि अनिर्वचनीयप्रकारेणेत्यर्थः । सन्ध्या सन्ध्याकालः चन्द्रकिरणेन सागरमिव हन्त चित्रं तरलयति चञ्चलं करोति । उपमालङ्कारः । आर्या वृत्तम् ॥ २९ ॥

**दीनेति** ॥ दलतां विकसतां कुमुदकुड्मलानां सितोत्पलकोरकाणां गन्धः आमोदः गर्भे मध्ये यस्य तस्मिन् । सन्ध्यानिले सन्ध्याकालवाते चलति सति ।

सङ्कल्पलम्भितभवत्परिरम्भणेन
सर्वां निनीषति शशाङ्कवतीं त्रियामाम् ॥ ३० ॥

**रामः**—(सपुलकोद्भेदम् । आत्मगतम् ।)

श्रृण्वतो मम तन्वङ्ग्याः सङ्कल्पपरिरम्भणम् ।
विद्धमुत्कण्ठयेवेदं भिद्यते सहसा मनः ॥ ३१ ॥

अतः खल्विदानीम् ।

मनसि मम रन्ध्रलाभाद्विगलति लज्जा च धैर्यं च ।
अयमप्रविष्टपूर्वः प्रविशति मदनश्च तापश्च ॥ ३२ ॥

**करालः**—सखे, किं तूष्णीं भवसि ।

**रामः**—(धैर्यमवलम्ब्य । प्रकाशम् ।) किमनया कन्याकथया ।

**करालः**—(विहस्य ।)

पृष्टं त्वया प्रथमतश्चरितं नताङ्ग्या
मध्ये श्रुतं पुलकसूचितभावबन्धम् ।

---

दीना भीता "दीना स्त्री मूषिकास्त्रियाम् । वाच्यवद्दुर्गते भीते" इति मेदिनी । अत एव तरले चञ्चले आयते दीर्घे आक्षिणी यस्यास्तथाभूता । सा सीता **सङ्कल्पेन** मनोरथेन लम्भितं प्रापितं भवतः तव परिरम्भणं आलिङ्गनं तेन । **शशाङ्कवतीं** चन्द्रयुक्तां सर्वां त्रियामां रात्रिं निनीषति नेतुमिच्छति । वसन्ततिलका वृत्तम् ॥

सपुलकोद्भेदं रोमाञ्चोद्गमसहितं यथा तथा । **श्रृण्वत इति** ॥ **तन्वङ्ग्याः** कृशाङ्ग्याः सीतायाः सङ्कल्पपरिरम्भणं मानसकर्माधीनमदालिङ्गनं श्रृण्वतः मम इदं मनः उत्कण्ठया सीताविषयकोत्कलिकया विद्धं ताडितमिव सहसा अतर्कितं यथा तथा । भिद्यते विदार्यते ॥ ३१ ॥

**मनसीति** ॥ मम मनसि रन्ध्रस्य पूर्वश्लोकोक्तरीत्या द्वारस्य लाभात् लज्जा विगलति स्रंसते धैर्यञ्च विगलति । पूर्वमप्रविष्टः अप्रविष्टपूर्वः अयं मदनश्च कामश्च प्रविशति तापश्च प्रविशति । तुल्ययोगितालङ्कारः । आर्यावृत्तम् ॥ ३२ ॥

**पृष्टमिति** ॥ नताङ्ग्याः स्तनभरेण अवनताङ्ग्याः सीतायाः चरितं प्रथमतः आदौ त्वया पृष्टम् । मध्ये पुलकैः रोमाञ्चैः सूचितः ज्ञापितः भावबन्धः तादृष-

किं त्वं निवारयसि मामधुनावसाने
को वा जितो न भुवने कुसुमायुधेन ॥ ३३ ॥

**रामः**—( सलज्जम् । आत्मगतम् । ) कथमनेन विदितं मम चापलम् । दग्धहृदय, किं प्रतिपद्यसे ! इदमिदानीम् ।

सा मे यद्यपि सुन्दरी भगवतो मायेव चेतोभुवो
न स्वप्ने न च जागरे नयनयोः पन्थानमासादिता ।
तामाकर्ण्य तथापि तादृशदशावैधुर्यमासेदुषी-
मानन्दाद्भुतशोककौतुकभयव्रीडाकुलं मे मनः ॥ ३४ ॥

( प्रकाशम् । ) किं सखे, तवाप्यविदितम् अपि तु दुर्लभा सा ममेति प्रतिषिध्यते ।

**करालः**—( स्वगतम् । ) कथंचिदस्य मया, दृढीकृतोऽस्यामभिलाषः । ( प्रकाशम् । ) कीदृशी ते चिन्ता । कौशिकमहर्षिरेव तद्घटनाय व्याप्रियते ।

---

याभिप्रायग्रन्थिः यस्मिन् कर्मणि तद्यथा भवति तथा तच्चरितं त्वया श्रुतम् । अधुना अद्य अवसाने अन्ते त्वं मां किन्निवारयसि । भुवने कुसुमायुधेन मन्मथेन को वा न जितः । अर्थान्तरन्यासालङ्कारः । वसन्ततिलकावृत्तम् ॥ ३३ ॥

चापलं तद्विषयकं चपलत्वम् । दग्धहृदय । दुर्लभवस्तुप्रार्थनाजनितसन्तापेन भस्मीकरिष्यमाणत्वात् दग्धप्रायचित्त । किं प्रतिपद्यसे किं प्रतिवक्तुं जानासि । **सेति** ॥ भगवतः चेतोभुवः कामस्य माया शाम्बरीव स्थिता सा सुन्दरी सीता स्वप्ने मे मम नयनयोः पन्थानं मार्गं नासादिता यद्यपि न प्रापितैव जागरे जाग्रदवस्थायाञ्च मम नयनयोः पन्थानं नासादितैव । तथापि तादृशदशया त्वद्वर्णितस्थित्या वैधुर्यं अस्वास्थ्यं आसेदुषीं प्राप्तवतीं तां आकर्ण्य मे मनः आनन्दः तादृश्याः मयि अप्रेरितानुराग इति सन्तोषः अद्भुतं ममाप्यभतपूर्वञ्चापलमिति विस्मयः शोकः तदीयमन्मथावस्थाश्रवणेन दुःखं कौतुकं तद्दर्शनादौ कुतूहलं भयं गुर्वादिभ्योर्भीतिः व्रीडा युष्मदादिभ्यः लज्जा । आनन्दादिभिः आकुलं सङ्कुलं वर्तते । उत्प्रेक्षा समुच्चयः काव्यलिङ्गञ्चालङ्काराः । शार्दू ... ॥ ३४ ॥

**प्रतिषिध्यते** निवार्यते । **तद्घटनाय** तस्याः संयोजनाय । व्याप्रियते ।

**रामः**—(आत्मगतम् ।) कथमसंभावितमाह पिङ्गलः । (प्रकाशम् ।) सखे कथं विदितम् ।

**करालः**—(स्वगतम् ।) कथमिदमविदितमेतस्य । (प्रकाशम् ।) सर्वं काश्यपेनैवोक्तम् ।

(नेपथ्ये ।)

हला, उवणेहि मिणालाइं[1] ।

**करालः**—(स्वगतम् ।) कथमुपक्रान्तो मारीचेन मायाप्रयोगः ।

(ततः प्रविशति मायानिगूढो मारीचः ।)

**मारीचः**—

सीता तिष्ठति यादृशी परिजनस्तस्याः पुनर्यादृश-
स्तत्कर्माणि च यादृशानि निखिलं तद्वत्कृतं मायया ।
किं त्वेकः परमार्थतः पितृवधव्याजाद्विहातुं वपु-
र्जानक्या इति संभृतो रघुशिशोरेव प्रवेशानलः ॥ ३५ ॥

तदिदानीं निर्वर्तितप्राय एव ताटकावधस्य प्रतीकारो लङ्केश्वरस्य मनोरथश्च । (परितोऽवलोक्य ।) अत्र हि वकुलतरुमूले मायापिङ्गलेन करालेन नीतोऽयं राम इव लक्ष्यते ।

---

१. सखि, उपनय मृणालानि ।

व्यापृतो भवति । असम्भावितं अनाशङ्कितम् । **कथमिति** ॥ उपक्रान्तः आरब्धः निगूढः निलीनः । **सीतेति** ॥ सीता यादृशी यादृशास्थित्यादियुक्ता तिष्ठति । तस्याः परिजनः पुनः यादृशः तिष्ठति तत्कर्माणि तस्याः तत्परिजनस्य च कर्माणि यादृशानि तिष्ठति । निखिलं तत्सर्वं मायया तद्वत् तत्तुल्यं कृतम् । किन्तु पितुः तातस्य मैथिलस्य वधव्याजात् जानक्याः वपुः शरीरं हातुं त्यक्तुं इति सम्भृतः संपादितः रघुशिशोरेव (सीतायामायिकत्वात् रामस्य पारमार्थिकत्वाच्च) माया सीतापतनमनुपतिष्यतः रामस्यैव प्रवेशार्थः अनलः अग्निः एकएव परमार्थतः ~~परमार्थे~~ सार्वविभक्तिकस्तसिः कृतः । शार्दू ... ३५ ॥

**निर्वर्तितप्रायः** बहुशः अनुष्ठितः । **प्रतीकारः** । प्रतिक्रिया । **अत्र**-

**रामः**—इत्थमाह काश्यपो माम्—'अत्रभवान् यज्ञनिमित्तं युष्मदुपनिमन्त्रणाय कौशिकमहर्षिरागतः' इति ।

**मारीचः**—(साशङ्कम् । आत्मगतम् ।) किमयं काश्यपः । यदनेन काश्यपो भवानित्यामन्त्रितम् । किमस्य पिङ्गलवेषग्रहणे प्रयोजनम् । तदिदानीं संनिहिते कदलीवने तिरोधाय क्रमेण ज्ञास्यामि ।

(इति तिरोहितस्तिष्ठति ।)

**करालः**—(स्वगतम् ।) यज्ञोपनिमन्त्रणार्थमेव कौशिकागमनामिति निश्चितमेतस्य । (प्रकाशम् ।) सखे, मैवं वादीः । व्याज एवायं कौशिकमहर्षेः ।

**मारीचः**—(श्रुत्वा सभयम् ।) हन्त व्यक्तमिदमभिहितं काश्यपपदप्रयोगं प्रतिषेधतानेन वटुना स्वस्य पिङ्गलवेषग्रहणं कौशिकस्यैव व्याज इति । अतो मन्ये काश्यपवेषेण विप्रलम्भयिष्यन्तं मामभिव्यक्तुं कौशिकस्यायमारम्भः ।

(पुनर्नेपथ्ये ।)

हला उवणीदाइ मिणालाइ मए ।[1]

**रामः**—अये दक्षिणत आलाप इव श्रूयते । कस्यायं भवेत् ।

**करालः**—(सर्वतोऽवलोक्य आत्मगतम् ।) इदानीमपि न दृश्यते काश्यपवेषधारी मारीचः । अतो नायं मायाप्रयोगः । (प्रकाशम् ।) वनभूमिषु नाम वनदेवता विहरेयुः ।

---

१. सखि, उपनीतानि मृणालानि मया ।

---

**भवान्** । पूज्यः । उपनिमन्त्रणाय आह्वानाय । **साशङ्कं** ससन्देहम् । आमन्त्रित कथितम् । अत्रभवानित्यत्र भिन्नपदकल्पनेन मारीचस्य संशय इति भावः । **सन्निहिते** समीपस्थिते **तिरोधाय** अन्तर्धाय । व्याजएवायमित्यस्य अयं पिङ्गलवेषधारी काश्यपः कौशिकमहर्षेः व्याज इत्यर्थम्मत्वा वदति । **हन्तेत्यादिना** ॥ काश्यपपदप्रयोगं प्रतिषेधता व्याजएवायं काश्यप इति वक्तव्ये काश्यापपदमनुक्तवता । **विप्रलम्भयिष्यन्तं** वञ्चयिष्यन्तम् । **अभिव्यक्तुं** प्रकाशयितुम् ।

**मारीचः**—सत्यमेवायं काश्यपः कथमन्यथा मदीयमायाभिज्ञेनाप्यनेन 'जानकीपरिजनः' इति न वर्ण्यते । (विचिन्त्य ।) क्व गतः कराल इति परितप्यते मे हृदयम् । अथवा ।

हन्त निश्चितमेतन्मे करालं पिङ्गलाकृतिम् ।
आलम्ब्य कौशिकस्याज्ञामवधीदेव लक्ष्मणः ॥ ३६ ॥

भवतु द्वावप्येतौ रामकार्यार्थं मायया निग्रहीष्यामि । तदेव सुबाहोरिव करालस्यापि शल्योद्धरणम् ।

**रामः**—सखे, निगूढमस्मिन्निकुञ्जे विटपान्तरितौ पश्यावः ।

(इति शरचापपाणिस्तिष्ठति ।)

**करालः**—तथा । (इत्यनुव्रजति ।)

**मारीचः**—

रघुनन्दन एष सुन्दरः करपद्मार्पितबाणकार्मुकः ।
अहिडिम्भ इवोद्वमन्विषं स्पृहणीयश्च भयङ्करश्च मे ॥ ३७ ॥

भवत्वेवमस्मै दर्शयिष्यामि । (इति ध्यानं नाटयति ।)

**आलापः** भाषणम् । **विहरेयुः** । क्रीडेयुः । हन्तेति ॥ लक्ष्मणः कौशिकस्य आज्ञां आलम्ब्य गृहीत्वा पिङ्गलाकृतिं करालं अवधीत् हतवानेव इत्येतत् मे निश्चितम् । एषः मम निश्चयः हन्तेति विषादे ॥ ३६ ॥

निग्रहीष्यामि मारयिष्यामीत्यर्थः । तदेव रामकार्यार्थनिग्रहणमेव शल्योद्धरणम् । हृदयनिहितशरोत्पाटनं वधप्रतिक्रियेत्यर्थः । **रघ्विति** ॥ करपद्मार्पितबाणकार्मुकः हस्तारविन्दकलितशरचापः । सुन्दरः रम्यः एषः रघुनन्दनः । **विषं उद्वमन्** उद्गिरन् प्रकटयन् अतएव गौणत्वाद्ग्राम्यतैव । तदुक्तं दण्डिना 'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्तु ग्राम्यकक्ष्यां विगाहते ' इति । अहिडिम्भः सर्पशिशुरिव मे स्पृहणीयश्च भयङ्करश्च भवति । उपमेये सुन्दरत्वात् उपमाने शिशुत्वात् स्पृहणीयत्व उपमेये करकलितशरचापत्वात् उपमाने विषोद्वमनात् भयङ्करत्वमिति भावः । उपमाकाव्यलिङ्गसमुच्चया अलङ्काराः । **वियोगिनी** वृत्तम् ॥ ३७ ॥

**रामः**—( अग्रतोऽवलोक्य सविस्मयम् । )

अन्तःशुष्यदुशीरचन्दनरसस्रस्तैः श्रितो रेणुभिः
प्रान्ते कज्जलबिन्दुभिः प्रविगलद्बाष्पावृतैरङ्कितः ।
पर्यन्ते च मृणालहारवलयैर्म्लानापविद्धैर्वृतः
कस्या वामदृशोऽयमङ्गलुलितो रम्यः प्रवालास्तरः ॥ ३८॥

**करालः**—अस्मदालापश्रवणादपत्रपमाणया क्वचिदुच्चलितया कयाचिदुत्कण्ठितया परित्यक्तोऽयं भवेत् ।

( पुनर्नेपथ्ये । )

हला, अप्पेहि से थणेसु एदाइं मिणालाइं । महंतो खु इमाए तवस्सिणिए संदावो ।

**रामः**—सखे, सङ्गतस्ते तर्कः ।

**करालः**—( आत्मगतम् । ) कथं क्वचिन्निलीनेन मारीचेन वितन्यते माया । अथवा । परमार्थोऽयम् । भवतु पश्यामि । ( प्रकाशम् । ) सखे, किञ्चिदग्रतो भवावः ।

१- सखि, अर्पयास्याः स्तनयोरेतानि मृणालानि, महान् खलु अस्याः तपस्विन्याः सतापः ।

**अन्तरिति** ॥ अन्तः मध्ये शुष्यद्भ्यः अङ्गतापात् शोषणं गच्छद्भ्यः उशीरचन्दनरसेभ्यः लामज्जकमिलितचन्दनद्रवेभ्यः स्रस्तैः गलितैः रेणुभिः पांसुभिः श्रितः युक्तः । प्रान्ते अग्रे प्रविगलद्भिः निष्पतद्भिः बाष्पैः अश्रुभिः आहृतैः गृहीतैः कज्जलबिन्दुभिः अञ्जनपृषतैः अङ्कितः चिह्नितः । किञ्च पर्यन्ते समीपे म्लानाः ग्लानाः अतएव अपविद्धाः तैः मृणालरचितैः हारैः वलयैश्च वृतः आवृतः अयं प्रवालास्तरः किसलयशय्या । कस्याः वामदृशः स्त्रियाः अङ्गैः लुलितः लुठितः अतएव रम्यः भवति । काव्यलिङ्गमलङ्कारः । शार्दू...॥३८॥

अपत्रपमाणया लज्जमानया । उत्कण्ठितया सञ्जातोत्कलिकया । **तपस्विन्याः** शोच्यायाः । **सङ्गतः** सुश्लिष्टः । तर्कः ऊहः । निलीनेन निगूढेन । वितन्यते

**रामः**—तथा कुर्वः । (इति परिक्रम्य ।) **केयमग्रे रक्तांशुकपिहितस्तनी पल्लवितेवाशोकलता नवनिकृत्तमत्तकरिदन्तच्छवीनि मृणालानि समानयति ।**

**करालः**—(सशोकम् । आत्मगतम् ।)

न दृश्यतेऽत्र मारीचस्तन्मन्ये काश्यपाकृतिम् ।
विज्ञाय लक्ष्मणेनैनं घातयामास कौशिकः ॥ ३९ ॥

भवतु । नायमवसरः शोकस्य । (प्रकाशम् ।) किमनेन सखे परकलत्रदर्शनेन गवेषयिष्यते परिजनः तदन्यतो गच्छावः ।

**मारीचः**—(सशोकम् ।) निश्चित एवायं काश्यपः यदेष संपादयति वैमुख्यं रामस्य । भवतु । अस्य हृदयमाक्षिपामि ।

(इति ध्यानं नाटयति ।)

**रामः**—सखे, पश्य पश्य ।

अयं क्रीडाशैलः कनककदलीवेष्टिततटो
वहत्यस्योपान्ते विकसदरविन्दा सरिदियम् ।
अदूरे चैतस्या दरदलितमाकन्दकलिको
निकुञ्जोऽयं गुञ्जद्भ्रमरकुलझंकारमधुरः ॥ ४० ॥

अत्रैव मृणालान्युपनयति सीमन्तिनी ।

---

विरच्यते । **रक्तेति** ॥ रक्तवस्त्रावृतकुचा । **पल्लविता** सञ्जातकिसलया । **नवेति** ॥ नवं नूतनं यथा तथा निकृत्तस्य छिन्नस्य मत्तकरिदन्तस्य च्छविः इव च्छविः कान्तिर्येषान्तानि । **नेति** अत्र मारीचः न दृश्यते तत् ततः कौशिकः काश्यपाकृतिं एनं मारीचम् । विज्ञाय लक्ष्मणेन घातयामासेति मन्ये ॥ ३९ ॥

कलत्रं भार्या । गवेषयिष्यते मृगयिष्यते । **वैमुख्यं** एतद्दर्शनपराङ्मुख्यं **आक्षिपामि** आकर्षामि । **अयमिति** ॥ अयं क्रीडाशैलः क्रीडार्हशैलः कनककदलीभिः कनकवर्णफलभरितरम्भाभि यद्वा कनकैः चम्पकैः कदलीभिश्च वेष्टिततटः परिवृततटः । भाति । अस्य क्रीडाशैलस्य उपान्ते समीपे विकसदरविन्दा विकचकमला इयं सरित् नदी वहति प्रवहति । एतस्याः सरितः । अदूरे समीपे अयं

**करालः**—रमणीयमिदं संविधानम् । तदेतद्द्रक्ष्यामि । (इति परावर्तते ।)

**मारीचः**—(सगर्वम् ।) अये काश्यप, हतोऽसि नन्वितो मारीचेन ।

(पुनर्नेपथ्ये ।)

हला, अप्पिदाइ मिणालाइ । सिञ्चेहि णं उसीरचंदणरसेहिं ।[1]

**करालः**—(स्वगतम् ।) कथं मधुरोऽयं बालानामालापः । (उपसृत्य ।) पश्यामि । अथवा, न पश्यामि ।

मारीचे रक्षसां मायासंप्रदायगुरौ हते ।
पर्याकुलस्य मनसः क्व मे धैर्यावलम्बनम् ॥ ४१ ॥

(प्रकाशम् ।) सखे, पश्य पश्य । कोऽयमालाप इति ।

**रामः**—(उपसृत्य दृष्ट्वा ।) पिङ्गल, काः पुनरिमाः समानवयोरूपसंपदः कन्यकाः ।

(ततः प्रविशति किसलयशयनोपविष्टा सीता सख्यश्च ।)

**एका**—हला, णलिणीपत्तेण वीजेहि णम् ।[2]

**अपरा**—तुमं वि चंदणद्दवेण एदाए थणजुअलं अणुलिम्पेहि ।[3]

---

१. सखि, आर्पितानि मृणालानि सिञ्चैनामुशीरचन्दनरसैः ।

२. सखि नलिनीपत्रेण वीजयैनाम् ।

३. त्वमपि चन्दनद्रवेण एतस्याः स्तनयुगलमनुलिम्प ।

---

निकुञ्जः दरदलितमाकन्दकलिकः ईषद्विकसितचूतकलिक अतएव गुञ्जतः अव्यक्त नदतः भ्रमरकुलस्य भृङ्गसमूहस्य झङ्कारेण मधुरः रम्यश्च दृश्यते । शिखरिणी वृत्तम् ॥ ४० ॥

**संविधानं** सन्निवेशः । **मारीच इति** ॥ रक्षसां राक्षसानां मायायाः सम्प्रदायः सम्प्रदानं गुरुपरम्परागतसदुपदेशः तस्य गुरौ मारीचे हते सति । पर्याकुलस्य व्याकुलस्य मे मनसः धैर्यावलम्बनं क्व ॥ ४१ ॥

**समानेति** ॥ तुल्याकृतिवयश्श्रीकाः । **अनुलिम्प** अनुलिप्तं कुरु ।

**करालः**—(दृष्ट्वा स्वगतम् ।) केयमसाधारणरूपलावण्या वरवर्णिनी जानकीवपुषा मदनविकारमनुभवति । अतो मन्ये मारीचस्य मायाप्रयोगः इति । भवतु, द्रक्ष्यामि ।

(प्रकाशम् ।)

एता मनोरमाङ्ग्यः सुरसुदृशो वा भुजङ्गकन्या वा ।
केलीगृहीतबालावपुषः स्मरविजयवैजयन्त्यो वा ॥ ४२ ॥

**रामः**—(साश्चर्यम् ।) सखे, पश्य मध्ये पुनरेतासाम् ।

विभक्तेयं विद्युत्कथमपि घनादभ्रमरुता
शरीरिण्यध्यास्ते शयनमधुना पल्लवमयम् ।

अथवा ।

हरस्य क्रोधाग्नौ हुतवति शरीरं प्रियतमे
वियोगक्षामाङ्गी विगमयति कालं किमु रतिः ॥ ४३ ॥

---

**केयमिति** ॥ असाधारणे अनितरसुलभे (रूपं आकृतिः लावण्यं 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इत्युक्तः कान्तिविशेषश्च ) रूपलावण्ये यस्यास्सा । वरः श्रेष्ठः वर्णः रूपं वरवर्णः अस्य अस्तीति वरवर्णिनी उत्तमा स्त्री । जानक्याइव वपुषा । **एता इति** ॥ **मनोरमाङ्ग्यः** हृद्यावयवाः एताः सुरसुदृशः देवस्त्रियो वा । भुजङ्गकन्याः नागाङ्गना वा । केल्या लीलया गृहीतानि बालावपूंषि कन्याशरीराणि याभिस्ताः स्मरस्य कामस्य विजयवैजयन्त्यः जयपताका वा । सन्देहालङ्कारः । आर्यावृत्तम् ॥ ४२ ॥

**विभक्तेति** ॥ कथमपि केनापि प्रकारेण अभ्रमरुता आकाशवायुना घनात् मेघात् विभक्ता पृथक्कृता इयं विद्युत् तटित् शरीरिणी देहवती सती अधुना अद्य पल्लवमयं शयनं अध्यास्ते किसलयतल्पे वर्तते किम् । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम् । अथवा । प्रियतमे नायके कामे हरस्य शिवस्य क्रोधाग्नौ कोपाग्नौ शरीरं हुतवति दत्तवति सति । वियोगेन प्रियविरहेण क्षामाङ्गी कृशतमाङ्गी रतिः कामपत्नी कालं विगमयति किमु नयति किम् । सन्देहालङ्कारः । शिखरिणीवृत्तम् ॥ ४३ ॥

**करालः**—सखे, दृश्यत एव ।

कृशविलुलितमङ्गं कातरो दृष्टिपातः
परिणतबिसवल्लीपाण्डरा गण्डपाली ।
स्तनतटमकठोरं सर्वमप्येतदस्याः
कथयति सुकुमारं कामदोर्विक्रमं नः ॥ ४४ ॥

**मारीचः**—(सहर्षम् ।) इत इदानीं मारीचमायावागुरालग्न एव क्षत्रियवटुरनेन काश्यपेन ।

लक्ष्मणेन हतस्यापि करालस्याधुना ततः ।
करिष्यते मयैताभ्यां वैरनिर्यातनं द्रुतम् ॥ ४५ ॥

(इति पुनर्ध्यानं नाटयति ।)

**रामः**—अपूर्वमिदमन्यथा लक्ष्यते । तथाहि ।

नादत्ते दधि भाजनस्थितमिदं पातुं पुरः शारिका
बीजापूररसोपभोगविमुखः केलीशुकोऽयं स्थितः ।

---

**कृशं** क्षाम विलुलित पल्लवतल्पे विलुठितं अङ्गम् । कातरः भीतः दृष्टिपातः कटाक्षपातः । परिणता परिपक्वा प्रौढा बिसवल्ली मृणाललतेव पाण्डरा शुभ्रा गण्डपाली कपोलप्रदेशः । अकठोर अकठिनं स्तनतटश्च इत्यस्याः एतत्सर्वमपि सुकुमारं रम्यं सत् । कामस्य दोर्विक्रमं बाहुपराक्रमं नः कथयति अनुमापयति । कार्श्यादिमन्वेष्यंगादीनां सुकुमारत्वात् तत्र कामबाधाजन्यत्वमनुमीयते । अनुमानालङ्कारः । मालिनीवृत्तम् ॥ ४४ ॥

**मारीचेति** ॥ मारीचस्य मायैव वागुरा मृगबन्धनी तस्यां लग्नः प्रविष्टः । **लक्ष्मणेनेति** ॥ ततः मन्मायावागुरालग्नत्वात् । लक्ष्मणेन अधुना हतस्य करालस्यापि वैरनिर्यातनं वधप्रतीक्रियेत्यर्थः । मया एताभ्याम् हनिष्यमाणाभ्यां रामकाश्यपाभ्यां द्रुतं शीघ्रं करिष्यते ॥ ४५ ॥

**नादत्त इति** ॥ शारिका पक्षिविशेषः भाजने पात्रे स्थितं इदं दधि पातुं पुनः नादत्ते न गृह्णाति । अयं केलीशुकः क्रीडाकीरः बीजापूरस्य मातुलङ्गफलस्य रसोपभोगे रसपाने विमुखः पराङ्मुखः स्थितः । असौ हंसोपि दूरान्मुक्तः (अलुक्ष्य-

दूरान्मुक्तमृणालकन्दकवलो हंसोऽप्यसौ वर्तते
तन्व्याः शोकमवेक्ष्य नूनमधुना शोकस्तिरश्चामपि ॥ ४६ ॥

**करालः**—(स्वगतम् ।) विदितमिदानीं मारीचस्यैव मायाप्रयोग इति । (प्रकाशम् ।) सखे, सन्निधानात्कौशिकमहर्षेराश्रमस्य भवेदपि नामेयं जानकी ।

**रामः**—(स्वगतम् ।) उपपन्नमेवैतत् । ईदृशी खल्ववस्था तस्याः काश्यपेन कथिता । (प्रकाशम् ।) अलं असम्भावितार्थकथनेन ।

(ततः प्रविशति काश्यपः ।)

**काश्यपः**—

रामस्य पिङ्गलमुखेन विदेहकन्यां
नीतं मनः स्थिरमुदारगभीरमेव ।
ताटस्थ्यनाटनपरस्य च गाधिसूनो-
राज्ञा गुरोरपि कथंचिदनुष्ठितैव ॥ ४७ ॥

(विचिन्त्य ।) न हि मृगयाप्रवृत्तस्य रामस्य प्रवृत्तिरुपलब्धा, अतः खलु पिङ्गलोऽपि क्वचिदन्विष्य मया विश्लिष्टः । भवतु, अप्रविष्टमिमं माकन्दवाटं प्रविश्य मृगयिष्ये । (इति परिक्रामति ।)

मासः ) मृणालकन्दकबलः बिसमूलग्रासः येन तथाभूतः वर्तते । ततः तन्व्याः ( रक्षिन्याः ) स्त्रियाः शोकं अवेक्ष्य अधुना तिरश्चामपि पक्षिणामपि शोकः वर्तते नून ध्रुवम् । काव्यलिङ्गमलङ्कारः शार्दू... ॥ ४६ ॥

उपपन्न युक्तियुक्तम् । **अलमिति** ॥ असभावितस्य अचिन्तितस्य अर्थस्य विषयस्य कथनेन । **रामस्येति** ॥ स्थिरं अचञ्चलं अतएव उदारं महत् गभीरमेव गम्भीरमपि रामस्य मनः पिङ्गलमुखेन पिङ्गलद्वारा विदेहकन्यां नीतं सीतासक्तं कृतमित्यर्थः । ताटस्थ्यस्य माध्यस्थ्यस्य नाटनं अभिनयः परं मुख्यं यस्य तस्य । विवाहसङ्घटने अप्रविष्टस्येवेत्यर्थः । गुरोः गाधिसूनोः विश्वामित्रस्य आज्ञापि कथञ्चित् अनुष्ठिता कृतैव । समुच्चयालङ्कारः । वसन्ततिलकावृत्तम् ॥ ४७ ॥

**करालः**—( काश्यपं दृष्ट्वा सहर्षम् । आत्मगतम् । ) अयं खलु काश्यपवेषो मारीचो मिथ्यां दर्शयति रामस्य । ( प्रकाशम् । ) सखे, कथमसम्भावितार्थकथनम् । असौ सीतावृत्तान्तवेदी काश्यप इतो दृश्यते । तमेनमानेष्यामि भवदन्तिकम् । ( इति निष्क्रान्तः । )

**रामः**—( दीर्घं निश्वस्य । )

कथयिष्यति कौशिकस्य शिष्यो मदनक्लिष्टमनोरमाङ्गयष्टिम् ।
वसुधातनयामिमां न वेति क्षुभितं मे लभते न शर्म चेतः ॥ ४८

**मारीचः**—कथं रामं विहाय पिङ्गलवेषः काश्यपो दूरं गतः । तदहं यथासङ्कल्पितमस्य रूपमादाय क्रमेण तदध्यवसितमाविष्करिष्ये ।

( इति ध्यानं नाटयति । )

**सीता**—

संदावो मह ण गदो इमिणा सिसिरोवआरेण ।
दिअसे घणसलिलेहिं उप्पलिणीए कहं सुहं होदि ॥ ४९ ॥

---

१. संतापो मम न गतोऽनेन शिशिरोपचारेण ।
दिवसे घनसलिलैरुत्पलिन्याः कथं सुखं भवति ॥

माकन्दवाटं चूतवाटीम् । मिथ्यां मायाम् । **कथयिष्यतीति** ॥ कौशिकस्य शिष्यः काश्यपः इमां वसुधातनयां भूसुतां सीतां मदनेन कामेन क्लिष्टा पीडिता अतएव मनोरमा रम्या च अङ्गयष्टिः अङ्गलता यस्यास्तथाभूताम् । कथयिष्यति वा न वेति क्षुभितं कलुषितं मे चेतः मनः शर्म सुखं न लभते । वसन्तमालिकावृत्तम् ॥ ४८ ॥

यथासङ्कल्पितम् । चिन्तितमनतिक्रम्य । अस्य काश्यपस्य । तत् पूर्वसङ्कल्पितं अध्यवसितं अभिनिवेशम् । आविष्करिष्ये प्रकटयिष्ये । **सन्ताप इति** ॥ मम सन्तापः अनेन शिशिरोपचारेण शैत्योपचारेण न गतः दिवसे रवितापयुते अहनि उत्पलिन्याः नीलोत्पलसरस्याः सुखं कथं भवति । वैधर्म्यधिकरण्येन दृष्टान्तालङ्कारः ॥ ४९ ॥

( इति रोदिति । )

**रामः**—अये, किमेतत् ।

कणद्वीणानादप्रतिनिधिरमुष्या मृगदृशो
मृदुः कण्ठादुद्यन्नभिनवसुधास्यन्दमधुरः ।
मदावेशो यद्वत्प्रगुणमदिरास्वादजनितः
श्रुतोऽयं व्याहारो हृदयमिदमाघूर्णयति नः ॥ ५० ॥

( ततः प्रविशति काश्यपवेषेण मारीचः । )

**मारीचः**—अयमहमिदानीमुपसर्पामि । ( आत्मगतम् । ) गते पिङ्गलवेषे काश्यपे च्छद्मना राममावर्जयिष्ये । (इति विचिन्तयन् परिक्रामति ।)

**रामः**—अहो रूपानुगुणा वाणी । तदनुगुणा च रूपसम्पत् । तथा हि ।

अस्याश्चेदलकावली कृतमलिश्रेणीभिरेणीदृशः
सौन्दर्यं यदि चक्षुषोस्तरलयोः किं मन्मथस्यायुधैः ।
का प्रीतिः कनकारविन्दमुकुले पीनौ स्तनौ चेदतो
मन्ये काचिदियं मनोभवकृता माया जगन्मोहिनी ॥५१ ॥

---

**कणदिति** ॥ कणन्त्याः शब्दायमानायाः वीणायाः विपञ्च्याः नादप्रतिनिधिः ध्वनिसदृशः । अभिनवसुधास्यन्दः नूतनामृतस्राव इव मधुरः रुचिरः । अस्याः मृगदृशः स्त्रियाः कण्ठात् उद्यन् उद्गच्छन् मृदु श्रुतः अयं व्याहारः उक्तिः । प्रगुणमदिरास्वादजनितः अधिकमद्यपानोत्पन्नः मदावेशः यद्वत् मदप्रवेश इव नः मम 'अस्मदोर्द्वयोश्च' इत्येकत्वेपि बहुत्वम् । इदं हृदयं मनः आघूर्णयति भ्रमयति । उपमालङ्कारः । शिखरिणीवृत्तम् ॥ ५० ॥

छद्मना मायया । आवर्जयिष्ये वशीकरिष्ये । **अस्या इति** ॥ अस्याः एणीदृशः मृगीदृशः स्त्रियाः अलकावली कुन्तलपङ्क्तिः अस्ति चेत् अलीनां भृङ्गाणां श्रेणीभिः पङ्क्तिभिः कृतं पर्याप्तम् । अस्याः तरलयोः चञ्चलयोः चक्षुषोः दृशोः सौन्दर्यं अस्ति यदि मन्मथस्य आयुधैः किं प्रयोजनम् । अस्याः पीनौ पीवरौ स्तनौ कुचौ स्तश्चेत् कनकारविन्दमुकुले स्वर्णपद्मकोरके का प्रीतिः । अतः इयं

**मारीचः**—( विहस्य । स्वगतम् । ) 'मारीचकृता' इति वक्तव्यम् ।

**रामः**—( दृष्ट्वा । ) काश्यपोऽयमभ्यागतः । तदेनं द्रष्टुमपत्रपते मे हृदयम् ।

( इति मुखं नमयति । )

**मारीचः**—( स्वगतम् । ) एष खलु ताटकावधमहापातकी क्षत्रियवटुः ।

निगूढाहङ्कारो मनसि निजधैर्येण गुरुणा
दुराधर्षो वीरो रस इव शरीरी परिणतः ।
असौ मे सौभाग्यादमृतमिव सिञ्चन्नपि दृशो
र्विधत्ते वैधुर्यं ज्वलित इव दीपः कलुषयोः ॥ ५२ ॥

कदा पुनरेनमग्नौ प्रवेशयिष्यामि । ( प्रकाशम् । उपसृत्य । ) विजयी भवतु कुमारो रामभद्रः ।

**रामः**—( मुखमुन्नमय्य । ) कथं काश्यपोऽपि ।

मनोभवेन मन्मथेन कृता जगन्मोहिनी भुवनविमोहनकारिणी काचित् अनिवार्च्या माया इति मन्ये। कार्यनिबन्धना अप्रस्तुतप्रशंसा । उत्प्रेक्षा चालङ्कारौ शार्दू.. ॥५१॥

अपत्रपते लज्जते। **पातकी** पापी । **निगूढेति** ॥ मनसि चित्ते निगूढाहङ्कारः गुप्ताभिमानः गुरुणा महता निजधैर्येण स्वीयेन अप्रकम्प्यत्वेन दुराधर्षः दुर्जेयः शरीरी मूर्तिमान् परिणतः परिणामङ्गतः वीरः रस इवेत्युत्प्रेक्ष्यमाणः । असौ रामः सौभाग्यात् सुन्दरत्वात् मे दृशोः अमृतं सिञ्चन्निव स्थितोऽपि कलुषयोः कामलादिरोगदूषितयोः दृशोः ज्वलितः दीप्तः दीप इव वैधुर्यं पीडां विधत्ते तनोति । वीररसलक्षणन्तु उत्साहस्थायिभावकः द्विषदाद्यालम्बनकः अपकारगुणाद्युद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षावेगचिन्तादिसञ्चारितो वीरः' इति । अत्रोत्प्रेक्षविरोधाभासोपमानान्यलङ्कारः । शिखरिणी वृत्तम् ॥ ५२ ॥

**मारीचः**—(साशङ्कम्। आत्मगतम्।) किमनेन मदीया निसृतिः परिज्ञाता। (विमृश्य।) नैतदिह सम्भाव्यते। अपि तु मन्ये परमार्थकाश्यप इति मत्वा पिङ्गलरूपं परित्यज्य पुनः स्वरूपग्रहणे फलं पृच्छति। भवत्वेवं तावत्। (प्रकाशम्।) अकैतवः खल्वहं महर्षिशिष्यः।

**रामः**—(आत्मगतम्।) नूनमयं पिङ्गलेन दृष्टः स्यात्। यदनेन वचनेन जानकीयमिति विज्ञाप्यते। (प्रकाशम्।) किमियं सीतैव।

**मारीचः**—(आत्मगतम्।) न खलु पिङ्गलवेषः स काश्यपः। अत एव नायमाह—'यद्यकैतवस्त्वं कुतः पिङ्गलोऽसि' इति। (प्रकाशम्।) सैवेयं सीता।

**रामः**—(सहर्षम्। आत्मगतम्।) धन्यमसि हृदय, धन्यमसि। (प्रकाशम्।) सखे, तदिमां प्रति सत्यमाह पिङ्गलः।

**मारीचः**—(स्वगतम्।) स तु परमार्थ एव पिङ्गलः। करालस्तु लक्ष्मणेन हत एव। किं करोमितः परम्। (प्रकाशम्।) क्व गतः पिङ्गलः।

**रामः**—(आत्मगतम्।) नूनमस्य तेन न संवादः। कथमेतत्। (प्रकाशम्।) त्वमिहागत इत्यभ्युद्गतः। किमयं प्रागिव वनगजेन गृहीतः स्यात्।

**मारीचः**—(सहर्षम्। आत्मगतम्।) कराल एव पिङ्गलरूपं धृतवान्। अस्थाने पुनरहं संभ्रान्तः। (प्रकाशम्।) न ह्यस्मिन्माकन्दवने तस्य प्रसङ्गः। (इति ध्यानं नाटयति।)

**साशङ्कं** सभयम्। निसृतिः निकृष्टा सृतिः मार्गः निसृतिः कुमार्गः। **अकैतवः** परमार्थकाश्यपः न तु पिङ्गलवेषकाश्यपः। कपटरहितश्च। **यदनेनेति**॥ अनेन वचनेन 'सन्तापो मम नगतः' इत्यादिना व्याहारेण। **कुतः पिङ्गलोसि** किमर्थं पिङ्गलवेषधारिकाश्यपश्चासि। **धन्यं** पुण्यवत्। **संवादः**। सम्भाषणम्। **अभ्युद्गतः** प्रत्युद्गतः। **अस्थाने** अकस्मात्। **माकन्दवने**। चूतवने। **तस्य**

**काश्यपः**—(किंचिद्दूरमग्रतो विलोक्य ।) कथमत्र पल्लवशयनाधिष्ठिता परिमितसखीजनपरिवृता जानकी शिशिरोपचारैरात्मनो मदनतापं परिहरति । अहो कथमेतत् । सा खल्वध्यर्धयोजने कौशिकाश्रममधिवसति । अनया पुनरन्यया तत्समानाकारया भवितव्यम् । (ततः पश्चादवलोक्य, सभयम् ।) अहो बत महति गर्ते शुष्केन्धनसमिद्धो भगवानङ्गारप्रायः संनिहितया महत्या शिलयातिरोहितरूपो हव्यवाहनः । तन्मन्ये विरहज्वरावेगमसहमानयानया तरुण्या प्रवेष्टुमयमनलः संभृत इति । भवतु विटपान्तरित एव पश्यामि । यावत्पिङ्गलसंनिधानं रामदर्शनं वा । (इति विलोकयन् स्थितः ।)

(ततः प्रविशति पिङ्गल ।)

**पिङ्गलः**—क्व पुनरहमिदानीं मृगयाप्रवृत्तं वयस्यं पश्यामि ।

(सर्वतो निर्वर्ण्य । सहर्षम् ।)

शरदलितवराहव्याघ्रभल्लूकशल्य-
प्रमुखमृगशतासृग्बिन्दुसंदर्शितेन ।
सखिगमनपथेन द्रागरण्यादरण्यं
प्रविशति मयि दिष्ट्या दृश्यते काश्यपोऽयम् ॥ ५३ ॥

---

वनगजस्य प्रसङ्गः प्रसक्तिः । **परिमितः** स्वल्पः । **सेति** ॥ अध्यर्धयोजने इतः अर्धाधिकैकयोजनदूरप्रदेशे । कौशिकस्य आश्रमं अधिवसति आश्रमे वसति 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । **तत्समानाकारया** तस्यास्सीतायास्सदृशाकृत्या । बत कष्टं गर्ते अवटे इन्धनं काष्ठं समिद्धः ज्वलितः **अङ्गारप्रायः** अङ्गारबहुलः तिरोहितरूपः छादितस्वरूपः हव्यवाहनः अग्निः । **तरुण्या** युवत्या । अनलः अग्निः सम्भृतः सम्पादितः । **वयस्यं** सखायम् । निर्वर्ण्य दृष्ट्वा । **शरेति** ॥ शरैः बाणैः दलिताः भिन्नाः वराहाः व्याघ्राः भल्लूकाः ऋक्षाः शल्याः श्वाविधः प्रमुखाः मुख्याः येषान्तथाभूतानां मृगाणां शतस्य असृग्बिन्दुभिः रक्तबिन्दुभिः सन्दर्शितेन सूचितेन । सख्युः रामस्य गमनपथेन गमनमार्गेण द्राक् शीघ्रं अरण्यात् अरण्यं मयि प्रविशति सति दिष्ट्या दैवात् अयं काश्यपः दृश्यते । अयं काश्यपस्तु अयथार्थः मालिनीवृत्तम् ॥ ५३ ॥

तदत्रैव वयस्येनापि भवितव्यम्। न हि वसन्तात् ऋते मन्दानिलश्चलति। दिष्ट्या खलु पार्श्वत एव काश्यपस्य।

आबद्धतूणमंसे करकमलद्वन्द्वधृतधनुर्बाणम्।
पश्यामि रसालतले रामं दूर्वादलश्यामम्॥ ५४॥

(इत्युपसर्पति।)

**मारीचः**—(दृष्ट्वा। स्वगतम्।) पिङ्गलवेषः करालोऽयमभिवर्तते। (प्रकाशम्।) वयस्य, पिङ्गलोऽयं संप्राप्तः।

**रामः**—(दृष्ट्वा।) सखे पिङ्गल, संप्रति भवन्तं संभावितार्थत्वादिनमेव जानामि।

**पिङ्गलः**—(स्वगतम्।) किमिदमकाण्डे मामयमेवमालपति। (प्रकाशम्।) वयस्य, मया न गृह्यते तव वचनार्थः।

**मारीचः**—(पिङ्गलमालिङ्ग्य। जनान्तिकम्।) दिष्ट्या कराल, जीवन्तं भवन्तं पश्यामि यदियन्तं समयं काश्यपस्य पिङ्गलवेषग्रहणं तव पुनरमोघलक्ष्मणबाणगोचरतामाशङ्क्य दुर्निवारशोकावेगदूषितं मे हृदयम्।

**पिङ्गलः**—(विहस्य स्वगतम्।) कथं काश्यपेनापि ततोऽप्यसंबद्धमालपितुमुपक्रान्तम्। (प्रकाशम्।) कथय पुनरपि यदुक्तं भवता।

(मारीचः सभयस्तिष्ठति।)

**रामः**—सखे पिङ्गल, वनितामिमामधिकृत्य ब्रवीमि। (इति भ्रूसंज्ञया दर्शयति।)

---

**वसन्तात् ऋते** वसन्तं विना। **आबद्धेति**॥ अंसे भुजशिखरे आबद्धतूणं नद्धतूणीरम्। करकमलद्वन्द्वेन पाणिपद्मद्वयेन धृतधनुर्बाणम्। दूर्वादलवत् श्यामं राम रसालतले चूतवृक्षाधस्तले। पश्यामि॥ ५४॥

अभिवर्तते अभिमुखमागच्छति। **अकाण्डे** अकस्मात्। **जनान्तिकं** तल्लक्षणन्तु "त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकं" इति। **इयन्तं समयं** एतावत्कालपर्यन्तम्। **ततोपि** रामादपि। **असंबद्धं** अननुगतम्। **अधिकृत्य** उद्दिश्य। **उत्कण्ठिता**

**पिङ्गलः**—(स्वगतम् ।) कथमियमुत्कण्ठिता जानकी । पल्लवतल्पशायिनी सखीजनसंभाव्यमाना विटपान्तरे दृश्यते । अत एवेयमीदृशावस्थेति मदुक्तमनुबोधितोऽस्मि वयस्येन ।( सविमर्शम् ।) अहो कथमेतत् । सा खल्वध्यर्धयोजने कौशिकाश्रममधिवसति । (इति सविस्मयं विलोकयन् स्थितः ।)

**मारीचः**—(स्वगतम् ।) नायं करालः । अपि तु परमार्थपिङ्गल एव । हन्त हन्त ।

वत्सं प्रति करालं तं मया तरलचेतसा ।
यत्तदाशङ्कितं पापं तस्य जातो विनिश्चयः ॥ ५५ ॥

यदि वा पिङ्गलवेषः क्वचिदपि गतः स्यात् भवतु । नैष मे शोकावसरः । समापयितव्या हि मायया रामकथा । (प्रकाशम् ।) पश्य सखे, रुदतीमिमां सुदतीम् ।

**रामः**—पश्याम्येव ।

मकरन्दकणा दृगब्जयोर्मुखचन्द्रामृतबिन्दवो यथा ।
मम हि द्रवयन्ति मानसं मदिराक्ष्या बत बाष्पशीकराः ॥ ५६

---

सञ्जातोत्कलिका । संभाव्यमाना उपचर्यमाणा । **सविमर्शं** सपर्यालोचनम् । **वत्समिति** ॥ वत्सं तं करालं प्रति तरलचेतसा चञ्चलमनसा मया । तदा यत् पापं (लक्ष्मणेन निहतो भवेदित्यादिरूपं आशङ्कितं चिन्तितं तस्य पापस्य निश्चयः जातः ॥ ५५ ॥

**समापयितव्या** समाप्तिं प्रापयितव्या । **सुदतीं** शोभनाः दन्ताः यस्यास्तां सुदतीं स्त्रियम् । **मकरन्देति** ॥ माद्यन्त्याभ्यामिति मदिरे हर्षकरे अक्षिणी यस्यास्तस्याः मदिराक्ष्याः अस्याः स्त्रियाः । दृशौ नेत्रे एव अब्जे पद्मे तयोः मकरन्दकणाः पुष्परसबिन्दव इत्युत्प्रेक्ष्यमाणाः किञ्च अस्याः मुखमेव चन्द्रस्तस्य अमृतबिन्दवः यथा सुधाकणा इवेत्युत्प्रेक्ष्यमाणाः मदिराक्ष्याः । बाष्पशीकराः अश्रुकणाः मम मानसं मनः द्रवयन्ति द्रुतं कुर्वन्ति बतेति खेदे । रूपकोत्प्रेक्षे अलङ्कारौ । वियोगिनीवृत्तम् ॥ ५६ ॥

(मारीचो ध्यानं नाटयति ।)

**एका**—

उप्पलिणीए विअ से सीदाए णं तदा सुहं होदि ।
जइ परिरम्भइ राओ चन्दो विअ रामचंदो सो ॥ ५७ ॥

**रामः**—

रोमाञ्चयति ममाङ्गं वचनमिदं चारु जानकीसख्याः ।
कुड्मलयति हि कदम्बं कादम्बिन्याः पयोऽभिनवम् ॥ ५८ ॥

**पिङ्गलः**—(सावमर्शम् । आत्मगतम् ।) नैष काश्यपः तदेवं तर्कये ।

मायया जानकीं व्यञ्जन्मायावी कोऽपि राक्षसः ।
अमर्षी ताटकाद्रोहादस्मिन् किंचिच्चिकीर्षति ॥ ५९ ॥

अत एवायं किंचिदसंबद्धं वदन् पुनः पृष्टो न केवलं प्रतिवदति । अपि तु भयतरलतारकमवलोकयति । अत एवैतद्ब्रवीमि । (प्रकाशम् ।) वयस्य रामभद्र, नेयं जानकी । न चायं तत्परिजनः । न ह्यस्मिन्नरण्ये तत्संभवः अपि तु मायेति नः प्रतिभाति ।

---

१. उत्पलिन्या इवास्याः सीताया ननु तदा सुखं भवति ।
यदि परिरम्भते राजा चन्द्र इव रामचन्द्रः सः ॥

---

**उत्पलिन्या इति** ॥ राजा रञ्जकः सः रामचन्द्रः इमां राजा चन्द्रः उत्पलिनीमिव परिरम्भते यदि आलिङ्गति चेत् ( रभिधातोर्लट् ) तदा ननु तदेव उत्पलिन्याः कुमुदिन्या इव अस्याः सीतायाः सुखं भवति अनेकेवोपमालङ्कारः ॥

**रोमाञ्चयतीति** ॥ जानकीसख्याः चारु रम्यं इदं वचनं ममाङ्गं रोमाञ्चयति रोमाञ्चवत् करोति । कादम्बिन्याः मेघमालायाः अभिनवं नूतनं पयः जलं कदम्बं नीपं कुड्मलयति मुकुलवन्तं करोति हि । दृष्टान्तालङ्कारः ॥ ५८ ॥

**माययेति** ॥ ताटकाद्रोहात् अमर्षी ताटकावधकारिणे रामायकुप्यन्नित्यर्थः । मायावी मायावान् कोपि राक्षसः मायया जानकीं व्यञ्जन् प्रकटयन् सन् । अस्मिन् रामे किञ्चित् वक्तुमशक्यं कर्म चिकीर्षति कर्तुमिच्छति ॥ ५९ ॥

**अपि त्विति** ॥ भयेन तरले चञ्चले तारके अक्षिकनीनिके यस्मिन्

**रामः**—(स्वगतम् ।) कथमस्य पूर्वापरविरुद्धं वचनम् । जानकीय-मिति यः प्रतिज्ञाय तद्वृत्तान्तवेदिनं काश्यपमानेतुं गतः । कथं वा सपरिवारा जानकी माया स्यात् । (प्रकाशम् ।) अपि श्रुतं पिङ्गलवचनं काश्यपेन ।

**मारीचः**—(रामं प्रति । जनान्तिकम् ।)

मन्येऽहं पिङ्गलो भूत्वा मायावी कोऽपि राक्षसः ।
ताटकाद्रोहिणं हन्तुं त्वामन्यत्र निनीषति ॥ ६० ॥

**रामः**—युक्तमाह भवान् । पिङ्गलः पुनरागतश्चेदयं किं प्रतिपत्स्यते ।

**मारीचः**—यत्ताटकया सुबाहुना च प्रतिपन्नम् ।

**रामः**—एवमेवैतत् ।

**पिङ्गलः**—(स्वगतम् ।) काश्यप इति जानन्नस्य वचनं शृणोति वयस्यः । (प्रकाशम् ।) वयस्य, मामन्तरेण कीदृगस्य वचनमाकर्ण्यते ।

**रामः**—(सभ्रूभङ्गम् ।) किं राक्षसोऽपि वचनेष्वभ्यन्तरीक्रियते ।

**पिङ्गलः**—(आत्मगतम् । सभयशोकम् ।) अपि न केवलमन्य इति । राक्षस इत्यपि मामसौ मन्यते । हा हतोऽस्मि कर्णोपजापिनानेन काश्यपरूपेण निशाचरेण । (प्रकाशम् ।) वयस्य विमृश्यतामयं जनः । (इति विवर्णमुखस्तिष्ठति ।)

---

कर्माणि तत् । **मन्य इति** ॥ मायावी कोपि राक्षसः पिङ्गलो भूत्वा ताटकायै ताच्छील्येन द्रुह्यन्तं त्वां हन्तुं अन्यत्र निनीषति नेतुमिच्छतीत्यहम्मन्ये ॥ ६० ॥

**प्रतिपत्स्यते** करिष्यति । **मामन्तरेण** मां विना । **अभ्यन्तरीक्रियते** अभिगत अन्तरं अभ्यन्तरं मध्यं तदस्यास्तीत्यभ्यन्तरः अनभ्यन्तरः अभ्यन्तरः सम्पद्यमानः क्रियते अभ्यन्तरीक्रियते मध्यप्रविष्टः क्रियते । **कर्णोप-**

(मारीचो ध्यानं नाटयति ।)

**सीता**—दुल्लहं[1] खु एदं मम मन्दभाइणीए ।

**रामः**—

अयि मम परिरम्भो दुर्लभः किं भवत्याः
कनकनलिनकोशस्निग्धवक्षोरुहायाः ।
किमपि कुवलयश्रीगर्वसर्वंकषस्ते
मयि मनसिजतप्ते पातितश्चेत्कटाक्षः ॥ ६१ ॥

**मारीचः**—(स्वगतम् ।) स्थिरोऽयमस्यामस्याभिनिवेशः । तत्सुकरमेव मे चिकीर्षितम् । (प्रकाशम् ।) कर्तव्यो जानकीमनोरथो वयस्येन ।

**रामः**—सखे श्रूयताम् ।

या दृष्टा विपिने वधूः
(साश्चर्यम् ।)
इयमभून्मत्प्रेयसी जानकी
या चास्या मदनज्वरार्तिः

---

१. दुर्लभं खल्वेतन्मम मन्दभागिन्याः ।

**जापिना** कर्णे उपजापिना मित्रभेदकारिणा । **अयीति** ॥ अयि हे सीते कुवलयश्रियाः कुमुदशोभायाः गर्वसर्वङ्कषः दर्पसर्वस्वापहारी कुमुदशोभासदृशशोभ इत्यर्थः । ते तव कटाक्षः मनसिजेन कामेन तप्ते मयि पातितः क्षिप्तश्चेत् । तदा । मम परिरम्भः आश्लेषः कनकनलिनकोशस्निग्धवक्षोरुहायाः स्वर्णपद्ममुकुलरम्यकुचायाः भवत्याः । दुर्लभः दुष्प्रापः किम् । तव परिरम्भः मम दुर्लभः किमिति वा योजयितुं शक्यते । उपमा काव्यलिङ्गञ्चालङ्कारौ । मालिनीवृत्तम् ॥ ६१ ॥

अभिनिवेशः अभिलाषः । सुकरम् । सुखेन कर्तुं **शक्यम्** । चिकीर्षितं कर्तुमिष्टम् । **येति** ॥ या वधूः स्त्री विपिने वने दृष्टा । (**साश्चर्यमिति** ॥ तस्या अतर्कितोपनतत्वादाश्चर्यमिति भावः ) सेयं मम प्रेयसी अत्यन्तं प्रिया जानकी अभूत् । किञ्च अस्याः या मदनज्वरार्तिः कामसन्तापजनितपीडा । **सहर्षानु-**

(सहर्षानुरागम् ।)

इयमप्यस्मन्निमित्ताजनि ।

यस्तस्याः प्रशमः

(रोमाञ्चमभिनयन् ।)

स मे ननु परिरम्भेण साध्यः श्रुतः

सत्यप्येवममुं विधातुमधुनाऽनूढेति भीतं मनः ॥ ६२ ॥

(मारीचो ध्यानं नाटयति ।)

**अपराः**—केहं दुल्लहं, कोसिअमहेसी तं तुह वल्लहं तुरिअं पावइस्सदि ।[1]

**रामः**—श्रुत एवायमर्थः पिङ्गलमुखात् ।

**पिङ्गलः**—अहो वृत्तानुकारिता मायाविलासस्य ।

**मारीचः**—श्रुतं किमस्य वचनं वयस्येन ।

**रामः**—काश्यपेन श्रोतव्यमेतस्य वचनम् ।

**काश्यपः**—सत्यं जानकीपरिजन एव परस्परं व्याहरति ।

**पिङ्गलः**—मम हृदयं तु न विश्वसिति किंचिदपि ।

१. कथं दुर्लभं, कौशिकमहर्षिस्तं तव वल्लभं त्वरितं प्रापयिष्यति ।

**रागमिति** ॥ तस्या आर्तेः स्वनिमित्तत्वात् हर्षः अनुरागवत्यामनुरागकरणं सफलमिति तस्यान्तस्यानुरागश्चेति भावः) इयं मदनज्वरार्तेरपि वयं अहं निमित्तं कारणं यस्यास्तथाभूता अजनि जाता । तस्याः मदनज्वरार्तेः प्रशमः या शान्तिः । (**रोमाञ्चमभिनयन्** भावनाधीनतत्परिरम्भवशाद्रोमाञ्च इति भावः) सः मदनज्वरार्तिप्रशमः मे मम परिरम्भेण ननु आलिङ्गनेनैव साध्यः निष्पाद्यः श्रुतः । एवं सत्यपि अमुं परिरम्भं अधुना अद्य विधातुं कर्तुं अनूढा इयमपरिणीतेति मनः भीतम् । शार्दू... ॥ ६२ ॥

**अहो इति** ॥ मायाविलासस्य मायिकविभ्रमस्य । वृत्तानुकारिता परमार्थ-

(मारीचो ध्यानं नाटयति ।)

**एका**—हला, होदु एदं, दसग्गीवो णं पत्थेदि त्ति से हिअआतङ्को।

**काश्यपः**—अनृतमिदमेकम् । यन्नाद्यापि दशग्रीवो जनकराजं प्रार्थयते ।

**रामः**—दशग्रीवोऽपि प्रार्थयत इति विप्रतिषिद्धमेतत् ।

**पिङ्गलः**—(स्वगतम् ।) नैतद्युज्यते मया तु वयस्यस्य नेदं वक्तुं शक्यम् । यदस्याप्यहं राक्षसः संवृत्तः । (प्रकाशम् ।) वयस्य, विमृश्यतामयं जनः ।

**रामः**—(अश्रुतिमभिनीय ।) 'दशग्रीवोऽपि' (इति पुनः पठति ।)

**मारीचः**—को दोषः । स्वतन्त्रस्यापि क्वचित्कस्यचिदस्ति पारतन्त्र्यम् ।

**सीता**—(सास्रम् ।) केहं मं दसग्गीवो वि पत्थेदि । अहं दावतस्स तादेण दिण्णा वि विसं खादिस्सं । जुलणं वा पविस्सम् ।

**रामः**—(सानन्दानुशयम् ।)

मामेवान्वेति भावोऽस्याः परं नान्वेति कञ्चन ।
तदिदं हृदयं प्रेम्णा क्रीणीते तरुणी मम ॥ ६३ ॥

(इति विलोकयन् स्थितः ।)

---

१. सखि भवत्वेतत् । दशग्रीव एनां प्रार्थयत इत्यस्या हृदयातङ्कः ।

२. कथं मां दशग्रीवोऽपि प्रार्थयते । अहं तावत्तस्मै तातेन दत्तापि विषं खादिष्यामि । ज्वलनं वा प्रवेक्ष्यामि ।

---

सीतातत्सखीवृत्तविडम्बित्व अहो आश्चर्यम् । **आतङ्कः** पीडा । **विप्रतिषिद्धं** विरुद्धम् । **स्वतन्त्रस्य** अन्यानधीनस्य । **पारतन्त्र्यं** पराधीनत्वम् । प्रकृते माहेश्वरस्य रावणस्य माहेश्वरजनकपारतन्त्र्यमिति भावः । **खादिष्यामि** भक्षयिष्यामि । **ज्वलनं** अग्निम् । **अनुशयः** अनुतापः । **मामिति** ॥ अस्याः सीतायाः भावः अभिप्रायः मामेव अन्वेति अनुसरति । परं इतरं कञ्चन नान्वेति नानुसरति । तत् ततः इयं तरुणी प्रेम्णा प्रीत्या द्रव्येण मम हृदयं क्रीणीते क्रीतं करोति ॥ ६३ ॥

**काश्यपः**—(करालं विलोक्य । सहर्षम् ।) एष पिङ्गलो मामभिवर्तते। अयि, कथय। किमासादितो मृगयाप्रवृत्तो रामभद्रः।

**करालः**—न केवलमासादितः। त्वदुपदिष्टेन पथा मया वनान्तराद्वनमानीतः, परं तु क्षणमात्रमनवेक्ष्य भवन्तं कौशिकप्रहितलक्ष्मणबाणलक्षीकृतोऽसीति विशङ्कमानस्य मे मानसं कीदृशमभूदिति न जाने।

**काश्यपः**—(विमृश्य । स्वगतम् ।) कोऽयं पिङ्गलरूपावलम्बी लक्ष्मणविपक्षजनेष्वन्तर्भवन्मामपि स्वजनं मन्यते। कोऽपि मद्रूपमवलम्ब्य तिष्ठति। भवतु ज्ञास्यामि। (प्रकाशम् ।) क्व पुनरिदानीं रामभद्रः।

**करालः**—(स्वगतम् ।) नूनमनेन रामगतमनोरथतया नाश्वासितोऽसि। (प्रकाशम् ।) सीतां पश्यन्नस्मिन् रसालतले निवसति।

**काश्यपः**—किं जानासि सीतैवेयमिति।

**करालः**—(विहस्य ।) तथा व्यवहरन्नपि जानामि तवेयं मायेति।

> शम्बरादिन्द्रजयिनो विद्युज्जिह्वान्मयादपि।
> या विशिष्टैव खल्वास्ते ताटकातनय त्वयि ॥ ६४ ॥

**काश्यपः**—(सोद्वेगम् । स्वगतम् ।) मारीचानुचरोऽयं राक्षसो भवेत् मारीचश्च क्वचिदवस्थाय मद्रूपावलम्बी मायां प्रयुङ्क्ते। इति विदितमिदानीम्।

**अभिवर्तते** अभ्युद्गच्छति। **आसादितः** प्राप्तः। **परन्तु** किन्तु। **प्रहितः** प्रेरितः। **लक्षीकृतः** गोचरीकृतः। **पिङ्गलरूपावलम्बी** पिङ्गलरूपधारी। **विपक्षः** शत्रुः। **अन्तर्भवन्** मध्यस्थितः। **शम्बरादिति** ॥ इन्द्रजयिनः इन्द्रजितवतः शम्बरात् तदाख्यात् विद्युज्जिह्वात् तदाख्यराक्षसात् मयात् असुरशिल्पिनोऽपि या माया विशिष्टा श्रेष्ठा सा ताटकातनये मारीचे त्वय्येव आस्ते खलु ॥ ६४ ॥

हा किं करोमि मामेष हनिष्यत्येव राक्षसः ।
शार्दूलस्यान्तिकं प्राप्तो जीविष्यति कथं मृगः ॥ ६५ ॥

(इति मनसा विमृशन्मूर्च्छति ।)

**करालः**—समाश्वसिहि समाश्वसिहि । कृतं कृतमनुशोच्य जननीं ताटकां कृतं कृतमनुचिन्त्य पराक्रमं राजपुत्रस्य (इत्याश्वासयति ।)

**काश्यपः**—(आश्वसन्नुत्थाय साञ्जलिबन्धम् ।)

नाहं भवामि मारीचो नमस्तेऽस्तु निशाचर ।
कृपां कुरु मयि स्वामिन् कीर्तिं प्राप्नुहि शाश्वतीम् ॥ ६६ ॥

**करालः**—कथं विप्रवटुरेवायम् । मया तु जाल्मेन मारीच इति मत्वा तत्तद्व्यवहृतम् । (सशोकावेगम् ।)

तमार्यं प्रति मारीचं मया तरलचेतसा ।
यत्तदाशङ्कितं पापं तस्य जातो विनिश्चयः ॥ ६७ ॥

हा मारीच, हा विविधमायासंप्रदायगुरो (इत्यर्धोक्ते ।) किमिदानीमिनेन प्रलापेन (सकोपावलेपम् ।) अरे रे सुमित्रागर्भविप्लोषण क्षत्रियवटो (इत्युक्त्वा । सविमर्शम् ।) हा कथमस्मिन् क्रमते मम संरम्भः ।

---

**सोद्वेगं** सभयम् । **हेति** ॥ हा कष्टं शार्दूलस्य व्याघ्रस्य अन्तिकं समीपम् । शेषं सुगमम् । दृष्टान्तालङ्कारः ॥ ६५ ॥

विमृशन् विचिन्तयन् । **कृतं कृतं** अलमलम् । **नेति** ॥ शाश्वतीं शश्वत्सदा भवां वर्तमानां शाश्वतीं कीर्तिं प्राप्नुहि लभस्व । शेषं स्पष्टम् ॥ ६६ ॥

**जाल्मेन** असमीक्ष्यकारिणा । **सशोकावेगं** सशोकसम्भ्रमम् । **तमिति** ॥ तरलचेतसा चञ्चलमनसा । स्पष्टमन्यत् ॥ ६७ ॥

**अवलेपः** गर्वः । **सुमित्रेति** ॥ सुमित्रागर्भस्य विप्लोषण दाहक अग्नेरिव तव धरणं तद्गर्भदाहकमिति समिन्दोक्तिरियम् । **हेति** ॥ मम सरम्भः आटोपः अस्मिन् लक्ष्मणे कथ क्रमेत अप्रतिबन्धं प्रवर्तेत । 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदम् ।

राम इव लक्ष्मणोऽपि प्रकृष्टसारो न शक्यते द्रष्टुम् ।
अस्य वधेन तु कुर्यां मारीचवधप्रतीकारम् ॥ ६८ ॥

(इति काश्यपस्य कण्ठं भङ्क्तुमारभते । काश्यपः मोचयित्वा रामाधिष्ठितं रसालतलमभिद्रवति । करालस्तमनुद्रवति ।)

**काश्यपः**—

मामेष राक्षसो हन्तुं मारीचानुचरो बली ।
अनुद्रवति वेगेन पाहि मां राम पाहि माम् ॥ ६९ ॥

**रामः**—कथं काश्यपस्येव परिदेवितम् । सखे, न भेतव्यं न भेतव्यम् । (इत्युपसर्पति ।)

**मारीचः**—वयस्य पश्य मां पार्श्वस्थं काश्यपम् । कस्य परिदेवितं जानीहि ।

**करालः**—(काश्यपमतिक्रम्य द्रवन् ।) 'मामेष राक्षसो हन्तुम् ।'

(इत्यादि पठित्वा राममालिङ्गति ।)

**रामः**—(मारीचं प्रति ।) सखे, पिङ्गलोऽयमागतः ।

**मारीचः**—(सहर्षम् । स्वगतम् ।) अयमेव करालः । काश्यपेन चायमनुगम्यते । (प्रकाशम् ।) वयस्य, पश्य मद्रूपधारिणं मारीचम् ।

**काश्यपः**—सखे रामभद्र, मद्रूपधारी मारीच एवायं तव पार्श्वे स्थितः सीतेति भवन्तं मायया सम्मोहयति ।

---

वृत्तिरप्रतिबन्धः । **राम इति** ॥ प्रकृष्टसारः उत्कृष्टबलः । अस्य काश्यपस्य । स्पष्टमन्यत् ॥ ६८ ॥

**मामिति** ॥ अनुद्रवति अनुधावति । पाहि रक्ष ॥ ६९ ॥

**परिदेवितं** अनुशोचनोक्तिः । **अतिक्रम्य** आतिलंध्य । द्रवन् धावन् ।

करालः—(सहर्षम्। स्वगतम्।) दिष्ट्या जीवति काश्यपरूप इह मारीचः। (प्रकाशम्।) मद्रूपधारी कोऽयं विवर्णमुखस्तिष्ठति।

मारीचः—प्रागेवायं निश्चितो वयस्येनापि राक्षस इति।

पिङ्गलः—(काश्यपसमीपं गत्वा।) सखे काश्यप, करालेति मामयं त्वद्रूपधारी समाहूतवानुपह्वरे मारीचः। अतोऽयं मद्रूपावलम्बी करालो भवति। यो राममालिङ्गितवान्।

रामः—कथमयं काश्यपं मारीच इति वदति। सपरिवारां सीतां मायेति, च पिङ्गलममुं कराल इति च। आश्चर्यम्।

द्वावेतौ पिङ्गलावत्र द्वावेतौ काश्यपावपि।
द्वावेतेषु मम स्निग्धौ द्वावेतेषु निशाचरौ॥ ७०॥

करालमारीचौ—(पिङ्गलकाश्यपौ प्रति।)

एतौ निशाचरौ हन्तुं त्वर्यतां त्वर्यतां सखे।

(रामः सक्रोध शरासने बाणमारोपयति।)

काश्यपः—

सखे मारीचमायेयं कर्तव्यं विमृशन् कुरु॥ ७१॥

रामः—(आत्मगतम्।) कथमेतत्।

एतौ मम प्रियसखाविति तद्गिरैव
जानामि यौ हृदयमीर्ष्यति किञ्चिदाभ्याम्।

उपह्वरे रहसि। द्वाविति॥ एतेषु चतुर्षु स्निग्धौ सखायौ॥ ७०॥

एताविति॥ त्वर्यतां त्वरा क्रियतां (शरासने धनुषि) विमृशन् आलोचयन्॥ ७१॥

एताविति॥ यौ एतौ (करालमारीचौ) तयोः करालमारीचयोः गिरैव मम प्रियसखाविति जानामि आभ्यां (चतुर्थी) मम हृदयं किञ्चित् ईर्ष्यति

यौ राक्षसाविति शरव्यतयाभिमन्ये
दृष्टिस्तयोः पुनरियं वलते दयार्द्रा ॥ ७२ ॥

(इति विमृशन् स्थितः ।)

**मारीचः**—कथमसौ संदिग्धे शरं मोक्तुमनयोः । आस्तामेतत् ।

(इति ध्यानं नाटयति ।)

**एका**—(पटाक्षेपेण संभ्रान्ता प्रविश्य ।) [1]अह्मे हदह्मो ।

**सर्वाः**—(सम्भ्रान्ताः ।) [2]हेला, कहेहि कहेहि । किं अच्चाहिदं संउत्तं अह्माणम् ।

**सीता**—(सोद्वेगम् । शयनात्किंचिदुत्थाय ।) [3]कहेहि कहेहि । मह खु उम्मूलिअं विअ हिअअम् ।

**प्रविष्टा**—[4]अह्मे हद ह्मो, कहं अप्पिअं कहइस्सम् ।

**सर्वाः**—[5]किं अप्पिअं किं अप्पिअम् । कहेहि कहेहि । तं सुणिअ जं कादव्वं तं करिस्सह्मो ।

**प्रविष्टा**—[6]अण्णं किं कहइस्सम् । (इत्यश्रूणि वर्षन्ती ।)

१. वयं हताः स्मः ।
२. सखि, कथय कथय । किमत्याहितं संवृत्तमस्माकम् ।
३. कथय कथय । मम खलून्मूलितमिव हृदयम् ।
४. वयं हताः स्मः, कथमप्रियं कथयिष्यामि ।
५. किमप्रियं किमप्रियम् । कथय कथय । तच्छ्रुत्वा यत्कर्तव्यं तत्करिष्यामः ।
६. अन्यत्किं कथयिष्यामि ।

ईर्ष्यां अक्षान्तिं करोति । यौ (पिङ्गलकाश्यपौ) राक्षसाविति मत्वा शरव्यतया-शरलक्ष्यत्वेन अभिमन्ये विचिन्तये तयोः पुनः तयोरुपरि तु इयं दयार्द्रा कृपारस-सिक्ता मम दृष्टिः वलते निपतति । वसन्ततिलकावृत्तम् ॥ ७२ ॥

**सन्दिग्धे** संशयवान् भवति । **पटाक्षेपेण** असूचितत्वेन पात्रस्य प्रवेशात्पूर्वं तिरस्करिण्याः क्षेपणाभावात् तत्काल एव तिरस्करणपटस्य क्षेपणमिति भावः । **संभ्रान्ता** भीता । **अत्याहितं** महाभीतिः । **सोद्वेगं** सभयम् । उन्मूलि-

[1]पत्थिदेण जणएण ण कण्णा दिज्जदि त्ति भणिदो दसकंठो।

**सर्वाः**—( सोद्वेगम् । )[2]किं तादजणए अप्पिअं आअरिदं दसकंठेण।

**प्रविष्टा**—( सोद्वेगगद्गदम् । )

[3]सीसअं हरिअ तस्स सरोसं एद्ध एदि हरणस्स सहीए ॥७३॥

**सीता**—[4]किं करेमि । ( इति ससंभ्रममुत्थाय पलायते । )

**सख्यः**—[5]अच्चाहिदं अच्चाहिदं। किं करे ह्म । ( इति सीतामनुद्रवन्ति। )

**रामः**—( ससंभ्रममुपसृत्य । ) जानकि, न भेतव्यं दशकण्ठो हरिष्यतीति ।

निहन्तुमेतौ रजनीचरौ मया शरासने यः समधायि सायकः ।

**करालः**—( सभयं मारीचं प्रति । जनान्तिकम् । ) किं करिष्यति क्षात्त्रियवटुः । किमद्य प्रतिपत्तव्यम् ।

**मारीचः**—( जनान्तिकम् ) विप्रवटू समुद्दिश्य कथितमनेन ।

**रामः**—

अनेन हन्यामधुना दशाननं विदेहराजे विहितव्यतिक्रमम् ॥७४॥

---

१. प्रार्थितेन जनकेन न कन्या दीयत इति भणितो दशकण्ठः ।

२. किं तातजनके अप्रियमाचरितं दशकण्ठेन ।

३. शीर्षकं हृत्वा तस्य सरोषमत्रैति हरणस्य सख्याः ॥ ७३ ॥

४. किं करोमि ।

५. अत्याहितमत्याहितम् । किं कुर्मः ।

---

समूलमुत्खातम्। **प्रार्थितेनेति** ॥ भणितः उक्तः ( **सोद्वेगगद्गदं** उद्वेगः भीतिः गद्गदं अस्पष्टवचनं तत्सहितं ) तस्य जनकस्य शीर्षकं शिरः हृत्वा सरोषं सकोपं अत्र सख्याः सीतायाः हरणस्य हरणाय । संबन्धसामान्ये षष्ठी । एति आगच्छति। स्वागतावृत्तम् ॥ ७३ ॥

**पलायते** द्रवति। **निहन्तुमिति** ॥ एतौ रजनीचरौ करालमारीचौ निहन्तुं संहर्तुं मया शरासने धनुषि यः सायकः बाणः समधायि संयोजितः ( प्रतिपत्तव्यं कर्तव्यं ) अनेन सायकेन अधुना अद्य विदेहराजे जनके विहितव्यतिक्रमं कृतापचारं दशाननं रावणं हन्यां संहरेयम् । वंशस्थवृत्तम् ॥ ७४ ॥

**काश्यपः**—का नाम संभावना विदेहराजे व्यतिक्रमस्य ।
यतः ।

सखायमिति मन्वानो विदेहेन्द्रं दशाननः ।
कन्यामर्थयितुं नेष्टे किं पुनः कर्तुमीदृशम् ॥ ७५ ॥

**करालः**—( मारीचं प्रति । जनान्तिकम् ) सर्वथा विरुद्धवादी हन्तव्योऽयं विप्रवटुः ।

**मारीचः**—आस्तामेतत् ! पश्य ।

वज्रक्रूरतलप्रहारविमुखापक्रान्तशक्रद्विप-
प्रेङ्खद्दालविकर्षकेलिदलितावष्टम्भनष्टामरे ।
देवे हन्त दशाननेऽपि सुकरं योऽसौ वधं मन्यते
जेतव्यो युधि केन राघववटुः सर्वे हताः स्मो वयम् ॥ ७६ ॥

**पिङ्गलः**—कः संदेहः ।

( करालमारीचौ सभयमन्योन्यं मुखं पश्यतः । )

**पिङ्गलः**—काश्यपस्य वचनेन ।

**का नामेति** ॥ व्यतिक्रमस्य संभावना का नाम अपचाराशङ्कापि न कर्तव्येत्यर्थः । **सखायमिति** ॥ अयं विदेहेन्द्रः मम सखा इति मन्वानः मन्यमानः दशाननः विदेहेन्द्रं जनकं कन्यां अर्थयितु याचितुं अन्यस्मै कन्यादानोत्सुकं मित्र याचनेन पीडयितुमपीत्यर्थः । न ईष्टे न शक्नोति । ईदृशं जनकशिरश्छेदनरूपकर्म कर्तुं सः नेष्टे इत्यत्र किं पुनः वक्तव्यमित्यर्थः । काव्यार्थापत्त्यलङ्कारः ॥ ७५ ॥

**वज्रेति** ॥ वज्रमिव कुलिशमिव क्रूरं कठिनं तलं हस्ततलं तेन प्रहारः ताडनं तेन विमुखं यथा तथा अपक्रान्तः पलायितः शक्रस्य इन्द्रस्य द्विपः गजः ऐरावतः तस्य प्रेङ्खद्दालविकर्षकेल्या चलद्वालधिकर्षणलीलया दलितावष्टम्भाः पाटितावलेपाः अतएव नष्टाः अदर्शनङ्गताः अमरा यस्य तस्मिन् । देवे प्रभौ दशाननेपि यः वधं सुकरं मन्यते असौ राघववटुः युधि युद्धे केन जेतव्यः जेतुमर्हः । हन्त कष्टम् । ततः सर्वे वयं हताः स्मः शार्दू... ॥ ७६ ॥

**मारीचः**—(प्रकाशम् ।)

एतौ निशाचरौ हन्तुं त्वर्यतां त्वर्यतां सखे ।

(इति ध्यानं नाटयति ।)

**काश्यपः**—

सखे मारीचमायेयं कर्तव्यं विमृशन् कुरु ॥

**सीता**—ऍदस्सिं अण्णोण्णसंघरिसितदरुविडपसंजणिदे दावाणले एदं महासिलं आरुहिअ णिवदंदी तादविपत्तिजादं सोअजादं तस्सिं महापुरुसे बलवंतेण अहिणिवेसेण ढज्जिदस्स अत्तणो अणंगज्जरं उपसमइस्सं ।

(इति निष्क्रान्ता ।)

**पिङ्गलकाश्यपौ**—(स्वगतम् ।) कथमेतद्गापतितं मारीचस्य मायाप्रयोगेण । (प्रकाशम् ।)

सखे मारीचमायेयं कर्तव्यं विमृशन् कुरु ।

**रामः**—किमत्रास्ति विचारणीयम् ।

शरीरं पातयिष्यन्ती पावके यद्विचिन्त्य माम् ।
जानकी प्राह सस्नेहं तन्मे मर्माणि कृन्तति ॥ ७७ ॥

**करालः**—वयस्य, मायाप्रयोग इति प्रलपत्वेष तावत् ।

एतौ निशाचारौ हन्तुं त्वर्यतां त्वर्यतां सखे ॥

---

१. एतस्मिन्नन्योन्यसंघर्षिततरुविटपसञ्जनिते दावानले एतां महाशिलामारुह्य निपतन्ती तातविपत्तिजातं शोकजातं तस्मिन्महापुरुषे बलवताभिनिवेशेन धर्षितस्यात्मनोऽनङ्गज्वरं उपशमयिष्यामि ।

---

**सङ्घर्षिताः** सञ्जातसङ्घर्षाः । विपत्तिः मरणम् । जातं उत्पन्नम् । जातं समूहम् । महापुरुषे रामे । धर्षितस्य अभिभूतस्य । **शरीरमिति** ॥ पावके अग्नौ शरीरं पातयिष्यन्ती जानकी मां विचिन्त्य सस्नेहं यद्वचः प्राह (उवाचेत्यर्थव्ययामिदं) तन्मे मर्माणि कृन्तति छिनत्ति ॥ ७७ ॥

**सख्यः**—हला जाणइ, हा सहिजणवच्छले, सव्वाणं वि अह्माणं तादजणअणिमित्तो संदावो साहारणो एव्व। तुमं कुदो पुढमं पत्थिदासि। अणुव्वजंदीओ अह्मे वि तुए पडिवालणिज्जाओ। अण्णहा तुह विस्सेस-दुक्खं विअ अह्माणं दुस्सहं हविस्सदि। हद्धि हद्धि। कहं जुलणं पविट्ठा एव्व जाणई। हा सहिजणवच्छले, हा विदेहकुलमंगलदीविए। (इत्यर्धोक्ते।) किं रोअणेण। ण खु इमिणा दुक्खं पसमिअदि। ता अह्मे वि तहिं प्पविसामो जत्थ सा सही पविट्ठा। (इति निष्क्रान्ताः।)

**रामः**—(शरमुपसंहरन्।) कष्टं भोः कष्टम्।

भग्नो मे सहसा मनोरथतरुर्भग्नं भुवो भूषणं
भग्नं विश्वसृजो यशस्तनुभृतां भग्नो दृशोरुत्सवः।
भग्नः पञ्चशरस्य किं च जगतां जेतुः समस्तो मदो
वैदेही यदियं पितर्युपरते वह्निं प्रविष्टा शुचा ॥ ७८ ॥

१. सखि जानकि, हा सखीजनवत्सले, सर्वासामप्यस्माकं तातजननिमित्तः संतापः साधारण एव। त्वं कुतः प्रथमं प्रस्थितासि। अनुव्रजन्त्यो वयमपि त्वया प्रतिपालनीयाः। अन्यथा तव विश्लेषदुःखमस्माकं दुःसहं भविष्यति। हा धिक् हा धिक्। कथं ज्वलनं प्रविष्टैव जानकी। हा सखीजनवत्सले, हा विदेहकुलमङ्गलदीपिके। किं रोदनेन न खल्वनेन दुःखं प्रशाम्यति। तस्माद्वयमपि तत्र प्रविशामो यत्रैषा सखी प्रविष्टा।

---

**साधारणः** तुल्यः। अनुव्रजन्त्यः त्वदनुसरणं कुर्वत्यः। प्रतिपालनीयाः प्रतीक्ष्याः। **विश्लेषदुःखमिव** विरहदुःखम्। इवशब्दो वाक्यालङ्कारे। **भग्न इति** ॥ यत् यतः इयं वैदेही पितरि उपरते मृते सति शुचा दुःखेन वह्निं अग्निं प्रविष्टा। ततः। मे मनोरथ एव तरुः सहसा अतर्कितं यथा तथा भग्नः। भुवो भूषणं भग्नम्। विश्वसृजः धातुः यशः भग्नम्। तनुभृतां देहिनां दृशोरुत्सवः भग्नः। किंच जगतां जेतुः पञ्चशरस्य कामस्य समस्तः मदः अवलेपः भग्नः। तुल्ययोगिता काव्यलिङ्गञ्चालङ्कारौ। शार्दू... ७८ ॥

**मारीचः**—( स्वगतम् । ) अस्य शोकाग्निमुद्दीपयामि ( प्रकाशम् । ) कथमियं वह्निं प्रविष्टैव । हा देवयजनसंभवे, हा विदेहकुलनन्दिनि, हा त्रिभुवनैकसौन्दर्यशालिनि, हा राममयैकजीविते, हा जानकि, तवापीयं दशेति किमुच्यते दैवदुर्विलसितम् । ( इति मूर्च्छां नाटयति । )

**करालः**—( मारीचं प्रति । ) काश्यप, समाश्वसिहि समाश्वसिहि ।

**रामः**—किं काश्यप एव प्रथमं मुग्धः । ( सशोकावेगम् । )

पतामि किमहं गिरेः किमु विशामि वारां निधिं
तनुं विदलयामि किं कबलयामि किं वा विषम् ।

**करालः**—( स्वगतम् । )—रे रे क्षत्रियवटो, ताटकां सुबाहुं वा पृच्छ ( प्रकाशम् । मारीचं प्रति । ) काश्यप, का पुनरावयोर्गतिः ।

**मारीचः**—( समाश्वस्य । ) या पुनर्वयस्यस्य ।

**रामः**—

विदेहनृपकन्यकामनुपतामि किं पावके

**मारीचः**—( स्वगतम् । ) एवं क्रियतां, यदर्थोऽयमस्मदारम्भः सर्वोऽपि । ( प्रकाशम् । ) वयस्य, नालमिदं तत्प्रेमभराय ।

**रामः**—

प्रशाम्यति ममान्यथा कथमियं व्यथा मानसी ॥ ७९ ॥

---

**देवयजनसंभवे** यज्ञार्थं कृष्टभूमेरुद्गते । **राममयेति** ॥ रामस्य विकारः रामस्य अवयवः वा रामादागतं सङ्कल्पसिद्धरामप्रचुरं वा राममयं एकं मुख्यं जीवितं यस्यास्तस्यास्सम्बुद्धिः । **प्रमुग्धः** मूर्च्छितः । **पतामीति** ॥ गिरेः पर्वतात् । वारां निधिं समुद्रम् । तनुं शरीरं विदलयामि आसिना विदारयामि । कबलयामि अद्मि । विदेहनृपकन्यकामनु सीतामनुलक्ष्य यद्वा सीतया सह 'अनुर्लक्षणे । तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वाद्द्वितीया । मानसी व्यथा मनःपीडा । पृथ्वीवृत्तम् ॥ ७९ ॥

**पिङ्गलकाश्यपौ**— (जनान्तिकम् ।) हन्त हन्त, विस्मयनीयमिदमनयोर्यातुधानयोर्मिथ्याचरितं, यदावामप्यविश्वसनीयौ वयस्यस्य संपन्नौ । (इति विषादं नाटयतः ।)

**रामः**—(सशोकाश्चर्यम् ।)

अध्यास्य पल्लवमयं शयनं सखीभिः
संभाविता शशिकलेव कृशोज्ज्वलाङ्गी ।
या सांप्रतं मम सखे नयनोत्सवोऽभू-
त्सैवेयमेवमिति शक्यमिदं न सोढुम् ॥ ८० ॥

तदेतामसिनीलां शिलामधिरुह्य यथामनोरथं यतिष्ये ।

(इति शिलायां पादमर्पयति ।)

**पिङ्गलकाश्यपौ**—(जनान्तिकम् ।) अहो राक्षसेन वञ्चिताः स्मः । किं कर्तव्यमिदानीम् । कः पुनरिदं वक्ष्यति तातकौशिकाय । यः प्रतिविधातुं पारयति । (इति पश्यन्तौ तिष्ठतः ।)

**मारीचः**—(स्वगतम् ।) फलितं एव मे मनोरथेन (इति हर्षेण पारवश्यं नाटयन् । प्रकाशम् ।)

सीतानुगतये पादं शिलायामर्पयत्ययम् ।
कराल दृश्यतां रामस्ताटकावधपातकी ॥ ८१ ॥

---

यातुधानयोः राक्षसयोः । संपन्नौ जातौ । **अध्यास्येति** ॥ पल्लवमयं किसलयप्रचुरं शयनं अध्यास्य शयने स्थित्वा । सखीभिः संभाविता उपचरिता शशिनः एका कलेव कृशा उज्ज्वलाङ्गी शोभमानाङ्गी या सीता सांप्रतं संप्रति हे सखे मम नयनोत्सवः अभूत् सैव इयं एवं अग्नौ पतितेत्येवंरूपं इदं व्यसनं सोढुं न शक्यम् । वसन्ततिलकावृत्तम् ॥ ८० ॥

**असिनीलां** खड्गवच्छ्यामां । मनोरथमनतिक्रम्य यथामनोरथम् । **प्रतिविधातुं** प्रतिकर्तुम् । पारयति शक्नोति । **इतीति** ॥ हर्षेण पारवश्यं अस्वायत्तताम् । **सीतेति** ॥ हे कराल ताटकावधेन पातकी पापवान् अयं रामः सीतायाः अनुगतये अनुगमनाय शिलायां पादं अर्पयति निक्षिपति दृश्यताम् ॥ ८१ ॥

**करालः**—( सभ्रूभङ्गहुङ्कारम् । ) मा मा ( इति शिरोधूननेन संज्ञापयति । )

( पिङ्गलः काश्यपस्य हस्तमास्फाल्य हसति । )

**काश्यपः**—वयस्य, श्रुतं भवता भवदीयकाश्यपवचनम् ।

**रामः**—( साशङ्कम् । ) कीदृशमनेन व्याहृतम् । ( इति परावर्तते । )

**मारीचः**—( करालं प्रति । जनान्तिकम् । ) हर्षपरवशस्य मे दग्धमुखादेवं निर्गतम् । कराल, किमितः करवावहे ।

**करालः**—किमितोऽन्यदस्ति कर्तव्यम् । हरिणप्लुतेन पलायावहे ।

( नेपथ्ये । )

जय जय वत्स रामभद्र, जय जय ।

( सर्वे सविस्मयं पश्यन्ति । )

**करालमारीचौ**—( जनान्तिकम् । )

यस्यामनेन पदमर्पितमेकमेव
सीतां हुताशपतितां सहसानुगन्तुम् ।
सेयं शिला घनकचा धृतवल्कलाङ्गी
पीनस्तनी मुनिवधूरिव पर्यणंसीत् ॥ ८२ ॥

कथमेतत् । ( इति चिन्तयतः । )

**रामः**—केयमम्बेव कौसल्या मामामन्त्रयति ।

---

सभ्रूभङ्गहुङ्कारम् । मनोरथसिद्धेरर्वागेव स्वचेष्टितप्रकटनान्मारीचोपरि कोपात् भ्रूभङ्गः हुङ्कारश्च ताभ्यां सहितम् । मा मा इति एवं मा वद मा वदेति शिरसः धूननेन कम्पनेन संज्ञापयति बोधयति । **आस्फाल्य** आताड्य । **साशङ्कं** ससन्देहम् । दुग्धमुखात् निन्द्यवदनात् । हरिणप्लुतेन मृगधावनसदृशधावनेन । **यस्यामिति** ॥ सहसा अविचार्य हुताशे अग्नौ पतितां सीतां अनुगन्तुं यस्यां शिलायां अनेन रामेण एकमेव पदं अर्पितं न्यस्तम् । सेयं शिला घनकचा निबिडकेशा धृतं वल्कलं येन तत् धृतवल्कलं अङ्गं यस्यास्सा । पीनस्तनी पीवरकुचा मुनिवधूः मुनिस्त्रीव पर्यणंसीत् परिणता । वसन्ततिलकावृत्तम् ॥ ८२ ॥

( ततः प्रविशति मुनिपत्नी । )

**मुनिपत्नी**—

परुषितगृहमेधिदत्तशापा-
दुपलतया धृतदीर्घकालदैन्याम् ।
पदकमलपरागपावितां ते
मनुकुलमण्डन विद्धि मामहल्याम् ॥ ८३ ॥

**रामः**—( स्वगतम् । ) असंकृदाकर्णितेयमस्माभिस्तत्रभवतः कौशिकस्य मुखात्। ( प्रकाशम् । ) भगवति, दाशरथिरेष रामोऽभिवादयते ।

**मुनिपत्नी**—वत्स, चिरं जीव ।

**पिङ्गलकाश्यपौ**— ( उपसृत्य ) अम्ब, भगवति शतानन्दजननि, तत्रभवतीमभिवादयावहे ।

**अहल्या**—वत्सौ, अभिमतेन युज्येथाम् ।

**रामः**— अम्ब, कावेतौ ।

**अहल्या**—पिङ्गलकाश्यपावेत्र । किं तु ।

मारीचोऽयं करालोऽयं त्वं मायामोहितो ययोः ।

( इति हस्तेन निर्दिशति । )

( करालमारीचौ सभयं मृगरूपेण पलायितुमारभेते । )

**अहल्या**— वत्स, रघुनन्दन,

द्वावप्येतौ मृगौ भूत्वा धावन्तौ पत्रिणा जहि ॥ ८४ ॥

---

आमन्त्रयति आह्वयति । **परुषितेति** ॥ परुषितः इन्द्रजारभावाहतमनस्कतया रुषितः गृहमेधी गृहस्थः स्वपुरुषः गौतमः तेन दत्तात् शापात् उपलतया प्राप्तेन शिलाभावेन धृतं दीर्घकालं चिरकालं दैन्यं अस्वास्थ्यं यया ताम् । हे मनुकुलमण्डन मनुवंशभूषण राम । ते तव पदकमलस्य परागेण पांसुना पावितां शोधितां मां अहल्यां विद्धि जानीहि । पुष्पिताग्रावृत्तम् ॥ ८३ ॥

**असकृत्** बहुवारम् । **तत्रभवतीं** पूज्यां त्वां । युज्येथां युक्तौ भवतम् । **मारीचोयमिति** ॥ पत्रिणा बाणेन जहि संहर ॥ ८४ ॥

रामः— (सक्रोधम् ।) रे रे दुरात्मानौ राक्षसापशदौ. क यास्यथः, तिष्ठतम् ।

(इति निष्क्रान्तः ।)

पिङ्गलकाश्यपौ—अम्ब, निष्कलङ्कज्ञानसुगृहीतप्रपञ्चस्वरूपतत्त्वे, सनातनगुरोर्गौतमस्य धर्मपत्नि ।

दिष्ट्या गतासि निजरूपमिदं त्वदुक्त्या
दिष्ट्या प्ययं निशिचरौ च गतो निहन्तुम् ।
दिष्ट्यावयोर्गतमुदञ्चति जीवितं च
श्रेयः करोति हि विधिर्जगतोऽनुकूलः ॥ ८९ ॥

अहल्या—युक्तमुक्तं वत्साभ्याम् । (किंचिदग्रतो गत्वा ।) वत्सौ, पश्यतम् ।

कौसल्यासुतबाहुदण्डचलितज्यावल्लिचक्रीकृत-
स्फूर्जत्कार्मुककीर्णबाणदलितग्रीवः करालः पतन् ।

---

राक्षसापशदौ राक्षसाधमौ । **अम्बेति** ॥ अम्ब मातः तत्तुल्ये । निष्कलङ्केन दोषरहितेन ज्ञानेन औपनिषदज्ञानेन सुष्ठु गृहीते ज्ञाते प्रपञ्चस्य विश्वस्य स्वरूपं स्वभावः तत्त्वं परमात्मा च यद्वा गृहीतं प्रपञ्चस्य स्वं निजं रूपं आकृतिः तस्य तत्त्वं याथार्थ्यं यया तस्यास्सम्बुद्धिः । सनाभवः सनातनः स्थिरः सचासौ गुरुश्च तस्य गौतमस्य धर्मार्था पत्नी धर्मपत्नी तस्यास्संबुद्धिः । **दिष्ट्येति** ॥ दिष्ट्या दैवात् इदं निजरूपङ्गता प्राप्तासि । दिष्ट्या अयं रामोपि तव उक्त्या वचनेन निशिचरौ राक्षसौ निहन्तुं गतः । दिष्ट्या आवयोः गतं गतप्रायं जीवितञ्च उदञ्चति उत्पद्यते । उक्तमर्थमर्थान्तरेण समर्थयते अनुकूलः विधिः दैवं जगतः श्रेयः मङ्गलं करोति हि । अर्थान्तरन्यासालङ्कारः । वसन्ततिलकावृत्तम् ॥ ८५ ॥

**कौसल्येति** ॥ कौसल्यासुतस्य रामस्य बाहुदण्डाभ्यां चलितया विधृतया ज्यावल्ल्या मौर्वीलतया चक्रीकृतं मण्डलीकृतं स्फूर्जत् शब्दायमानं कार्मुकं धनु तेन कीर्णैः क्षिप्तैः बाणैः दलिता छिन्ना ग्रीवा कण्ठः यस्य तथोक्तः । कराल

मुक्तन्यङ्कुशरीरमङ्कुरितया मूर्त्या स्वयं तत्क्षणं
राक्षस्या दवदग्धतालनिभया दुग्धे मुदं द्योसदाम् ॥ ८६ ॥

अपि च ।

मारीचो मायया चक्षुर्मार्गमत्यक्रमीदिति ।
चापावरोपितशरो वत्सः प्रतिनिवर्तते ॥ ८७ ॥

( ततः प्रविशति चापावरोपितशरो रामः । )

**रामः**—अम्ब, दिष्ट्या वयमनुगृहीतास्तत्रभवत्या ।

**अहल्या**—वत्स कौसल्यानन्दन ।

त्वत्पादपङ्कजपरागविधूतपाप्मा
भर्तारमार्तजनबान्धव रामचन्द्र ।
शुश्रूषितुं पुनरपि प्रयता पुरेव
वाञ्छामि गौतममृषिं वितराभ्यनुज्ञाम् ॥ ८८ ॥

**रामः**—अस्त्वेवम् । नमस्ते ।

---

तत्क्षणं तस्मिन्नेव क्षणे मुक्तन्यंकुशरीरं त्यक्तमृगदेहं यथा तथा । अङ्कुरितया प्रादुर्भूतया दवदग्धतालनिभया वनाग्निदग्धतालवृक्षसदृश्या ( अत्रोपमा ) राक्षस्या मूर्त्या राक्षसशरीरेण सह स्वयं पतन् सन् द्यवि आकाशे स्वर्गे वा सीदन्तीति द्योसदः देवास्तेषां मुदं सन्तोषं दुग्धे जनयतीत्यर्थः । शार्दू... ॥ ८६ ॥

**मारीच इति** ॥ मारीचः मायया चक्षुषोः दृशोः मार्गं सरणिं गोचरतां अत्यक्रमीत् अतिक्रान्तः इति मत्वा चापात् धनुषः अवरोपितः अवतारितः शरः येन सः वत्सः रामः प्रतिनिवर्तते ॥ ८७ ॥

**त्वदिति** ॥ आर्तजनबान्धव विपन्नजनबन्धो रामभद्र तव पादपङ्कजस्य परागेण पांसुना विधूतपाप्मा निरस्तपापा अतएव प्रयता शुद्धा अहं पुरेव पूर्ववत् पुनरपि भर्तारं गौतमं ऋषिं शुश्रूषितुं वाञ्छामि अभ्यनुज्ञां अनुमतिं वितर देहि । वसन्ततिलकावृत्तम् ॥ ८८ ॥

अहल्या—

पद्मबन्धुकुलोत्तंस परिणेष्यसि जानकीम् ।
जित्वा निशिचरान् सर्वांस्त्रिजगत्पालयिष्यसि ॥ ८९ ॥

( इति निष्क्रान्ता । )

रामः—( सानुशयम् । पिङ्गलकाश्यपौ प्रति । ) वयस्यौ, युवयोर्मुखाव-लोकनाय विलज्जे ।

पिङ्गलकाश्यपौ—अत्रापराध्यति मारीचमाया ।

रामः—सत्यमेवैतत् ।

आविष्कृता मम पुरो जनकात्मजेति
मायैव तेन जननीवधकोपितेन ।
तत्तन्मयानुचरितं परमार्थबुद्ध्या
नान्यत्र किं तु भवतोः सुहृदोः समीपे ॥ ९० ॥

काश्यपः—एवमेव मनुजमात्रस्य । न खलु पुनर्भगवतस्तातकौशि-कस्य । यः पुनरेवं मायाप्रयोगे प्रतिविधानमुपदेक्ष्यति ।

रामः—युक्तं भवानाह ।

**पद्मेति** ॥ पद्मबन्धुकुलोत्तंस रविकुलचूडामणे राम जानकीं परिणेष्यसि उद्वक्ष्यसि सर्वान् निशिचरान् जित्वा त्रिजगत् पालयिष्यसि रक्षिष्यसि ॥ ८९ ॥

सानुशयं सानुतापम् । विलज्जे विशेषलज्जावान् भवामि । अपराध्यति अपराधिनी भवति । **आविरिति** ॥ जनन्याः मातुस्ताटकायाः वधेन कोपितेन तेन मारीचेन मम पुरः जनकात्मजेति मायैव आविष्कृता प्रकटीकृता । मया परमार्थबुद्ध्या यथार्थमिदं सर्वमिति मत्वा । अन्यत्र न । किन्तु सुहृदोः सख्योः भवतोस्समीपे तत्तत् अनुचरितं अनुष्ठितम् । वसन्ततिलकावृत्तम् ॥ ९० ॥

( नेपथ्ये । )

भो जानीत कुमारयातपदवीमेतां हतश्वापदां
कुन्तैः कृन्तत रुन्धते वनपथं कण्ठीरवा भैरवाः ।
अग्रे यान्तमनुप्रयान्ति करिणं भीतं करिण्यो भिया
तूष्णीं पश्यत खेलदेणमिथुनं चण्डाट्टहासैरलम् ॥ ९१ ॥

**रामः**——मामन्विष्यतो मदुपजीविजनस्यायमुद्घोषः ।

**पिङ्गलः**——उपपन्नमेतत् । यत इदानीम् ।

क्ष्वेलागर्जितसिंहगर्जितभयभ्राम्यद्गजग्रामणी-
फीट्कारद्रवदृक्षदर्शनकृतभ्रूभङ्गशाखामृगम् ।
कुन्तक्षुण्णतरक्षुवक्त्रगलितक्षोणीनिविष्टार्भक-
घ्राणव्यापृतरोहिताहितबहूकारं वनाभ्यन्तरम् ॥ १२ ॥

एवमेवमनुजमात्रस्य । कौशिकं विहाय अन्यस्य मनुष्यसामान्यस्य पुरतः न प्रकाशनीयम् । । **भो इति** ॥ रामोपजीविपरिवृढोक्तिरियम् । भो जनाः हताः श्वापदाः दुष्टमृगाः यस्यान्ताम् । एताम् । कुमारेण रामेण यातां गतां पदवीं मार्गं जानीत बुध्यध्वम् । भैरवाः भयङ्कराः कण्ठीरवाः सिंहाः वनपथं वनमार्गं रुन्धते उपरुन्धन्ति ततः तान् कुन्तैः प्रासैः कृन्तत छिन्त । करिण्यः वशाः भिया भयेन अग्रे यान्तं गच्छन्तं करिणं गजं अनुप्रयान्ति अनुधावन्ति । खेलत् क्रीडत् एणी च एणश्च एणौ कुरङ्गौ तयोर्मिथुनं द्वन्द्वं तूष्णीं निश्चेष्टं यथा तथा पश्यत चण्डाट्टहासैः भयङ्कररौद्रहासैः अलं पर्याप्तम् । शार्दू ... ॥ ९१ ॥

अन्विष्यतः मृगयमाणस्य मदुपजीविजनस्य मदनुचरजनस्य । उपपन्नं युक्तम् । **क्ष्वेलेति** ॥ वनाभ्यन्तरं वनमध्यम् । क्ष्वेलागर्जितमेव वीराणां सिंहनाद एव सिंहगर्जितं यद्वा क्ष्वेलागर्जितेन जातं सिंहगर्जितं अथवा क्ष्वेलागर्जितञ्च सिंहगर्जितञ्च ततः भयेन भ्राम्यन्तः ततस्ततो धावन्तः गजग्रामण्यः गजश्रेष्ठाः तेषां फीट्कारेण द्रवतां धावतां ऋक्षाणां भल्लूकानां दर्शनेन कृतः भ्रूभङ्गः भ्रुकुटिः यैस्तथोक्ताः शाखामृगा वानरा यस्मिंस्तत् । कुन्तैः प्रासैः क्षुण्णानां चूर्णितानां तरक्षूणां मृगादनानां वक्त्रेभ्यः मुखेभ्यः गलिताः स्रस्ताः अतएव क्षोण्यां भूमौ निषण्णाः शयिताः

**काश्यपः**—एवमेतत् ।

**पिङ्गलः**—अतिक्रामति समयो मृगयाप्रवृत्तस्य वयस्यस्य ।

**रामः**—( सर्वतोऽवलोक्य । ) कथमुज्जृम्भित एव दिनयौवनारम्भः ।

पान्थानां शरणार्थिनीव चरणं छाया तरोः सेवते
भानुर्दिग्वलयं विलोकितुमिव व्योमाग्रमारोहति ।
तृष्यन्ती दयितार्पितं किसलयं नालोकते कोकिला
क्लान्तां वीजयति प्रियां मधुकरः पक्षानिलेनाधुना ॥ ९३ ॥

तदेतमधुना स्कन्धावारमेव गच्छामः ।

( इति निष्क्रान्ताः सर्वे । )

## इति जानकीपरिणयनाटके तृतीयोऽङ्कः ॥

---

अर्भकाः निजशिशवः तेषां घ्राणे आघ्राणे व्यापृतैः प्रवृत्तैः रोहितैः मृगभेदैः आहितः कृतः वहूकारः भुवस्तम्मार्जनं यस्मिंस्तथाभूतश्चास्ति । अर्भकाघ्राणतत्पररोहितश्वासानिलेन पांसूनामपगमाद्बहूकार इति भावः । स्वभावोक्तिः । शार्दू... ॥ ९२ ॥

समयः कालः । उज्जृम्भितः वृद्धः । दिनस्य अह्नः यौवनारम्भः तारुण्योपक्रमः मद्ध्याह्नकाल इत्यर्थः । **पान्थानामिति** ॥ अधुना अद्य तरोः वृक्षस्य छाया शरणार्थिनीव तापभयात् ताच्छील्येन रक्षकमर्थयमानेव [illegible] सती पन्थानं नित्यङ्गच्छन्तीति पान्थाः अध्वगाः तेषां चरणं पादं सेवते भजते । भानुस्सूर्यः दिग्वलयं दिग्मण्डलं विलोकितुं द्रष्टुमिव व्योम्नः आकाशस्य अग्रं शिखरं आरोहति । तृष्यन्ती पिपासावती कोकिलस्य स्त्री कोकिला दयितेन कोकिलेन अर्पितं दत्तं किसलयं पल्लवं नालोकते न पश्यति । मधुकरः भृङ्गः क्लान्तां आतपपीडितां प्रियां भृङ्गीं पक्षानिलेन गरुद्वातेन वीजयति वीजनोपचारवतीं करोति । उत्प्रेक्षा स्वभावोक्तिश्च । शार्दू... ॥ ९३ ॥

**स्कन्धावारं** शिबिरम् ।

इति श्री श्वेतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां
बालरञ्जन्याख्यायां तृतीयाङ्कव्याख्या पूर्णा ॥

---

# चतुर्थोऽङ्कः ।

(ततः प्रविशति गन्धर्वः ।)

**गन्धर्वः**—सम्प्रति हि ।

निहत्य युधि ताटकां सह बलैः सुबाहुं तथा
करालमपि राघवो मम पुरीमनैषीदिति ।
यमप्रहितवाचिकं निशमयन्वृषा मन्यते
निशाटवधनाटकप्रथमभूमिकोपक्रमम् ॥ १ ॥

अतः खल्वनेन परितुष्टेन समादिष्टोऽस्मि निखिलसुरचक्रचूडामणि-किरणपुञ्जकिञ्जल्कितचरणारविन्देन महाराजमहेन्द्रेण ।

"अयि चित्राङ्गद, संप्रति किं प्रतिपद्यते स्वजनविनिपातमवकर्णयन् कुम्भकर्णाग्रज इति लङ्कां प्रविश्य विचारय" इति । (सवितर्कम् ।)

प्रादुर्भवति देवस्य पक्षपातो रघूद्वहे ।
यावानभ्यधिकं तस्माद्रावणे द्रोहचिन्तनम् ॥ २ ॥

**निहत्येति** ॥ राघवः रामः युधि युद्धे ताटकां बलैस्सैन्यैस्सह सुबाहुं तथा करालमपि निहत्य संहत्य मम यमस्य मम पुरीं अनैषीत् प्रापयदिति एवंरूपं यमेन प्रहितं प्रेरितं वाचिकं सन्देशवाचं निशमयन् श्रृण्वन् वृषा इन्द्रः निशायामटन्तीति निशाटाः राक्षसास्तेषां वधएव नाटकं तत्र प्रथमभूमिकोपक्रमं प्रथमप्रवेश्यवेषारम्भं मन्यते । राक्षसवधरूपनाटके ताटकादिवधं प्रथमभूमिकामन्यत इति भावः । रूपकालङ्कारः । पृथ्वीवृत्तम् ॥ १ ॥

**समादिष्टः** आज्ञापितः निखिलसुराणां चक्रस्य समूहस्य चूडामणिकिरणपुञ्जेन शिरोरत्नमयूखसमूहेन किञ्जल्किते सञ्जातकिञ्जल्के चरणारविन्दे यस्य तेन । **प्रतिपद्यते** करोति । **सवितर्कं** साशङ्कम् । **प्रादुरिति** ॥ देवस्य इन्द्रस्य रघूद्वहे रामे यावान् पक्षपातः स्नेहः प्रादुर्भवति उद्भवति देवस्य रावणे तस्मात्तावतोऽप्यधिकं स्नेहात् अभ्यधिकं द्रोहस्य चिन्तनं प्रादुर्भवति ॥ २ ॥

·भवत्वेवम् । मया तु मायागृहीतराक्षसवेषेण राक्षसराजधानीयं सर्वतः परिरक्षितापि सुप्रवेशा संवृत्ता ।·( अग्रतोऽवलोक्य । ) का पुनरियं राक्षसी मामेवाभिवर्तते । अस्याः खलु ।

उष्ट्रस्येव मुखं कडारकुटिलाः प्रादेशमात्राः कचाः
कुक्षिर्दुन्दुभिरेव कोऽपि कुचयोः स्थूलः कशीयान् परः ।
बाहू वाहसदुर्भगौ गजपतेरङ्घ्री यथाङ्घ्री तथा
तेनास्यां मणिभूषणानि दधते दुःस्थानशोच्यां दशाम् ॥३॥

( ततः प्रविशति राक्षसी । )

**राक्षसी—**( चित्राङ्गदं प्रति । ) [1]भद्द, को तुमं किं करालो अहवा अण्णो ।

**गन्धर्वः—**( आत्मगतम् । ) अनया संभाषणस्य स्वयमेव मार्गो दर्शितः । ( प्रकाशम् । ) कराल एव ।

**राक्षसी—**( सविस्मयम् । ) [2]णं पासाणो विअ तुमं चिट्ठसि । तुह घरिणी गिद्धमुही उण रुदंतीणं रक्खसीणं मज्झवट्टमाणा णाहो रामसरणिहदो त्ति उरं ताडअंदी अज्ज वि रोअणं ण मुंचेदि ।

१. भद्र, कस्त्वं किं करालः, अथवा अन्यः ।

२. ननु पाषाण इव त्वं तिष्ठसि । तव गृहिणी गृध्रमुखी पुनः रुदतीनां राक्षसीनां मध्यवर्तमाना नाथो रामशरनिहत इत्युरस्ताडयन्त्यद्यापि रोदनं न मुञ्चति ।

---

**उष्ट्रस्येति** ॥ अस्या राक्षस्याः मुखं उष्ट्रस्य मुखमिवास्ति । कचाः केशाः कडाराः कर्बुराः कुटिलाः वक्राः प्रादेशमात्राः प्रादेशपरिमिताः । कुक्षिः उदरं दुन्दुभिः भेर्येव । कुचयोः एकः स्थूलः परः कशीयान् अत्यन्तकृशः । बाहू वाहसवत् अजगरवत् दुर्भगौ असुन्दरौ अङ्घ्री पादौ गजपतेरङ्घ्री यथा तथा स्तः । तेन मुखादेररम्यत्वेन अस्यां मणिभूषणानि दुःस्थानेन अरम्यस्थाननिवेशेन शोच्यां शोचनीयां दशां स्थितिं दधते वहन्ति । उपमा काव्यलिङ्गञ्चालङ्कारौ । शार्दू... ॥३॥

**गन्धर्वः**—(स्वगतम्।) करालस्य भार्या सा। तदुपपन्नमेतत्। (प्रकाशम्।) केनैतदुक्तमेतस्यै।

**राक्षसी**—[1]अज्जमारीओ महाराअलंकेसुरं अपेक्खंदो पहत्तप्पमुहाणं अमच्चाणं णिजजणणिं ताडअं सुबाहुं अ तस्स सिणिद्धं करालं एक्केण रहुणंदणेण णिहदं कहिअ जणणीवहेण णिव्विण्णो गोकण्णक्खेत्तं तवं कादुं गदो। तदो सव्वेहिं एसो उत्तंदो जाणीदो।

**गन्धर्वः**—किमत्र पुरे नास्ति लङ्केश्वरः।

**राक्षसी**—[2]णत्थि णत्थि। अदो एव्व देवीए मंदोदरीए 'विज्जुज्जीहस्स घरं गदुअ अज्जउत्तो कहिं गदो त्ति जाणिअ आअच्छ' त्ति अहं पेसिदम्हि। मए वि तत्त गदाए विज्जुज्जीहो ण दिट्ठो। तस्स उण जाआए माआवदीए एव्वं किं वि कहिदं।

**गन्धर्वः**—किं तत्कथय।

**राक्षसी**—[3]तं खु गोवणिज्जं कहं कहइस्सं। अह वा ण खु एत्थ जणअराअपक्खवादी जणो दीवंदरे संभाविअदि। ता सक्कं एव्व कहिदुं। सुणुहि दाव—कोसिअवसेण विज्जुज्जीहेण लक्खणवेसेण सारणेण माआए रामवेसं करिअ लंकेसुरो जाणईपाणिग्गहणत्थं जणअराअं वंचेदुं गदो।

---

१. आर्यमारीचो महाराजलङ्केश्वरमपश्यन् प्रहस्तप्रमुखानाममात्यानां निजजननीं ताटकां, सुबाहुं च तस्य स्निग्धं करालं एकेन रघुनन्दनेन निहतं कथयित्वा जननीवधेन निर्विण्णो गोकर्णक्षेत्रं तपः कर्तुं गतः। ततः सर्वैरेष वृत्तान्तो ज्ञातः।

२. नास्ति नास्ति। अत एव देव्या मन्दोदर्या 'विद्युज्जिह्वस्य गृहं गत्वा आर्यपुत्रः कुत्र गत इति ज्ञात्वागच्छ' इति अहं प्रेषितास्मि। मयापि तत्र गतया विद्युज्जिह्वो न दृष्टः। तस्य पुनर्जायया मायावत्या एवं किमपि कथितम्।

३. तत्खलु गोपनीयं कथं कथयिष्यामि। अथवा न खल्वत्र जनकराजपक्षपाती जनः द्वीपान्तरे संभाव्यते। तस्माच्छक्यमेव कथयितुम्। शृणु हि तावत्—कौशिकवेषेण विद्युज्जिह्वेन लक्ष्मणवेषेण सारणेन मायया रामवेषं कृत्वा लङ्केश्वरो जानकीपाणिग्रहणार्थं जनकराजं वञ्चयितुं गतः।

**गन्धर्वः**—युज्यत एतत्। लोकनिरूढो हि रामेऽभिलाषो जानक्याः।

**राक्षसी**—( सहर्षम्। ) [1]जइ तुमं करालो तदो पुडमं एव्व गदुअ गिद्धमुहीए सोहणं भणिअ पारितोसिअं गहिस्सं।

**गन्धर्वः**—अस्थाने कोऽयमानन्दः। न करालोऽहं, अन्य एव।

**राक्षसी**—( सनिर्वेदम्। ) [2]कहं तह संवुत्तो एव्व करालो।

**गन्धर्वः**—अत्रापि किमस्ति संशयः।

**राक्षसी**—[3]भग्गो मे मणोरहो। तुमं उण अण्णो को।

**गन्धर्वः**—विभीषणानुचरः।

**राक्षसी**—[4]होदु एव्वं। देवीए मंदोदरीए णिओअं कादुं पम्सपरिवाट्टिणी होम्मि। (इति निष्क्रान्ता।)

**गन्धर्वः**—अहमपि दशाननवृत्तान्तं प्रथमं जनकराजाय निवेद्य पश्चान्महाराजमहेन्द्राय निवेदयिष्ये (इति निष्क्रान्तः।)

( **इति मिश्रविष्कम्भः**। )

१. यदि त्वं करालस्ततः प्रथममेव गत्वा गृध्रमुख्याः शोभनं भणित्वा पारितोषिकं ग्रहीष्यामि।

२. कथं तथा संवृत्त एव करालः।

३. भग्नो मे मनोरथः। त्वं पुनरन्यः कः।

४. भवत्वेवम्। देव्याः मन्दोदर्याः नियोगं कर्तुं पार्श्वपरिवर्तिनी भवामि।

**निर्विण्णः** निर्वेदं प्राप्तः। **जायया** भार्यया। **गोपनीयं** गोप्यं बहिरप्रकटनीयम्। **द्वीपान्तरे** अन्यस्मिन् द्वीपे। **निरूढः** प्रसिद्धः। **पारितोषिकं** परितोषे भवं पारितोषिकं सन्तोषनिवेदकेभ्यो दीयमानं वस्तु अध्यात्मादेराकृतिगणत्वा-

(ततः प्रविशति जनकराजः शतानन्दश्च ।)

**जनकः**—

यावन्न याचति निशाचरचक्रवर्ती
कन्यामतः प्रथममेव रघूद्वहाय ।
देयेयमित्यभिमतं कुशिकात्मजो मे
निर्वर्तयिष्यति न वेति चिराय दूये ॥ ४ ॥

**शतानन्दः**—राजन्, अलं विचारेण । किं न जानीमहे महर्षेर्भगवतः कुशिककुलजलधिपारिजातस्य प्रभावमेतस्य ।

निष्प्रत्यूहतपःप्रवृद्धहुतभुग्ज्वालाभितप्तद्रुत-
क्षात्राकारसुवर्णपिण्डरचितब्राह्मण्यभूषोज्ज्वलः ।
यः स्वर्गान्तरसर्गसाहसरसच्छेदार्थसार्थीभव-
द्गीर्वाणाञ्जलिपद्मकुड्मलशशी नालोकि लोकेन किम् ॥ ५ ॥

द्रम् ॥ **अस्थाने** अकाण्डे । **शतानन्दः** जनकपुरोहितः । **यावदिति** ॥ निशाचरचक्रवर्ती रावणः यावत् मम कन्यां न याचति अतः प्रथममेव याचनात्पूर्वमेव रघूद्वहाय रामाय इयं कन्या देया दातव्या इति मे अभिमतं अभीप्सितं कुशिकात्मजः विश्वामित्रः निर्वर्तयिष्यति पूरयिष्यति न वा इति चिराय चिरात् दूये सन्तप्ता भवामि । वसन्ततिलकावृत्तम् ॥ ४ ॥

**निरिति** ॥ यः कौशिकः निष्प्रत्यूहं निर्विघ्नं तप एव प्रवृद्धस्य हुतभुजः अग्नेः ज्वाला तस्यां अभितप्तः द्रुतश्च यः क्षात्राकारः (क्षत्रियाकृतिः) स एव सुवर्णपिण्डः कनकसङ्घातः तेन रचिता ब्राह्मण्यमेव भूषा अलङ्कृतिः तयोज्ज्वलः दीप्तः । स्वर्गान्तरसर्गः अन्यस्वर्गसृष्टिरेव साहसं दुष्करकर्म तत्र रसः रुचिः तस्य च्छेदः नाश एव अर्थः प्रयोजनं तस्मै सार्थीभवतां सङ्घीभवतां गीर्वाणानां देवानां अञ्जलय एव पद्मकुड्मलास्तेषां शशी । सः लोकेन नालोकि किं न दृष्टः किं न ज्ञातः किमित्यर्थः । रूपकालङ्कृतिः । शार्दू.. ॥ ५ ॥

ततः खलु निर्वृत्तेऽपि सीतारामयोः पाणिग्रहणे, लङ्केश्वरः किं करिष्यतीति न शङ्कितव्यमस्माभिः। यतः खल्वयम्।

कृत्वा रामं कुशिकतनयो जृम्भकाद्यस्त्रमन्त्र-
ग्रामावेशप्रगुणितदुराधर्षवीर्यप्रकर्षम्।
शश्वद्विश्वत्रितयविजयोच्चण्डदोस्तम्भभाजो
रक्षोनेतुः क्षपणनिपुणं कर्तुमेव क्षमेत ॥ ६ ॥

(ततः प्रविशति कौशिकलक्ष्मणवेषाभ्यां विद्युज्जिह्वसारणाभ्यां सह रामवेषो दशाननः।)

**दशाननः**—

सुबाहुमारीचसुकेतुकन्यकाः
कुर्युर्मया यत्करणीयमुक्तम्।
तथापि पाणिग्रहणाय तस्या
धृते नृवेषेऽप्यधृतं मनो मे ॥ ७ ॥

**विद्युज्जिह्वः**— महाराज, किमकाण्डे भवतः कातर्यम्।

**कृत्वेति** ॥ कुशिकतनयः रामं जृम्भकाद्यस्त्रमन्त्राणां ग्रामस्य समूहस्य आवेशः प्रवेशः तेन प्रगुणितः पुनरुक्तीकृत इत्यर्थः। दुराधर्षः अनभिभवनीयश्च वीर्यप्रकर्षः शौर्यातिशयो यस्य तथाभूत कृत्वा शश्वत्पुनःपुनः विश्वत्रितयस्य लोकत्रयस्य विजयेन उच्चण्डानुग्रान दोस्तम्भान् बाहुस्तम्भान् भजतीति तथोक्तस्तस्य। रक्षोनेतुः रावणस्य क्षपणे नाशने निपुणं समर्थं कर्तुं क्षमेत शक्नुयादेव। काव्यलिङ्गालङ्कारः। मन्दाक्रान्तावृत्तम् ॥ ६ ॥

**सुबाह्विति** ॥ सुबाहुः मारीचः सुकेतुकन्यका ताटका च मया यत् करणीयं कौशिकप्रत्याशक्तिविघटनादिकं उक्तं तत् कुर्युः कुर्वीरन्नेव। तथापि तस्याः सीतायाः पाणिग्रहणाय नृवेषे धृतेपि मे मनः अधृतं अस्थिरं भवति। वृत्तं वंशस्थेन्द्रवज्रोपेन्द्रमेलनाधीनोपजातिः ॥ ७ ॥

त्वां दृष्ट्वा नवनीलनीरदनिभच्छायं दधानं धनु-
बाणौ पाणियुगेन पङ्कजदलस्निग्धेक्षणं जानकी ।
दूर्वापल्लवगारुडाश्मघटनाकिर्म्मीरहारश्रियं
रामोऽसाविति मोक्ष्यति प्रमुदिता कण्ठे मधूकस्रजम् ॥ ८ ॥

**दशाननः**—न तावदहमभ्यर्थये । किंतु ।

वेणी विलोकितैका करकमलं हेममुद्रितं दृष्टम् ।
वाञ्छा मम वामदृशो गात्रं द्रष्टव्यमन्यदप्यखिलम् ॥ ९ ॥

**सारणः**—

सौन्दर्यनिन्दितरतिं तव संनिधाने
तामागतां वरणमाल्यधरां वरीतुम् ।
आपादचूडमवलोक्य कृतार्थयद्वि
नेत्रे निजं गृहमवाप्य तु विंशतिं च ॥ १० ॥

**त्वामिति** ॥ जानकी नवनीलनीरदनिभच्छायं नूतनश्याममेघसदृशकान्तिम् । पाणियुगेन करद्वयेन धनुर्बाणौ दधानं दधतं पङ्कजदलस्निग्धेक्षणं पद्मदलरम्यनयनं त्वां दृष्ट्वा असौ राम इति मत्वा प्रमुदिता तुष्टा सती अस्य कण्ठं दूर्वापल्लवैरेव गारुडाश्मभिः गरुडनीलरत्नोपलैः घटना संयोजना तया किर्म्मीरः चित्रः हारः मुक्ताहारस्तस्य श्रीरिव श्रीर्यस्यास्ताम् । मधूकस्रजं मधूकमालाम् । मोक्ष्यति अर्पयिष्यति । उपमारूपकनिदर्शनान्यलङ्काराः । शार्दू ... ॥ ८ ॥

**वेणीति** ॥ वामदृशः रम्यनयनायास्सीतायाः एका वेणी कबरी विलोकिता हेममुद्रितं स्वर्णाङ्गुलीयालङ्कृतं करकमलञ्च दृष्टम् । अन्यदप्यखिलं गात्रं अङ्गं द्रष्टव्यमिति मम वाञ्छा इच्छा ॥ ९ ॥

**सौन्दर्येति** ॥ सौन्दर्येण निन्दिता रतिः कामवधूर्यया ताम् । वरीतुं वरणमाल्यधरां तव सन्निधाने सन्निधौ आगतां तां सीतां आपादचूडं पादादिशिरःपर्यन्तम् । अवलोक्य द्वे नेत्रे ( रामवेषेण शेषनेत्रतिरोधानादिति भावः ) कृतार्थय सफले कुरु निजं गृहं अवाप्य प्राप्य तु ( निजरूपधारी सन् ) विंशतिं नेत्राणि च कृतार्थय । वसन्ततिलकावृत्तम् ॥ १० ॥

**दशाननः**—( सदृष्टिक्षेपम् । ) वयमेते मैथिलावसथं प्राप्ताः स्मः ।

सुवर्णकेतकीवर्णसवर्णा यत्र दृश्यते ।
शंकरस्य जटाजूटे चन्द्रलेखेव जानकी ॥ ११ ॥

( प्रविश्य । )

**प्रतीहारी**—महाराज, विजयी भव ।

**जनकः**—जीमूतक, विज्ञापय विज्ञापयितव्यम् ।

**प्रतीहारी**—रामलक्ष्मणाभ्यां साकमत्रभवान् कुशिकनन्दनः प्रतिहारभूमिं संप्राप्तः ।

**जनकः**—( सहर्षप्रश्रयम् । ) भगवन् शतानन्द, तत्रभवता कृतार्घ्यो भगवानद्यानुषङ्गिकत्रैशङ्कवलोकनूतनपरमेष्ठी ककुत्स्थकुमाराभ्यां सह प्रवेशयितव्यः ।

**शतानन्दः**—तथा । ( इति निष्क्रान्तः । )

**जनकः**—

कथमिदं हृदयं मम कौशिके गृहमुपेयुषि राघवसंगते ।
शफरघट्टितनालमिवाम्बुजं तरलतामुपायाति करोमि किम॥१२

---

· **क्षेपः** प्रेरणा । मैथिलावसथ जनकगृहम् । **सुवर्णेति** ॥ शङ्करस्य जटाजूटे कपर्दे चन्द्ररेखा चन्द्रकलेव यत्र मैथिलावसथे । सुवर्णकेतक्याः पर्णेन दलेन सवर्णा समानवर्णा जानकी दृश्यते । उपमालङ्कारः ॥ ११ ॥

ताच्छील्येन ( वार्ता ) प्रतिहरतीति प्रतीहारी द्वाःस्थः । **प्रतिहारभूमिं** द्वारदेशम् । **प्रश्रयः** विनयः । **आनुषङ्गिकेति** ॥ प्रासङ्गिकत्रिशंकुस्वर्गस्य अभिनवविधाता विश्वामित्रः । **कथमिति** ॥ राघवसङ्गते रामलक्ष्मणयुते कौशिके मम गृहे उपेयुषि प्राप्ते सति । इदम्मम हृदयं कथं कुतः शफरघट्टितनालं मीनसङ्घट्टितकाण्डं अम्बुजं पद्ममिव तरलतां चञ्चलतां उपयाति गच्छति किं करोमि द्रुतविलम्बितवृत्तम् ॥ १२ ॥

( ततः प्रविशति शतानन्दो रामलक्ष्मणकौशिकवेषा दशाननादयश्च । ).

**शतानन्दः**—( जनकराजाय । ) **कौशिकादयः** (इति विद्युज्जिह्वादीन्सन्दर्शयति । )

**जनकः**—( आसनादुत्थाय । ) भगवन्, वैदेहः सीरध्वजोऽहमभिवादये ।

**विद्युज्जिह्वः**—स्वस्ति भवते महाराजजनकाय ।

**सारणः**—( अपवार्य दशाननं प्रति । )

राजन्नस्मै नरेन्द्राय स्वतः स्वस्ति भवेन्न किम् ।
जानकीं परिणीय त्वं जामाता भवितासि यत् ॥ १३ ॥

**दशाननः**—( सहर्षम् । ) एवमेतत् ।

( विद्युज्जिह्वो भ्रूसंज्ञया दशाननं जनकाभिवादनाय चोदयति । )

**दशाननः**—( अपवार्य । सारण प्रति । )

यस्य प्रणामसमयं प्रतिपालयन्ति
नाथा दिशामपि तथा प्रणयापराधे ।
मन्दोदरीमपि न यः सहते प्रणन्तुं
सोऽहं किमेतमभिवादयितुं न लज्जे ॥ १४ ॥

**अपवार्य** 'रहस्यङ्कथ्यतेऽन्यस्य परावृत्यापवारितं' इत्युक्तलक्षणमपवारितं कृत्वा। **राजन्निति** ॥ हे राजन् अस्मै नरेन्द्राय जनकाय स्वतः स्वयमेव स्वस्ति मङ्गलं न भवेत्किम् । अपि तु भवेदेवेत्यर्थः । यत् यतः त्वं जानकीं परिणीय जामाता भवितासि भविष्यसि ॥ १३ ॥

**भ्रूसंज्ञया** भ्रुवा संज्ञा अर्थसूचना तया । चोदयति प्रेरयति । **यस्येति** ॥ दिशान्नाथाः दिक्पाला अपि यस्य प्रणामसमयं वन्दनकालं प्रतिपालयन्ति प्रतीक्षन्ते। तथा प्रणयापराधे प्रणयकलहे (तन्निवृत्तिविषय इत्यर्थः) यः मन्दोदरीमपि प्रणन्तुं वन्दितुं न सहते न मृष्यति । स रावणः अहं एतं जनकं अभिवादयितुं नन्न लज्जे किं न त्रपे किं किन्तु लज्जामधिगच्छाम्येवेत्यर्थः । वसन्ततिलकावृत्तम् ।

**सारणः**—( स्वगतम्। ) नूनमेतस्य दुरहंकारग्रन्थिलहृदयस्य जानकीलाभोऽपि न निश्चयकोटिमालम्बते । ( अपवार्य । प्रकाशम्। ) महाराज, न युक्तं भवतः प्रस्तुतप्रतीपमाचरितुम् ।

**दशाननः**—तात, दाशरथिरहमभिवादये ।

( सारणस्तदेव पठति । )

**जनकः**—वत्सौ, दीर्घायुषौ भूयास्ताम् ।

**शतानन्दः**—भगवन् गाधिसूनो,

परस्परसमावेतौ प्रमाणेङ्गितचेष्टितैः ।
अनयोः कतरो रामो लक्ष्मणः कतरोऽनयोः ॥ १५ ॥

**विद्युज्जिह्वः**—( स्वगतम् । ) न कश्चिदपि । ( प्रकाशम् । )

नवाम्बुदश्यामल एष रामो वात्सल्यकृत्तिष्ठति यः कनिष्ठे ।
सौमित्रिरेष द्रुतहेमकान्तिर्यः प्रश्रितो ज्यायसि वर्तते च ॥ १६

**दशाननः**—( अपवार्य । सारण प्रति । ) कुतो विलम्बते जनकः कन्यामानाययितुम् ।

---

**नूनमिति** ॥ दुरहङ्कारः अहमप्यन्यन्नमेयं किमित्येवंरूपा दुष्टा हन्तैव ग्रन्थिः बन्धः तं लाति गृह्णातीति दुरहङ्कारग्रन्थिलं हृदयं यस्य तस्य । **निश्चयकोटिं** निर्णयपक्षम् । नालम्बते नाश्रयति । **प्रस्तुतप्रतीपं** प्रकृतकार्यविरुद्धम् ।
**परस्परेति** ॥ प्रमाणं वयः परिमाण इङ्गित आकृतिः चेष्टितं क्रिया ॥ १५ ॥

**नवेति** ॥ यः कनिष्ठे अनुजे लक्ष्मणे वात्सल्यकृत् प्रीतिकृत् तिष्ठति । नवांबुदश्यामलः नूतनमेघनीलः एषः रामः । यश्च ज्यायसि अग्रजे रामे प्रश्रितः विनीतः वर्तते द्रुतहेमकान्तिः विलीनकनकशोभासदृशशोभः एषः सौमित्रिः लक्ष्मणः । उपमा निदर्शना चालङ्कारौ । वृत्तमुपजातिः ॥ १६ ॥

**सारणः**—( स्वगतम् । ) अहो मूर्खजनमूर्धन्यस्य कीदृशमिद- मौत्सुक्यम् । नन्विदानीमेव जनकदर्शनमेतस्य । ( प्रकाशम् । अपवार्य । ) महाराज, क्षम्यतां क्षणमात्रम् ।

**शतानन्दः**—भगवन् कौशिक,

**दशाननः**—( अपवार्य । सामर्षम् । )

मन्येऽहं तापसे तस्मिन्मारीचेन निपातिते ।
असौ कौशिकशब्देन ताद्रूप्यादाश्रयीकृतः ॥ १७ ॥

**सारणः**—( अपवार्य । ) तदस्याः पाणिग्रहणं जानक्याः ।

**शतानन्दः**—

पुत्रार्थं चरतस्तपो दशरथादेतावतानेहसा
कृच्छ्रेण व्यतिलङ्घितेषु वयसां षष्टौ सहस्रेष्वपि ।
चत्वारो जनिताः सुतास्त्रिभुवनालङ्कारभूता गुणै-
र्दिष्ट्या याजयता विभण्डकसुतेनेति प्रमोदामहे ॥ १८ ॥

**विद्युज्जिह्वः**—( स्वगतम् । ) अयं खल्वहल्यासुतः ।

---

**विलंबने** कालविलंब करोति । **मूर्धन्यः** मूर्धनि भवः मूर्धन्यः अग्रे- सर इत्यर्थः । **औत्सुक्यं** 'कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत्' इत्युक्तलक्षणम् । **मन्य इति** ॥ तस्मिन् तापसे मुनौ कौशिके मारीचेन निपातिते व्यापादिते सति । असौ विद्युज्जिह्वः तस्यैव कौशिकस्यैव रूपमाकृतिर्यस्य तस्य भावस्त- स्मात् ताद्रूप्यात् कौशिक इति शब्देन आश्रयीकृतः विषयीकृतः आहूत इत्यर्थः ॥ १७ ॥

**तदिति** । तत् अस्याः जानक्याः पाणिग्रहणं क्षणमात्रं क्षम्यतामिति पूर्वेण योज्यम् । **पुत्रेति** ॥ कृच्छ्रेण कष्टेन वयसां षष्टौ सहस्रेषु व्यतिलंघितेष्वपि एतावता अनेहसा कालेन पुत्रार्थं तपश्चरतः दशरथात् दिष्ट्या दैवात् पुत्र- कामेष्टिं याजयता विभण्डकसुतेन ऋष्यशृङ्गेण गुणैः त्रिभुवनस्य अलंकारभूताः चत्वारः सुताः जनिता इति प्रमोदामहे । शार्दू... ॥ १८ ॥

मारीचेन हतं श्रुत्वा मध्ये पदवि राघवम् ।
दुःखं च लप्स्यते तावद्यावान्मोदोऽस्य जन्मनि ॥ १९ ॥

(प्रकाशम् ।) न केवलं भवतां प्रमोदः, अपि तु जगन्मात्रस्य ।

**दशाननः**—सारण, जानकीपरिणयमित्यमृतमयान्यक्षराणि श्रावयसि । मम तु ताटकया सानुचरस्य कौशिकस्य पुनरागमनप्रत्यूहः सुकरो न वेति पारिप्लवं मे हृदयम् ।

(सविमर्शम् ।)

वत्स व्याप्रियसे वृथा परिमितायुष्यैर्मनुष्यैः समं
योद्धुं युद्धमदोऽस्ति ते यदि सुरैर्योद्धव्यमोजस्विभिः ।
इत्युक्तोऽपि सुरर्षिणा यदि पुरा हन्यामजस्यात्मजं
रामोऽयं क्व भवेद्विदेहतनयारागः क्व वा जृम्भताम् ॥२०॥

**सारणः**—(अपवार्य ।) नारदगिरा मनुष्यैरप्रतियुद्ध्यमानेन भवता दशरथो विमुक्त इतीदमुपपन्नम् । शृणु तावत् ।

**मारीचेनेति** ॥ जन्मनि राघवजनने अस्य शतानन्दस्य यावान् मोदः सन्तोषः । मध्ये पदवि मार्गमध्ये मारीचेन हतं राघवं श्रुत्वा तावद्दुःखं लप्स्यते (अयं शतानन्दः) प्राप्स्यति ॥ १९ ॥

**अमृतमयानि** अमृतविकृतानि । **प्रत्यूहः** विघ्नः । **पारिप्लवं** चञ्चलम् । **वत्सेति** ॥ हे वत्स रावण । आयुरेव आयुष्यं ॥ स्वार्थिकष्यञ् ॥ परिमितं अल्पं आयुष्यं येषान्तैः मनुष्यैस्समं योद्धुं युद्धं कर्तुं वृथा मुधा व्याप्रियसे प्रवर्तसे । ते युद्धाय मदः बलावलपः अस्ति यदि तदा ओजस्विभिः बलवद्भिः सुरैः सह योद्धव्यं इति पुरा सुरर्षिणा नारदेन उक्तोऽपि अहं अजस्यात्मजं दशरथं हन्यां यदि अयं रामः क्व भवेत् विदेहतनयायाः सीतायाः रागः अनुरागः क्व वा जृम्भतां वर्धेत । शार्दू... ॥ २० ॥

अत्युद्दामतपःप्रसादितपुरारातिप्रदिष्टाद्भुत-
ज्योतीरूपमहास्त्रमन्त्रपटलीनिर्व्यूढदोर्विक्रमः ।
दैतेयाहवदर्शितौजसमसौ कस्मादजस्यात्मजं
सर्वक्षत्रियकण्ठकर्तनपरो वीरो जहौ भार्गवः ॥ २१ ॥

**दशाननः**—( अपवार्य । सहर्षोत्साहम् । ) सम्यगनुस्मारितोऽस्मि । नन्वनेनैव प्रियसुहृदा पातयिष्यामि सह सूनुभिरजसूनुम् ।

**सारणः**—(अपवार्य ।) यदि ताटकादिभिरनभिहतौ रामकौशिकौ भवेताम् ।

**जनकः**—भगवन् कुशिकनन्दन,

अजात्मजसुतोदये श्रवणयोरभूदुत्सवो
दृशोरपि च सांप्रतं मुहुरवेक्ष्यमाणाविह ।
घटेत दुहितुः पुनः परिणयश्च रामेण चे-
त्तदा न मम केवलं निमिकुलस्य नित्योत्सवः ॥ २२ ॥

---

**अतीति** ॥ अत्युद्दामेन अत्यन्तं निरर्गलेन अधिकेन वा तपसा प्रसादितेन वरदानोन्मुखीकृतेन पुरारातिना शिवेन प्रदिष्टा दत्ता अद्भुतानां चित्राणां ज्योती-रूपाणां तेजोमयाकृतीनां महास्त्राणां पाशुपताद्यस्त्राणां मन्त्रपटली मन्त्रसमूहः तया निर्व्यूढः अत्यधिकः दोर्विक्रमः बाहुपराक्रमः यस्य तथाभूतः । सर्वक्षत्रियाणां कण्ठकर्तनं कण्ठच्छेदनं परं मुख्यं तथाभूतः । असौ वीरः भार्गवः परशुरामः दैतेयाहवे शंबराद्यसुरयुद्धे दर्शितौजसं दर्शितपराक्रमं अजस्यात्मज दशरथ कस्मात् जहौ तत्याज । शार्दू ॥ २१ ॥

**उत्साहः** महाकार्यप्रयत्नः । **अनेनैव** परशुरामेणैव । **अजसूनुं** दशरथम् । **अजेति** ॥ अजात्मजस्य दशरथस्य सुतोदये पुत्रे जन्मश्रवणे श्रवणयोः श्रोत्रयोः उत्सवः अभूत् । साम्प्रतं अद्य इह अत्र मुहुः पुन पुनः अवेक्ष्यमाणौ दृश्यमानौ रामलक्ष्मणौ दृशोरपि उत्सवः भवतः । कार्यकारणयोरभेदाभिप्रायेणैवं निर्देशः । पुनः किञ्च दुहितुः पुत्र्याः रामेण सह परिणयः विवाहः घटेत चेत् जायेत यदि । तदा मम केवलं न । किन्तु निमिकुलस्य अस्मत्कूटस्थस्य निमेर्वंश-स्यैव नित्योत्सवः भवेत् । पर्यायालङ्कारः । पृथ्वीवृत्तम् ॥ २२ ॥

तदत्रभवतो भवत्वद्यैव यज्ञदीक्षाप्रवेशः । वयमपि वत्साया विवाहमङ्गलार्थमारभामहे ।

**सारणः**—(अपवार्य दशाननं प्रति ।) परिणयः स्वामिना चोदितोऽपि नित्योत्सवः ।

**दशाननः**—कः सन्देहः ।

**विद्यु.**—(अपवार्य ।) इदं कथमापतितम् । भवतु । को दोषः । यदि कौशिको निशाचरनिहतः स्यात्सर्वं घटेत । नैवं चेदन्तर्धातव्यमस्माभिः ।

**दशाननः**—तथैव मे हृदयम् ।

**शतानन्दः**—राजन्, ऊर्मिलापि लक्ष्मणाय दातव्या ।

**विद्यु.**—(अपवार्य ।) सारण, तवाप्यागमनं सफलं भविष्यति । मम तु निष्फलमागमनम् ।

**सारणः**—(अपवार्य ।) मा मैवम् ।

कौशिकस्य सुतैः शिष्यैर्घटोध्नीभिश्च धेनुभिः ।
सहैव गृहिणी यज्ञे गृहिणी ते भविष्यति ॥ २३ ॥

**विद्यु.**—(अपवार्य । सारणं प्रति ।) सारण, कुतो जरठाजानीकरणेन मामपहससि ।

**परीति** ॥ स्वामिना सह सीतायाः परिणयः । अचोदितः अप्रेरितः अनुक्तोपि नित्योत्सव एव । **अन्तर्धातव्यं** अन्तर्धानं कर्तव्यम् । **कौशिकस्येति**॥ कौशिकस्य सुतैः शिष्यैः घटवत् कुम्भवत ऊधः आपीनं यासां ताः घटोध्न्यः ताभिः धेनुभिः नवप्रसूताभिर्गोभिश्च सहैव यज्ञे या गृहिणी पत्नी सा ते गृहिणी भार्या भविष्यति ॥ २३ ॥

**कुत इति** ॥ जरठा वृद्धा जाया भार्या यस्य सः जरठाजानिः । अजरठाजानेः जरठाजानेः करणं क्रिया जरठाजानीकरणं तेन । अपहससि परिहससि ।

**जनकः**—भगवन् गौतमनन्दन, न तावदेव अपि तु ममानुजः कुशध्वजो मिथिलानगरात् ।

भरताय प्रदातव्या शत्रुघ्नाय तथेति च ।
माण्डवीं श्रुतकीर्तिञ्च प्रास्थापयदिहात्मजे ॥ २४ ॥

**दशाननः**—(अपवार्य ।) सारण, पुनरपि भरतशत्रुघ्नवेषाभ्यां द्वाभ्यां सहैव नागतं मया जाल्मेन ।

**सारणः**—(अपवार्य ।) आगतोऽपि कौशिकवेषेण हतो विद्युज्जिह्वः किं वक्ष्ये ।

**शतानन्दः**—भगवन् कौशिक, किं दशरथो भरतशत्रुघ्नाभ्यां सह नानीतः ।

**सारणः**—(अपवार्य । दशाननं प्रति ।) प्रागेव हि मयोक्तं 'सपुत्रदारं दशरथमुपनिमन्त्रयितुं कौशिको गतः' इति । विद्युज्जिह्वेन तु तदनुरूपो मन्त्रो न कृतः ।

**दशाननः**—(अपवार्य ।) भवत्वेवम् । जानकीदर्शनाय यतितव्यमिदानीम् ।

**विद्यु.**—सपरिवारो दशरथः पथि विश्रम्य विलम्बते ।

**जनकः**—कः कोऽत्र भोः ।

(प्रविश्य ।)

**प्रतिहारः**—आज्ञापयतु देवः ।

**न तावदेव** रामलक्ष्मणाभ्यां सीतोर्मिलादानं यत् तावत्परिमितमेव नालम् । **भरतायेति** ॥ इह अत्र आत्मजे सुताद्वयं प्रास्थापयत् प्रस्थापयति स्म ॥ २४ ॥

**जाल्मेन** असमीक्ष्यकारिणा । **हतः** भरतशत्रुघ्नान्यतरवेषाधारणात्कन्यान्यतरालाभेन हतप्राय इत्यर्थः । **उपनिमन्त्रयितुं** आह्लातुम् । **मन्त्रः** आलोचना । **यतितव्यं** यत्नः कार्यः । विश्रम्य अध्वगमनश्रमनिवृत्तिं कृत्वा । **प्रती-**

**जनकः**—भगवतः कौशिकस्य पादवन्दनाय कन्याजनः समानीयताम्।

**प्रतिहारः**—तथा। (इति निष्क्रान्तः।)

**दशाननः**—(अपवार्य।) सारण, दैवेनैव मयि पक्षपातः कृतः।

(सोत्कण्ठम्।)

इदानीमानीता यदि रघुकुमारेण सदृशीं
तदा मे पश्यन्ती तनुमवनिकन्या विकिरतु।
प्रसादोत्कर्षेण प्रणयरसनिष्यन्दपिशुनान्
कटाक्षानुन्मीलत्कमलवनसौभाग्यजयिनः॥ २५॥

(नेपथ्ये।)

विद्युज्जिह्वे विदधति वपुर्मायया गाधिसूनो-
र्यत्सौमित्रेर्वहति तदिदं सारणे राक्षसेन्द्रः।
रामो भूत्वा जनक भवतः कन्यकां वोढुमाभ्यां
संप्राप्तोऽसाविति कथयत द्वारि ये त्वस्य सन्ति॥ २६॥

हारः प्रतीह्रियतेऽनेनेति प्रतीहारः द्वारपालः। **इदानीमिति**॥ इदानीं अवनिकन्या सीता आनीता यदि तदा रघुकुमारेण सदृशीं मे तनुं शरीरं पश्यन्ती सती प्रसादस्य नैर्मल्यस्य स्वास्थ्यस्य वा 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसक्तिषु' इति मेदिनी। उत्कर्षेण आतिशयेन प्रणयः प्रेमैव रसः अमृतं तस्य निष्यन्दस्य प्रस्रवः तस्य पिशुनान् सूचकान् उन्मीलत्कमलवनसौभाग्यजयिनः विकसत्पद्मवनसौन्दर्यजयिनः कटाक्षान् विकिरतु विक्षिपतु। उपमानमनुमानञ्चालङ्कारो। शिखरिणी वृत्तम्॥ २५॥

**विद्युदिति**॥ विद्युज्जिह्वे मायया गाधिसूनोः वपुः शरीरं विदधति स्वीकुर्वति सति। सौमित्रेर्यद्वपुस्तादिदं सारणः वहति। राक्षसेन्द्रः रावणः रामो भूत्वा हे जनक भवतः तव कन्यकां वोढुं परिणेतु असौ रावणः आभ्यां विद्युज्जिह्वसारणाभ्यां सह सम्प्राप्त इति। ये तु अस्य जनकस्य द्वारि गृहद्वारे सन्ति। ते यूयं कथयत जनकसमीपे वदत। मन्दाक्रान्ता वृत्तम्॥ २६॥

( सर्वे आकर्णयन्ति । )

**दशाननः**—( अपवार्य । विद्युज्जिह्वं प्रति । सोद्वेगम् । ) केनायमस्मद्वृत्तान्तो विज्ञाप्यते जनकराजाय । न ह्ययं केनाप्यन्येन विज्ञायते ।

**विद्यु.**—( अपवार्य । सभयकम्पम् । ) महाराज, किं ब्रवीम्येतदाश्चर्यम् । मम गृहिणीमन्तरेण वृत्तान्तोऽयं न केनापि शक्यो विज्ञातुम् ।

**सारणः**—( आत्मगतम् । ) केन दुरात्मना भग्नोऽयमस्मदारम्भः । ( प्रकाशम् । ) भगवन् शतानन्द, विचारणीयमेव कोऽयमेवमाघोषयतीति ।

**शतानन्दः**—( आत्मगतम् । ) कथमेते रावणसारणविद्युज्जिह्वाः रामलक्ष्मणकौशिकवेषाः समागताः । ( प्रकाशम् । ) लक्ष्मण, विचारयिष्यामः ।

**जनकः**—( सविचारम् । आत्मगतम् । )

असौ घटयितुं प्राप्तः कौशिको मे मनोरथम् ।
इति स्थितं मुदाऽस्माभिरन्यथेदं प्रवर्तते ॥ २७ ॥

( प्रकाशम् । ) कः कोऽत्र भोः ।

( प्रविश्य । )

**प्रतिहारः**—आज्ञापयतु महाराजः ।

**जनकः**—केनेदमुक्तमिति विचार्यताम् ।

**प्रतिहारः**—राजन्, किमन्यद्विचारणीयम् ।

गिरमेवमुदीर्य कोऽपि दिव्यः
पुरुषोऽस्मान्दिवमुत्पतन् प्रयाति

**गृहिणीमन्तरेण** भार्यां मायावतीं विना । **असाविति** ॥ असौ कौशिकः मे मनोरथं घटयितुं पूरयितुं प्राप्त इति अस्माभिः मुदा सन्तोषेण स्थितम् । इदं अन्यथा प्रवर्तते ॥ २७ ॥

**गिरमिति** ॥ कोऽपि दिवि भव्यः दिव्यः पुरुषः अस्मान् एवं गिरं वाचं उदीर्य उक्त्वा दिवं नभः उत्पतन् उद्गच्छन् प्रयाति प्रतिष्ठते । अपराभ्यां राम-

उपसर्पति रामलक्ष्मणाभ्या-
मपराभ्यामपरश्च गाधिसूनुः ॥ २८ ॥

**जनकः**—भगवन् शतानन्द, कथमेतत् ।

**शतानन्दः**—( अपवार्य । जनकं प्रति । ) इन्द्रदूतेनेवमुक्त स्यात् । किंच प्रविष्टानां प्रवेक्ष्यतां च स्वरूपनिर्धारणमत्र क्रमेण कुर्मः । ( प्रकाशम् । विद्युज्जिह्वं प्रति । ) भगवन् कुशिकनन्दन, कथमेतत् ।

**विद्यु.**—( स्वगतम् । ) चोरा इव यामिकेन कौशिकेन निरुद्धाः स्मः । ( प्रकाशम् । ) आगच्छन्त्वस्मद्द्वेषभाजो राक्षसाः । वयं त्वन्यत्र गच्छामः ।

**दशाननः**—( अपवार्य । सारणं प्रति । ) किं क्षत्रियवटुना ताटकादयो हता भवेयुः ।

**सारणः**—नैतत्सम्भाव्यते ।

ताटकां यदि मारीचं सुबाहुं वापि राघवः ।
शक्नोति हन्तुमस्मांश्च सर्वानपि निशाचरान् ॥ २९ ॥

**दशाननः**—(अपवार्य विद्युज्जिह्वं प्रति ।) किं करणीयमस्माभिः ।

**विद्यु.**—(अपवार्य रावणं प्रति ।) तिरस्करणीप्रभावेणात्मानस्तिरोधाय सर्वमवेक्षमाणा यथोचितं विधास्यामः ।

**दशाननः**—युक्तमाह भवान् ।

**जनकः**—(अपवार्य शतानन्दं प्रति ।) यथा परस्परमेते समुद्विग्ना मन्त्रयन्ते तथा मन्ये राक्षसा एव भविष्यन्तीति ।

---

लक्ष्मणाभ्यां सह अपरः अन्य. गाधिसूनुः । उपसर्पति आगच्छति च । वसन्तमालिकावृत्तम् ॥ २८ ॥

**यामिकेन** यामं रक्षतीति यामिकः तेन । **ताटकामिति** ॥ राघवः ताटकां मारीचं सुबाहुं वापि हन्तुं शक्नोति यदि तदा अस्मांश्च सर्वान् निशाचरानपि हन्तुं शक्नोति ॥ २९ ॥

**तिरस्करणीप्रभावेन** अन्तर्धानविद्यामहिम्ना । **समुद्विग्नाः** सम्यगभी-

**शतानन्दः**—ममाप्यमेव तर्कः ।

**विद्यु.**—जनकराज, किं विचारणेन वयमिदानीमन्यत्र गच्छाम इत्युक्तमेव । यथोचितं संभावनीयो हि दशग्रीवः । मा पुनरस्मै कन्या दीयत इति वादीः ।

**जनकः**—तथा । (इत्युत्थाय प्राञ्जलिः पन्थानं दर्शयति ।)

(दशाननाद्यः उत्थाय निष्क्रान्तास्तिरस्करणीध्यानातिरोहिता कृतयो नातिदूरे प्रविष्टाश्च ।)

**शतानन्दः**—राजन्, यथोचितं कृतार्घ्यानिदानीमागतान् कौशिकादीन् प्रवेशयामि ।

(इति निष्क्रान्तः ।)

(ततः प्रविशति रामलक्ष्मणाभ्यां सह कौशिकः ।)

**कौशिकः**—(आत्मगतम् ।)

जानक्यां रघुनन्दनस्य हृदयं लग्नं दृढं कारितं
यूनोर्येन परस्परप्रणयिनोर्योगः प्रशंसास्पदम् ।
दृष्ट्वा स्वप्नगतं रघूद्वहमिमं सीता सखीसेविता
नन्वेषा नवपल्लवास्तरगता नक्तंदिवं ताम्यति ॥ ३० ॥

---

ता: । **तर्कः** ऊहः । **यथेति** ॥ दशग्रीवः रामवेषेणागमिष्यन् रावणः यथोचितं (सीतादानं विना) यथायुक्त सम्भावनीयः सम्माननीयः । अस्मै रामाय कन्या दीयत इति मा वादीः (आगमिष्यद्रामवेषरावणनिकटे) मा वद । **जानक्यामिति** ॥ रघुनन्दनस्य हृदय जानक्यां दृढ लग्न आसक्तं कारितम् । येन यतः परस्परं अन्योन्यं प्रणयिनोः प्रेमवतोः युवतिश्च युवा च युवानौ तयोर्यूनोः योगः प्रशंसास्पदं सम्बन्धः स्तुत्य इत्यर्थः । एषा सीता स्वप्नगतं इमं रघूद्वहं दृष्ट्वा (कामज्वरेण) सखीभिः सेविता शीतोपचारैर्मानिता नवं पल्लवास्तरं किसलयशयनं गता च सती नक्तंदिवं रात्रौ अहनि च ताम्यति ननु तापमनुभवत्येव । शार्...॥ ३० ॥

किं च सुविहितमस्माभिरिदानीं जृम्भकास्त्रप्रमुखदिव्यास्त्रमन्त्रग्राममुपदिशद्भिरेतस्मै सलक्ष्मणाय रामाय। यदस्मिन् स्वजनविनिपातेन सीतापाणिग्रहणेन च जनितामर्षस्याऽपि नाक्रमेत पराक्रमस्त्रिभुवनविजयोदग्रतेजसोऽपि दशग्रीवस्य । अपि च ।

मायाविनो रात्रिचरान्विदित्वा विश्लिष्टवान् पङ्क्तिरथेन राज्ञा ।
निर्विघ्नमुद्वाहकृते कुमार्याः स्वस्थानमाभ्यां द्रुतमागतोऽस्मि ॥

(प्रकाशम् ।) वत्सौ रामलक्ष्मणौ, जनकराजं प्रति भवद्भ्यां प्रश्रिताभ्यां भवितव्यम् । यतः ।

याज्ञवल्क्यादृषेरेष प्राप्योपनिषदो गुरोः ।
तीर्णशोकार्णवः पूज्यः पूर्वेषामपि योगिनाम् ॥ ३२ ॥

**रामलक्ष्मणौ**—बाढम् । एवं भवावः ।

**लक्ष्मणः**—भगवन्, एतस्य राज्ञो लाङ्गलोल्लिखितयज्ञभूमेरुत्थिता सीता नाम कन्येति महदद्भुतमेतदाकर्ण्यते ।

**ग्राम** समूहम् । अस्मिन् रामे । विनिपातेन विनाशेन । नाक्रमेत न उद्येत । 'आङ उद्गमने' इत्यात्मनेपदम् । **उदग्र** उन्नतम् । **मायेति** ॥ रात्रिचरान् राक्षसान् मायाविनः मायावतः विदित्वा ज्ञात्वा ( राक्षसाः मायया जनकं वञ्चयित्वा किमपि कुर्युरिति बुद्ध्वेत्यर्थः । ) अतएव राज्ञा पङ्क्तिरथेन दशरथेन विश्लिष्टवान् वियुक्तवान् (ससैन्येन मन्दमागच्छता राज्ञा सहागमने विलम्बो भविष्यतीति तन्मध्ये मार्गमुत्सृजन्नित्यर्थः) अहं कुमार्याः सीतायाः निर्विघ्नं निरन्तरायं यथा तथा । उद्वाहकृते विवाहकरणाय आभ्यां रामलक्ष्मणाभ्यां सह द्रुतं शीघ्रं स्वस्थानं आगतोऽस्मि । काव्यलिङ्गालङ्कारः । इन्द्रवज्रावृत्तम ॥ ३१ ॥

प्रश्रिताभ्यां विनीताभ्याम् । **याज्ञवल्क्यादिति** ॥ एषः जनकः गुरोः याज्ञवल्क्यात् ऋषेः उपनिषदः वेदान्तान् प्राप्य तीर्णः लङ्घितः शोकः आविद्यकदुःखमेव अर्णवस्समुद्रः येन तथाभूतः अतएव पूर्वेषां योगिनामपि पूज्यः 'कृत्यानां कर्तरि वा' इति वा षष्ठी । रूपकं काव्यलिङ्गञ्चालङ्कारौ ॥ ३२ ॥

**बाढं** 'बाढं भृशप्रतिज्ञयोः' इति कोशः । लाङ्गलिखिता हलकृष्टा ।

**कौशिकः**—अथ किम् ।

**रामः**—(स्वगतम् । सानुस्मरणम् ।)

तन्वङ्ग्याः पतनं तथा हुतवहे मायेति निश्चिन्वतो-
ऽप्यातङ्केन च मन्युना च हृदयं नोन्मुक्तमद्यापि मे ।
मिथ्याभूतमपि व्यतिक्रममिमं स्मृत्वा विदेहाधिपे
पौलस्त्यस्य शिरांसि संयति दशाप्युच्छेत्तुमुत्कण्ठते ॥३३॥

अपि च ।

वैतानं व्यपदिश्य कर्म वसुधाकन्याविवाहोत्सवं
निर्वोढुं सहसा समानयति मां सर्वैः समं बन्धुभिः ।
आर्यः श्रीकुशिकात्मजोऽयमिति मे चेतः कथं वर्तते
ध्यायत्याश्वसिति प्रसीदति तथा स्वच्छन्दमानन्दति ॥३४॥

**तन्वङ्ग्या इति** ॥ तथा तेन प्रकारेण तन्वङ्ग्याः कृशाङ्ग्याः सीतायाः हुतवहे अग्नौ पतनं माया मारीचमायेति निश्चिन्वतः (अहल्यावचनात्) निर्णयतोऽपि मे अद्यापि आतङ्केन भयेन मन्युना दुःखेन च नोन्मुक्तं न त्यक्तं हृदयं मिथ्याभूतमपि असत्यजातमपि विदेहाधिपे जनके इमं पौलस्त्यस्य रावणस्य व्यतिक्रमं शिरश्छेदनरूपापचारं स्मृत्वा संयति युद्धे तस्य दशशिरांस्यपि उच्छेत्तुं उत्कण्ठते अभिवाञ्छति । काव्यलिङ्गमलङ्कारः । शार्दू... ॥ ३३ ॥

**वैतानमिति** ॥ अयं आर्यः पूज्यः कुशिकात्मजः वितानस्य यज्ञस्य इदं वैतानं कर्म व्यपदिश्य व्याजीकृत्य वसुधाकन्यायाः सीतायाः विवाहोत्सवं निर्वोढुं निष्पादयितुं सहसा शीघ्रं सर्वैः बन्धुभिस्समं मां समानयतीति हेतोः । मे चेतः कथं वर्तत इति चेत् । एवमुत्तरम् । ध्यायति दुर्लभोऽयं सीतालाभइति चिन्ताक्रान्तं भवति । आश्वसिति घटकस्य कौशिकस्य महिम्ना सुलभ एवेति समाधानं लभते । अतएव प्रसीदति चिन्ताकालुष्यविनिर्मुक्तं प्रसन्नं भवति । तथा स्वच्छन्दं यथेच्छं आनन्दति चिन्तादुःखराहित्येनानन्दमनुभवति । कैतवापह्नुतिकाव्यलिङ्गमलङ्काराः । शार्दू. ॥ ३४ ॥

(प्रकाशम् ।) भगवन्, इदमन्यदत्यद्भुतमाकर्ण्यते, यत्पुनरनल्पतपसो विदेहाधिपतेरायतने सकलसुरासुरप्रवीरैरपि दुरारोपगुणं गिरिवरप्रमाणं भगवतः पुरशासनस्य शरासनमभ्यर्च्यत इति ।

**कौशिकः**—(विहस्य ।) अस्त्येतदपि । (इति परिक्रामन्ति ।)

(प्रविश्य ।)

**शतानन्दः**—राजन्, एष भगवान् कुशिकनन्दनः । एतौ च दशरथराजनन्दनौ ।

**जनकः**—(स्वगतम् ।) एते हि येषामनुगुणमेतेन पुरोधसा निर्दिष्टाः। (प्रकाशम् ।) प्रियं नः । (इति यथोचितमुपचरन् सर्वानासनेषु निवेशयति ।)

**शतानन्दः**—(स्वगतम् ।) सन्त्वेते राक्षसाः तथाप्येवं वक्ष्ये । (प्रकाशम् ।) दिष्ट्या रामलक्ष्मणाभ्यामत्रभवान् कुशिकनन्दनः संप्राप्तः ।

**जनकः**—(स्वगतम् ।) अहमपि शतानन्दमनुसृत्य वक्ष्ये । (प्रकाशम् ।)

दिष्ट्यानयद्दशरथो गृहमृश्यशृङ्गं
दिष्ट्या स एव तमयाजयदृद्धिकामः ।
दिष्ट्या सुताः समभवन् पुनरस्य राज्ञो
दिष्ट्या ममान्तिकमिमौ भवता च नीतौ ॥ ३५ ॥

**दशाननः**—(विद्युज्जिह्वं प्रति ।) किमयं परमार्थबुद्ध्या कथयति ।

**विद्यु.**—अस्मास्वेव सा जनकस्योक्तिः प्रतिभाति ।

**आयतने** गृहे । दुरारोपः आरोपयितुमशक्यः गुणः मौर्वीः यस्मिंस्तत् । गिरिवरस्य पर्वतश्रेष्ठस्येव प्रमाणं औन्नत्यबलिष्ठत्वादिमर्यादा यस्य तत् । पुरशासनस्य शिवस्य शरासनं धनुः । **दिष्ट्येति** ॥ दिष्ट्या दैवात् । ऋद्धिकामः ऋद्धिं दशरथस्य पुत्रं सम्पदं कामयत इति तथोक्तः । अन्तिकं समीपम् । नीतौ प्रापितौ । शेषं सुगमम् । वसन्ततिलकावृत्तम् ॥ ३५ ॥

**कौशिकः**—एवमेतत् । इदं पुनः श्रूयतां वत्सेन शतानन्देन सावधानेन च सुहृदा जनकराजेन ।

**उभौ**—अवहितौ स्वः ।

**दशाननः**—किं कथयत्येष दुरात्मा कौशिकापशदः ।

**विद्यु.**—प्रायेण निरुन्धन्तमस्मत्परिजनमतिसन्धायागतोऽस्मीति ।

**सारणः**—कथमन्यथा तदतिसन्धानमन्तरेणायमागन्तुं शक्तः स्यात् ।

**कौशिकः**—

यज्ञो मे भवितेति कोसलपतिं दारैः सुतैश्चानयन्

रुद्धस्ताटकयास्मि वर्त्मनि रजोवृष्टिं सृजन्त्या भृशम् ।

**दशाननः**—(सहर्षम् । सम्यगुपक्रान्तमत्रभवत्या ।)

**विद्यु.**—तदतिसन्धानं तु श्रोतव्यम् ।

**दशाननः**—(सवैलक्ष्यम् ।) मया पुनर्हर्षपरवशेनाभ्यां रघुशिशुभ्यामस्य मुनेरागमनमेव विस्मृतम् ।

**कौशिकः**—

वत्से स्त्रीति पराङ्मुखेऽप्युदपतद्बाणः स्वयं कार्मुकात्

**दशाननः**—कियानस्य मुनिपाशस्य क्षत्रियवटावप्यस्मिन्माहात्म्यमारोपयितुं यत्नः ।

---

**सा** परमार्थबुद्धिः । **सावधानेन** चित्तैकाग्र्यसहितेन । **अवहितौ** सावधानौ । **अपशदः** नीचः । प्रायेण बहुशः निरुद्धन्तं मार्गे निरोधं कुर्वन्तं अस्माकं परिजनं मारीचादिकं अतिसन्धाय वञ्चयित्वा । **तदिति** ॥ तस्यास्मत्परिजनस्य अतिसन्धानं अन्तरेण वञ्चनं विना । **यज्ञ इति** ॥ मे मम यज्ञः भविता भविष्यतीत्युक्त्वा कोसलपतिं दशरथं दारैः कलत्रैः सुतैश्च सह आनयन् अस्मि अहम् । अस्मीति विभक्तिप्रतिरूपकमव्ययम् । वर्त्मनि मार्गे भृशं अत्यर्थं रजोवृष्टिं पांसुवर्षं सृजन्त्या कुर्वत्या ताटकया रुद्धः निरुद्धः (सवैलक्ष्यं सविस्मयं) वत्से रामे स्त्रीति (मत्वा तां हन्तुं ) पराङ्मुखे विमुखे सत्यपि बाणः स्वयं अप्रेरित एव कार्मुकात् चापात् उदपतत् उद्गच्छति स्म । किं परिमाणं अस्य का सङ्ख्यास्येति वा कियान्

सारणः—(साशङ्कम्।) ततः किं प्रवृत्तं शृणुमः।

कौशिकः—भिन्ना तेन भुजान्तरे महति सा जीवं जहावञ्जसा॥३६॥

जनकः—(अपवार्य। शतानन्दं प्रति।) नूनं निजगृहीतरूपप्रत्यय-दृढीकरणार्थमनेन यातुधानेन कथेयं प्रस्तूयते।

शतानन्दः—शेषमपि श्रोतव्यम्।

जनकः—(प्रकाशम्।)

क्वायं बालः क्व सा नागसहस्रबलशालिनी।

दशाननः—सम्यगाक्षिप्तं जनकेन।

शतानन्दः—

अथ वा दैवयोगेन कस्य किं दुष्करं भवेत्॥ ३७॥

विशु.—समर्थयतेऽयमाङ्गिरसहतकः।

सारणः—हा ताटके, स्त्रीति विजानतापि न विमुक्तासि कथमनेन जाल्मेन

दशाननः—(साशङ्कम्।) किं कृतं तदनुचरैर्न जानीमः।

जनकः—ततस्ततः।

कौशिकः—ततश्च सुबाहुप्रभृतयो रजनीचरा वत्समभ्यद्रवन्

दशाननः—कथं ताटकावधं ते सहन्ते।

सारणः—कथं तेष्वप्यतिचरितं वीरमानिना राघवबटुना।

याप्यः (कुत्सितः) मुनिः मुनिपाशः। तेन बाणेन महति विपुले भुजान्तरे वक्षसि भिन्ना विदारिता सा ताटका अञ्जसा शीघ्रं जीवं प्राणं जहौ त्यजति स्म। शार्दू.॥

**नूनमिति**॥ निजं स्वीयं गृहीतं यत् रूपं विश्वामित्ररूपं तत्र प्रत्ययस्य विश्वासस्य दृढीकरणार्थं दार्ढ्यापादनार्थम्। प्रस्तूयते उपक्रम्यते। **क्वेति**॥ नागः गजः। आक्षिप्तं आक्षेपः कृतः। दैवयोगेन भाग्यसङ्गेन॥ ३७॥

समर्थयते आक्षिप्तं समाधत्ते। अङ्गिरसो गोत्रापत्यं पुमान् आङ्गिरसः शतानन्दः स एव हतकः (हत इव)। **अतिचरितं** अपकृतम्। आत्मानं वीरं म-

**कौशिकः**—श्रूयताम् । किमन्यत् ।

सुबाहुतदनीकिनीचरनिशाचरच्छेदिना
रघुप्रवरपत्रिणा रणतले तथा क्रीडितम् ।
नटन्ति परितो यथा हतकबन्धतन्मस्तकैः
समं पिशिततर्पिताः सपदि कङ्कगोमायवः ॥ ३८ ॥

**शतानन्दः**—(अपवार्य । जनकं प्रति ।) एवं स्थिते कथमेतेषु मन्यते भवान् ।

**जनकः**—(अपवार्य । शतानन्दं प्रति ।) वत्सा वीर्यशुल्का प्रतिज्ञातव्येति ।

**शतानन्दः**—(अपवार्य ।) कीदृशः पणबन्धः ।

**जनकः**—(अपवार्य ।) शिवचापारोपणमेव ।

**शतानन्दः**—(अपवार्य । सावज्ञम् । विहस्य ।)

निषेवाहेवाकप्रसृमरसमस्तामरकुलं
चलन्मेरुप्रायप्रमथगणसान्द्रीकृततटम् ।

---

न्यत इति वीरमानी तेन । **सुबाह्विति** ॥ रणतले युद्धस्थले सुबाहुं तस्य अनीकिनीचरान् सेनाचरान् निशाचरान् ताच्छील्येन च्छिनत्तीति तथोक्तस्तेन । रघुप्रवरस्य रामस्य पत्रिणा शरेण तथा क्रीडितं विहृतम् । यथा हतानां कबन्धैः शिरोहीनकलेबरैः तेषां हतानां मस्तकैः शिरोभिश्च यद्वा हताः कबन्धा येषान्तेषां हतकबन्धानां तेषां सुबाहुप्रभृतीनां मस्तकैः समं सह । पिशितेन मांसेन तर्पिताः कङ्काः लोहपृष्ठाः गोमायवः सृगालाश्च सपदि द्रुतं परितः समन्ततः नटन्ति नृत्यन्ति तथा क्रीडितमिति पूर्वेण योज्यम् । पृथ्वीवृत्तम् ॥ ३८ ॥

**वत्सेति** ॥ वीर्यं शौर्यं शुल्कं वरादर्थग्रहः यस्यास्सा वीर्यशुल्का । वराद्वीर्यरूपधनं गृहीत्वा वरायदेयेत्यर्थः । "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी । **पणबन्धः** पण्यते व्यवह्रियतेनेनेति पणः धनं वरात् आदेयं वीर्यरूपधनमित्यर्थः । तस्य बन्धः आधिः बद्धा निक्षेपः । **सावज्ञं** अनादरसहितम् । **निषेवेति** ॥ निषेवायां नितरां भगवत्सेवायां हेवाकेन आसक्त्या प्रसृमरं प्रचरण-

करार्ग्रैः कैलासं गिरिमधिनभो नर्तितवतः
क्रियान् रक्षोनेतुर्गिरिशधनुरारोपणविधिः ॥ ३९ ॥

**जनकः**—(अपवार्य ।) भगवन्, कथयामि ते भूतार्थम् ।

सिद्धचारणगन्धर्वदेवदानवराक्षसैः ।
दुरारोपमवादीन्मे पुरा चापमिमं हरः ॥ ४० ॥

**शतानन्दः**—(अपवार्य ।) तर्हि शक्यमिदं प्रतिज्ञातुम् ।

**विद्यु.**—कथं सर्वेषां वधमाह कौशिकः ।

**सारणः**—सत्यमेतत् । न खल्वतिसन्धेयाः केनापि मायाविनो मारीचप्रभृतयः ।

**लक्ष्मणः**—

नीतोऽभूदार्यबाणेन दूरादपि [redacted] ।
मारितो वा विमुक्तो वा मारीचो न प्रतीयते ॥ ४१ ॥

शीलं समस्तममराणां कुलं स्वजातीयगणः यस्मिंस्तम् । चलद्भिः सञ्चरद्भिः मेरुप्रायैः सुमेरुतुल्यैः प्रमथगणैः शिवपारिषदसमूहैः सान्द्रीकृतः निबिडीकृतः तटः प्रपातः यस्य तम् । कैलासं गिरिं करार्ग्रैः अधिनभः नभसि । विभक्त्यर्थे अव्ययीभावः ॥ नर्तितवतः नृत्तं कारितवतः रक्षोनेतुः रावणस्य गिरौ शेत इति गिरिशः शिवः तस्य धनुषः आरोपणस्य मौर्व्या सह संयोजनस्य विधिः विधानम् । क्रियान् अतिसुलभ इत्यर्थः । शिखरिणी वृत्तम् ॥ ३९ ॥

**भूतार्थं** भूतं सत्यं अतीतं वा अर्थं व्यवहारम् । **सिद्धेति** ॥ सिद्धचारणगन्धर्वाः देवयोनिविशेषाः दुरारोपः आरोपयितुमशक्यः । अवादीत् वदति स्म । हरः शिवः । ४० ॥

अतिसन्धेयाः वञ्चनीयाः । **नीत इति** ॥ विहायसि आकाशे । न प्रतीयते न ज्ञायते ॥ ४१ ॥

**दशाननः**—(सक्रोधनिःश्वासम् ।)

वातो वातुमसौ बिभेति तपनस्तप्तुं यदीये जने
दग्धुं वा दहनः स शास्ति भुवनान्यद्यापि लङ्केश्वरः ।
साकं ताटकया सुबाहुमखिलानप्यस्य हत्वा भटान्
रामो जीवितुमुत्सहेत किममुं गोप्तुं च किं कौशिकः ॥४२

(इत्युत्थातुमिच्छति ।)

**विद्यु.**—(निवार्य ।) महाराज, क्षम्यतां क्षणमात्रं दृश्यतां पुरस्तादपि ।

**जनकः**—(स्वगतम् ।) प्रसीदतीव मे हृदयम् । (प्रकाशम् ।) कथं मारीचो निर्धूतो रघुकुमारेण ।

**कौशिकः**—अथ किम् ।

**सारणः**—(आत्मगतम् ।) हन्त,

इयन्तं कालमेतस्य पूर्णो भुजपराक्रमः ।
एकदेशेऽमुना भग्नो भानुमानिव राहुणा ॥ ४३ ॥

**वात इति** ॥ यस्य रावणस्यायं यदीयः तस्मिन् जने असौ वातः वायुः वातुं बिभेति तपनः रविः तप्तुं बिभेति दहनः वा अग्निश्च दग्धुं बिभेति । सः लङ्केश्वरः अद्यापि भुवनानि शास्ति निजशासने करोति एवं सति रामः ताटकया साकं सह सुबाहुं अस्य अखिलानपि भटान् हत्वा जीवितुं उत्सहेत किं उत्साहवान् भवेत् किम् । कौशिकः अमुं रामं गोप्तुं रक्षितुं उत्सहेत किम् ! तुल्ययोगितालङ्कारः । शार्दू ... ॥ ४२ ॥

**निर्धूतः** उत्सृष्टः । **इयन्तमिति** ॥ इयन्तंकालं एतावत्कालपर्यन्तं पूर्णः एतस्य भुजपराक्रमः अमुना रामेण राहुणा पूर्णः भानुमान् रविरिव एकदेशे एकस्मिन् कोणे भिन्नः खण्डितः । उपमालङ्कारः ॥ ४३ ॥

**दशाननः**—(दन्तैर्दन्तान्निपीड्य ।) नाहं विमोक्ष्यामि क्षत्त्रियवटुम् ।

सन्त्यद्यापि गृहीतरुद्रगिरयो मे विंशतिर्बाहवो
दिक्पालस्मयघस्मरेषुघटितोत्सङ्गा निषङ्गा दश ।
चण्डा दण्डधरावलेपहृदियं शक्तिर्मयेनार्पिता
तत्किं ब्रूहि कुतो बिभेमि समरे को मे पुरः स्थास्यति ॥

**विद्यु.**—अङ्गुलिस्फोटमात्रसुकरविनिपातेऽपि मनुजपोते कियानयं स्वामिनः संरम्भः ।

**शतानन्दः**—महाप्रभावो रघुकुमारकः ।

**लक्ष्मणः**—अत एव खलु ।

आर्याय पुनरेतस्मै भगवानेष कौशिकः ।
मया सहैव दिव्यास्त्रमन्त्रग्राममुपादिशत् ॥ ४९ ॥

**विद्यु.**—श्रुतं किं स्वामिना लक्ष्मणवचनम् ।

**दशाननः**—कथमितो भेतव्यमस्माभिः ।

**सारणः**—प्रथमतः प्रभृति कौशिक एव द्रुह्यत्यस्मभ्यम् ।

**कौशिकः**—(स्वगतम् ।) जनकः शतानन्दश्च मामिमावपि वत्सावन्यथा संभावयन्ताविव वर्तेते । तत्किं प्रागेव मायाविभिःकौणपैर्विप्र-

**निपीड्य** सङ्घट्य । **सन्तीति** ॥ गृहीतः उद्धृतः रुद्रगिरिः कैलासः यैस्ते मे विंशतिः बाहवः अद्यापि सन्ति । दिक्पालानां स्मयघस्मरैः अवलेपभक्षणशीलैः इषुभिर्बाणैर्घटितः युक्तः उत्सङ्गः मध्यप्रदेशः येषां ते दश निषङ्गाः तूण्यस्सन्ति । किञ्च दण्डधरावलेपहृत् यमगर्वहरा चण्डा अतिकोपना भीषणेत्यर्थः । मयेन मयनाम्ना मम श्वशुरेण अर्पिता इयं शक्तिः शक्त्यायुधमस्ति । तत् ततः कुतः कस्माच्चित् बिभेमि किम् । समरे युद्धे मे पुरः कः स्थास्यति ब्रूहि । शार्दू.. ४४

अङ्गुल्योः अङ्गुष्ठतर्जन्योः स्फोटमात्रेण सङ्घट्टजनितशब्दमात्रेण सुकरः सुलभः विनिपातः नाशः यस्य तस्मिन् । मनुजपोते नरशिशौ रामे । संरम्भः सम्भ्रमः । **आर्यायेति** ॥ ग्रामं समूहम् ॥ ४५ ॥

**संभावयन्तौ** मन्यमानौ । **कौणपैः** राक्षसैः । **विप्रलब्धौ** वञ्चितौ ।

लब्धौ। भवत्वेवम्। (प्रकाशम्।) राजन् जनक, वत्स शतानन्द, मा प्रति किमपि वक्तुकामाविव दृश्येते भवन्तौ। तत्किं कथयतम्।

(जनकः शतानन्दं ज्ञापयति।)

शतानन्दः—

यः कश्चन त्रिभुवने यदि राजसूनु-
रारोपयिष्यति शरासनमिन्दुमौलेः।
तस्मै प्रदास्यति मुदा मिथिलाधिपोऽयं
कन्यामनन्यसुलभेन गुणेन धन्याम्॥ ४६॥

कौशिकः—(विहस्य।) अस्मास्वपि तत्रभवतोरनाश्वासः। अथ वा दुर्निवारावलेपेषु मायाबलसुलभनानारूपेषु रजनीचरेषु कस्य कस्मिन् भवति विस्रम्भः। तदानीयतामारोपणाय शरासनं पुरशासनस्य।

जनकः—भगवन् शतानन्द, तत्रभवतैव संभाव्य शांभवं धनुरानीयताम्।

शतानन्दः—तथा। (इति निष्क्रान्तः।)

दशाननः—

मद्भुजैर्धृतकैलासैरपि यद्दुर्धरं धनुः।
तदारोपयितुं शंभोः शक्नोति किमयं वटुः॥ ४७॥

---

**संज्ञापयति** प्रकृतविषयं वक्तुं हस्तादिना सूचयति। **य इति**॥ त्रिभुवने यः कश्चन राजसूनुः इन्दुमौलेः शिवस्य शरासनं धनुः आरोपयिष्यति मौर्व्या सह संयोजयिष्यति यदि तदा तस्मै अयं मिथिलाधिपः अनन्यसुलभेन इतरदुर्लभेन गुणेन सौन्दर्यादिना धन्यां भाग्यवतीं कन्यां सीतां प्रदास्यति। वसन्ततिलका वृत्तम्॥ ४६॥

अवलेपः मदः। **विस्रम्भः** विश्वासः। **संभाव्य** सम्पूज्य। शाम्भवं शम्भोरिदम्। **मदिति**॥ दुर्धरं धर्तुं उद्धर्तुमशक्यम्। वटुः नृपशिशुः रामः॥

**विधु.**—हन्त हन्त । किमिदं प्रतिज्ञातमनभिज्ञेन । न कश्चिदप्यस्ति भुवनेषु नगराजधन्वनश्चापमारोपयितुम् ।

**दशाननः**—(आकाशे लक्ष्यं बद्ध्वा ।) हा वराकि जानाकि,

राज्ञो मे सुहृदः सुतेति तरसा न त्वं गृहीता मया
मर्त्ये क्वाप्यनुरागिणीति भवती नायं नृपो याचितः ।
ताद्रूप्यं वहतापि वोढुमधुना शुल्के श्रुते दुष्करे
न प्राप्यासि यथा परैरपि तथा

ततः किं ब्रवीमि । हन्त हन्त ।

अनूढैव संस्थास्यसे ॥ ४८ ॥

**सारणः**—महाराजेन तावदिदानीमेनां मुषित्वावगन्तव्यं संवृत्तम् । यदीयमनुकम्पनीया स्यात् ।

(प्रविश्य ।)

**शतानन्दः**—राजन्, इदमानीतमैन्दुशेखरं धनुः । (इत्युपविशति ।)

**कौशिकः**—वत्स रामभद्र, दृश्यतामिदम् ।

---

हन्तेति खेदे । **अनभिज्ञेन** शिवधनुस्स्वरूपमविदितवता । **नगेति** ॥ नगराजः (त्रिपुरसंहारकाले) महामेरुः धनुः यस्य सः नगराजधन्वा शिवः तस्य । **हेति** ॥ हा कष्टं वराकि शोच्ये । **राज्ञ इति** ॥ मे मम सुहृदः सख्युः राज्ञः जनकस्य सुतेति कृत्वा मया त्वं तरसा बलात् न गृहीता । भवती त्वं क्वापि मर्त्ये नरे अनुरागिणी अनुरागवतीति कृत्वा अयं नृपः जनकः न याचितः । वोढुं त्वां परिणेतुं तस्य रामस्य रूपमिव रूपं यस्य सः तद्रूपः तस्य भावस्ताद्रूप्यं तद्वेषं वहता बिभ्रतापि मया अधुना अद्य दुष्करे कर्तुमशक्ये शुल्के शिवधनुरारोपणरूपे वरादादेयद्रव्ये श्रुते आकर्णिते सति यथा प्राप्या लभ्या नासि । परैः मदितरैरपि तथा न प्राप्यासि । तस्मात् अनूढैव अपरिणीतैव संस्थास्यसे मरिष्यसि । उपमा निदर्शना काव्यलिङ्गान्यलङ्काराः । शार्दू... ॥ ४८ ॥

**मुषित्वा** चोरयित्वा । **अनुकम्पनीया** दयनीया । इन्दुशेखरस्य शिवस्य

**रामः**—यदाज्ञापयन्ति गुरुजनः। (इत्युत्थाय शरासनमुपसर्पति।)

**दशाननः**—कथमभीत एवासाविदमुपसर्पति।

**विद्यु.**—अपि नामेदमयमारोपयेत्।

**सारणः**—अपि नाम जानकीं च परिणयेत्।

(ततः प्रविशति प्रतिहारिणा पुरो नातिदूरगतेन नीयमाना रक्तपटिकावगुण्ठिताङ्गी सीता तादितराः कन्यकाश्च।)

**सीता**—वच्चाओ, महप्पहावो आअदो कोसिअमहेसी वन्दणिज्जो अम्हेहिं।

**रामः**—(स्वगतम्।) कथमेतत्।

सिञ्चति सुधारसं मे श्रवसोरिह कोऽपि शारिकालापः।
स्मरयति च तदनुभूतं मायामयजानकीवचनम्॥ ४९॥

१. वत्साः, महाप्रभाव आगतः कौशिकमहर्षिर्वन्दनीयोऽस्माभिः।

इदमैन्दुशेखरम्। शरासनं उपसर्पति चापसमीपं गच्छति। **अपि नामेति**॥ अपीति प्रश्ने नामेति विकल्पे सम्भावनायां वा। **परिणयेत्** उद्वहेत्। **ततः प्रविशतीति**॥ रक्तपटिकया रक्तवस्त्रेण अवकुण्ठितानि आच्छादितानि (शिरःप्रभृतीनि) अङ्गानि यस्यास्सा। कन्यकाः ऊर्मिलादयश्च। **वत्सा इति**। हे वत्साः अनुजा ऊर्मिलादयः। **सिञ्चतीति**॥ इह अत्र कोपि अनिर्वचनीयः शारिकायाः पक्षिविशेषस्य आलाप इवालाप उक्तिः (अत्र निदर्शना) मे मम श्रवसोः कर्णयोः सुधारसं अमृतरसं सिञ्चति निषिञ्चतीव (अत्र गम्योत्प्रेक्षा) अनुभूतं पूर्वं श्रुतं तत् मायामयजानक्याः मारीचप्रदर्शितमायासीतायाः वचनं स्मरयति स्मृतिं लम्भयति च। ('स्मृ आध्याने' इति धातोर्मित्वात् ह्रस्वः) स्मृ चिन्तायामित्यस्य तु स्मारयतीत्येव आध्यानमुत्कण्ठापूर्वकस्मरणम्। अत्र स्मृतिमदलङ्कारः। शारिकाया आलापश्शारिकालापइत्यर्थवर्णने सारूप्यनिबन्धना अप्रस्तुतप्रशंसा सीतोक्त्यभिप्रायेण निगीर्याध्यवसाने रूपकातिशयोक्तिः क्रिया यौगपद्यात् समुच्चयश्चेति बहूनां समावेशः॥ ४९॥

**ऊर्मिला**—सुदं अज्जाए जाणईए वअणं तुह्मेहिं ।

**रामः**—(दृष्ट्वा । स्वगतम् ।) कथमियं साक्षादेव जानकी ।

श्रीखण्डाद्रिसमीरणे शिशिरतां चन्द्रे दृशोः सौम्यता-
मारामे स्पृहणीयतां परभृताराचे सुखश्राव्यताम् ।
आहारे करणीयतां रजनिषु क्षिप्रं परं नेयतां
यामुष्णादनवेक्षिता मम पुरा सैवाधुना दृश्यते ॥ ५० ॥

तदियं दृढतरं भुजाभ्यां बन्धनीया । (विमृश्य ।)

भर्गचापाधिरोपाख्ये प्रतिबन्धे हृते मया ।
भुजाभ्यां शक्यते बद्धुं भूकन्येयं न चान्यथा ॥ ५१ ॥

(इति त्वरितमुपसर्पन् धनुः पश्यति ।)

**माण्डवी**—अज्जे जाणइ, कोसिअमहेसिणा दुवे राअण्णदारआ आणीदा सुणीअदि ।

१. श्रुतमार्याया जानक्या वचनं युष्माभिः ।

२. आर्ये जानकि, कौशिकमहर्षिणा द्वौ राजन्यदारकावानीतौ श्रूयेते

**श्रीति** ॥ अनवेक्षिता मया अदृष्टा या सीता पुरा मम श्रीखण्डाद्रिः चन्दनाद्रिः मलयः तस्य समीरणे मारुते शिशिरतां शीतत्वं चन्द्रे दृशोरक्ष्णोः सौम्यतां अनुग्रतां आरामे उपवने स्पृहणीयतां वाञ्छनीयत्वं परभृतारावे कोकिलानादे सुखेन श्राव्यतां आकर्णनीयतां आहारे करणीयतां रजनिषु रात्रिषु परं पुनः क्षिप्रं शीघ्रं नेयतां नेतुं शक्यताञ्च अमुष्णात् अपाहरत् मलयमारुतादीनां कामोद्दीपकत्वादिति भावः । सा सीतैव अधुना अद्य दृश्यते । अत्र कामबाधाकार्यवर्णनमुखेन कामबाधावगम्यत इति प्रस्तुताङ्कुरालङ्कारः ॥ ५० ॥

**बन्धनीया** अनवेक्षणाभावाय नहनीया आलिङ्गनीयेति भावः । **भर्गेति** ॥ भर्गचापाधिरोपः शिवधनुरारोपणमित्याख्या नाम यस्य तथोक्ते प्रतिबन्धे आलिङ्गनोपरोधे मया हृते सति इयं भूकन्या सीता भुजाभ्यां बद्धुं आलिङ्गितुं शक्यते अन्यथा न शक्यते ॥ ५१ ॥

**सीता**—अह इं[1]।

**माण्डवी**—तीणं[2] एक्को को वि कण्णआए हिअअचोरो होदि त्ति सुणह्मि।

**सीता**—(सासूयम्।) [3]हुं। किं भणासि। तुण्हि आअच्छ।

(इति लीलाकमलेन ताडयति।)

**ऊर्मिला**—(विहस्य।) अइ[4] सीदे, इमिणा वावारेण मांडवीए कहिदं अत्तणो उवरि किं त्ति आणीअदि भवंदीए।

**सीता**—अइ[5] उम्मिले, असंबद्धप्पलाविणि दूरदो अवेहि।

**श्रुतकीर्तिः**—अइ[6] सीदे, कीस तुमं एत्थ एव्वं कुविदा होसि। जइ एव्वं तुमं भण। का उण एदाणं कण्णआणं सिविणए कं वि कंदप्पसुंदरं क्खत्तिअकुमारं दिट्ठूण घम्मदिअहक्कमसुस्सिदपरिवाहा गिरि-

---

१. अथ किम्।

२. तयोरेकः कस्या अपि कन्यकाया हृदयचोरो भवतीति शृणुमः।

३. हुम्। किं भणसि। तूष्णीमागच्छ।

४. अयि सीते, अमुना व्यापारेण माण्डव्याः कथितमात्मन उपरि किमित्यानीयते भवत्या।

५. अयि ऊर्मिले, असम्बद्धप्रलापिनि, दूरतोऽपेहि।

६. अयि सीते, कस्मात्त्वमत्रैव कुपिता भवसि। यद्येवं त्वं भण। का पुनरेतासां कन्यकानां स्वप्ने कमपि कन्दर्पसुन्दर क्षत्रियकुमारं दृष्ट्वा घर्मदिवसक्रमशुष्यत्प्रवाहा गिरिनदीव दिने दिने कृशाङ्गी भवति। कस्याः पुनर्नवदुग्धकलशधा-

राजन्यदारकौ नृपकुमारौ। **सासूयं** असूया गुणेषु दोषारोपः (अत्र तु स्वेङ्गितज्ञातृत्वरूपोर्मिलागुणे इङ्गितज्ञम्मन्यत्वादि दोषारोपः) तत्सहितं यथा तथा। **हुं** 'आमन्त्रणे भर्त्सने हुं' इति यादवः। **अमुना व्यापारेण** भर्त्सनादिना। **आत्मन उपरि** तवोपरि। **असंबद्धप्रलापिनि** असङ्गतभाषिणि। **अपेहि** अपसर। **घर्मेति**॥ घर्मदिवसेषु ग्रीष्मादिनेषु क्रमेण शुष्यन् शोषं गच्छन् प्रवाहः

णई विअ दिणे दिणे किसंगी होदि। काए उण णवदुद्धकलसधारासेअसमअसमुवट्ठिअधवलत्तणतत्तकंचणमअसालभंजिआलीलाविलासपत्ताइं अंगाइं होंदि। काए उण विवित्तरमणिज्जे उज्जाणमज्झभाए परिणदगुरुअरफलभारभंगुरविडवमादुलुंगउदिदुप्पवेसंदरे पच्छाअसिणिद्धमुद्धणालिएरवाडिआपरिमंडिदे माहवीमंडवे सरसकिसलअसअणविणिवेसिदतणुलदाए उसीरचंदणद्दवजंबालिअत्थणकुंभजुअलणिबिडणिक्खित्तणवेंदुकलाकोमलमिणालहारजट्ठिए पस्सोपविट्ठसहीजणकरकमलणट्टाविदणलिणी-

---

रासेकसमयसमुपस्थितधवलत्वतप्तकाञ्चनमयसालभञ्जिकालीलाविलासपात्राण्यङ्गानि भवन्ति। कया पुनर्विविक्तरमणीये उद्यानमध्यभागे परिणतगुरुतरफलभारभङ्गुरविटपमातुलङ्गवृतिदुष्प्रवेशान्तरे प्रच्छायस्निग्धमुग्धनारिकेलवाटिकापरिमण्डिते माधवीमण्डपे सरसकिसलयशयनविनिवेशिततनुलतया उशीरचन्दनद्रवजम्बालितस्तनकुम्भयुगलनिबिडनिक्षिप्तनवेन्दुकलाकोमलमृणालहारयष्ट्या पार्श्वोपविष्टसखी-

---

यस्यास्सा। **नवेति**॥ नवदुग्धकलशधारासेकसमये नूतनक्षीरकुम्भगतक्षीरधाराभिषेककाले समुपस्थितधवलत्वा अधिगतधावल्या तप्तकाञ्चनमयी द्रुतसुवर्णविकृता या सालभञ्जिका पाञ्चालिका तस्याः लीलाविलास इव लीलाविलासः (लक्षणया) शोभाविशेषः तस्य पात्राणि आस्पदानि। **विविक्ते** विजने। **परिणतेति**॥ परिणतानां परिपक्वानां गुरुतराणां अतिबृहतां फलानां भारेण भङ्गुराः भञ्जनशीलाः विटपाः शाखाः येषां तेषां मातुलङ्गानां बीजपूरकवृक्षाणां वृत्या आवरणेन दुष्प्रवेशं अन्तरं मध्यं यस्य तस्मिन्। **प्रच्छायेति**॥ प्रकृष्टा छाया यस्यस्तया स्निग्धया मसृणया हरितवर्णया वा मुग्धया रम्यया च नारिकेलानां वाटिकया वृत्या यद्वा उद्यानेन परिमण्डिते अलङ्कृते। माधवीमण्डपे वासन्तीलतामण्डपे। **सरस**किसलयशयने आर्द्रपल्लवतल्पे विनिवेशिततनुलतया विन्यस्तलतासदृशशरीरया। उशीरेण वीरणतृणमूलेन (युक्तेन) चन्दनद्रवेण चन्दनरसेन जम्बालिते कर्दमिते। स्तनकुम्भयुगले। निबिडं सान्द्रं यथा तथा निक्षिप्ता न्यस्ता। नवेन्दुकलेव कोमला रम्या मृणालहारयष्टिः बिसरचितहारलता यस्यास्तथाभूतया। **नर्तितं** कम्पितं

दलतालउंदकंदलिअसीअलमंदपवणसेविआए अदिवाहिजंदि दिवसाइं । अण्णं अ । पच्चूसप्पडिवुद्धा का उण विअणे सहीअणस्स एव्वं कहेदि ।

**माण्डवी**--सुदकित्ति, कहेहि कहेहि ।

**ऊर्मिला**—केहं कहेहि ।

**सीता**--सुदकित्ति एव्वं कहेहि ।

**श्रुतकीर्तिः**—(संस्कृतमाश्रित्य ।)

निद्रा जातु यदृच्छया यदि मम स्वप्ने तदा दृश्यते
रामो नाम युवा पुरः स तु शनैरभ्यर्णमासीदति ।
दासस्तेऽहमिति ब्रवीति कुचयोः संव्यानमाकर्षति
भ्रूभङ्गेऽञ्जलिमातनोति वदनं सव्याजमाजिघ्रति ॥ ५२ ॥

इति ।

(ऊर्मिलामाण्डव्यौ सीतामुखमवलोकयतः ।)

जनकरकमलनर्तितनलिनीदलतालवृन्तकन्दलितशीतलमन्दपवनसेवितया अतिवाह्यन्ते दिवसानि । अन्यच्च । प्रत्यूषप्रतिबुद्धा का पुनः विजने सखीजनस्य एवं कथयति ।

१. श्रुतकीर्ते, कथय कथय ।

२. कथं कथय ।

३. श्रुतकीर्ति एवं कथयति ।

वीजितामिति यावत् । **तालवृन्तं** व्यजनम् । **कन्दलितः** अङ्कुरितः उत्पन्नः । **अतिवाह्यन्ते** नीयन्ते । **अन्यच्चेति** प्रत्यूषे प्रभाते प्रबुद्धा जागरिता । **निद्रेति**॥ मम जातु कदाचित् यदृच्छया स्वेच्छया निद्रा भवेद्यदि तदा स्वप्ने मम पुरः रामो नाम युवा दृश्यते । स तु शनैः अभ्यर्णं मत्समीपं आसीदति आगच्छति । अहं ते दास इति ब्रवीति कुचयोः संव्यानं उत्तरीयं आकर्षति मम भ्रूभङ्गे सति अञ्जलिं आतनोति करोति । मम वदनं सव्याजं समिषं केनचिद्व्याजेन आजिघ्रति स्वनासासम्बद्धं करोति चुम्बितुमागच्छतीत्यर्थः । समुच्चयालङ्कारः । शार्दू...५२॥

**सीता**—(आत्मगतम् । सलज्जातिशयम् ।) परिण्णादो मह सव्वो उत्तंदो एदाहिं । का गई । (प्रकाशम् । धैर्यमवलम्ब्य ।) ण खु दाणिं तुह्मे उवालंभणिज्जाओ, किंदु सा एव्व परिहाससीला मे सीलवदी सही । जा खु सुदकित्ती बलिअ त्ति पदारेदुआमा 'सीदा उक्कंठिदा विअ किसपंडुरंगी पल्लवसअणसाइणी ईरिसी तारिसी होदि' त्ति अणिसं एव्व अणुइदाइं वअणाइं मंतअंदी चिट्ठइ ।

**माण्डवी**—(पुरोऽवलोक्य ।) कहं एदं पादालविवरपडिच्छंदलोअम-अमंजूसागब्भगअं णिच्चब्भच्चणसंकंदचंदणबिंदुणिअरलक्खिदं ससलंछ-णसेहरस्स सरासणं एत्थ एव्व आणीदं चिट्ठइ । तस्स एव्व परिसरे को एसो पेक्खंताणं बालचंदो विअ णअणाणंदसंदाइसंदंसणो कणअ-

१. परिज्ञातो मम सर्वो वृत्तान्त एताभिः । का गतिः । न खल्विदानीं यूय-मुपालम्भनीयाः । किं तु सैव परिहासशीला मे शीलवती सखी । या खलु श्रुत-कीर्तिर्बालेति प्रतारयितुकामा 'सीतोत्कण्ठितेव कृशपाण्डुराङ्गी पल्लवशयनशायिनी ईदृशी तादृशी भवति' इत्यनिशमेवानुचितानि वचनानि मन्त्रयमाणा तिष्ठति ।

२. कथमेतत् । पातालविवरप्रतिच्छन्दलोहमयमञ्जूषागर्भगतं नित्याभ्यर्चनसं-क्रान्तचन्दनबिन्दुनिकरलक्षितं शशलाञ्छनशेखरस्य शरासनमत्रैवानीतं तिष्ठति । तस्यैव परिसरे क एषः पश्यतां बालचन्द्र इव नयनानन्दसंदायिसन्दर्शनः कनक-

**इतीति** ॥ इत्येवं सखीजनस्य कथयतीति पूर्वेण सम्बन्धः । **उपालम्भ-नीयाः** भर्त्सनीया इत्यर्थः । प्रतारयितुकामा प्रतारयितुं वञ्चयितुं कामः यस्याः सा । **उत्कण्ठिता** 'म सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्ती-च्छां स सङ्कल्पामुत्कण्ठां कवयो विदुः ॥' इत्युक्तलक्षणा उत्कण्ठास्यामस्ञ्जातेत्युत्क-ण्ठिता । **मन्त्रयमाणा** वदन्ती । **पातालेति** ॥ पातालविवरस्य प्रतिच्छन्दः प्रतिनिधिः । समान इत्यर्थः । लोहमयमञ्जूषायाः अयोमयपेटिकायाः गर्भः मध्य-प्रदेशं तं गतं प्राप्तम् । **निकरः** समूहः । **शशलाञ्छनशेखरस्य** शिवस्य । परिसरे समीपे । नयनयोरानन्दं सम्प्रदातुं शीलमस्येति नयनानन्दसन्दायि सन्दर्शनं

मालिआसण्णद्धमुद्धसिहण्डमण्डणो संझासमअसमुम्मीलिदणीलुप्पलगब्भदलसामलसरीरलच्छी कण्णंतविस्संतकमलदलकोमलविउलरत्तंतणअणजुअलो करिकलभकरदीहतरपीवरभुजदण्डो मण्डणभूदो एदाए आसमभूमीए लक्खीअदि ।

**सीता**—(निर्वर्ण्य । आत्मगतम् ।) [१]कहं एदस्स आकिदी सिविणअदंसिदस्स तस्स पिअजणस्स संवादिणी । ता फलिदं मे मणोरहेण । जं एदं उद्दिसिअ गहीदमणोरहं मं तेलोक्कवीरो वि अवलाजणलक्खीकरणसंपत्तं वि दुक्कित्तिं अजाणिअ पञ्चसरहदओ सरासारं विमुंचंतो बाहेइ । चंदो वि साअरगब्भवाससुलहं कालऊडं कलङ्कववदेसेण गण्हीअ संदा

मालिकासन्नद्धमुग्धशिखण्डमण्डनः सन्ध्यासमयसमुन्मीलितनीलोत्पलगर्भदलश्यामलशरीरलक्ष्मीः कर्णान्तविश्रान्तकमलदलकोमलविपुलरक्तांतनयनयुगलः करिकलभकरदीर्घतरपीवरभुजदण्डः मण्डनभूत एतस्या आश्रमभूम्याः लक्ष्यते ।

१. कथमेतस्याकृतिः स्वप्नदर्शितस्य तस्य प्रियजनस्य संवादिनी । तस्मात्फलितं मे मनोरथेन । यदेतमुद्दिश्य गृहीतमनोरथां मां त्रैलोक्यवीरोऽप्यबलाजनलक्षीकरणसम्प्राप्तमपि दुष्कीर्तिमज्ञात्वा पञ्चशरहतकः शरासारं विमुञ्चन् बाधते । चन्द्रोऽपि सागरगर्भवाससुलभं कालकूटं कलङ्कव्यपदेशेन गृहीत्वा सन्तापयति ।

यस्य सः । कनकमालिकया सुवर्णमालया सन्नद्धं सम्बद्धं सम्यग्ग्रथितं मुग्धं सुन्दरं शिखण्डमण्डनं चूडाप्रसाधनं यस्य सः । अतएव सन्ध्यासमये समुन्मीलितस्य विकसितस्य नीलोत्पलस्य गर्भे मध्ये स्थितं दलमिव श्यामला शरीरलक्ष्मीर्यस्य सः कर्णान्तविश्रान्तं श्रोत्रसमीपगतं कमलदलमिव कोमलं रम्यं विपुलं विशालं रक्तान्तं नयनयुगलं यस्य सः । करिकलभस्य त्रिंशद्वर्षगजस्य करवत् शुण्डावत् दीर्घतरौ पीवरौ पीनौ भुजदण्डौ यस्य सः । मण्डनभूतः अलङ्कारभूतः । **संवादिनी** अनुकारिणी । **अबलेति** ॥ अबलाजनस्य स्त्रीजनस्य लक्षीकरणेन बाणगोचरीकरणेन सम्प्राप्तां सञ्जाताम् । दुष्कीर्तिं अपकीर्तिम् । **पञ्चशरहतकः** मन्मथहतकः । हतकः अशूरः अपशद इत्यर्थः । शरासारं बाणवर्षम् । कालकूटं विषम

वेदि । मलअपवणो वि दक्खिणदिसावरिअअसंकंदकिदंददारुणत्तणो मह पाणावहारं कादुं संचरेइ ।

(इति सर्वाभिः सखीभिः सह पश्यन्ती तिष्ठति ।)

**शतानन्दः**—राजन्, दृश्यतामसौ रघुकुमारः ।

**जनकः**—

धृष्टं पश्यति पञ्चकिङ्करशतव्याकृष्टचक्राष्टक-
क्रेंकुर्वच्छकटोपरि स्फुरदयःपेटीनिविष्टं धनुः ।

**कौशिकः**—

आदत्ते ननु लीलया भुवि समुत्तभ्नाति च

**लक्ष्मणः**— आलम्बते

ज्यामारोपयते च

**जनकः**—(सहर्षाश्चर्यम् ।)

कर्षति च

**शतानन्दः**—

किं वक्ष्याम्यभाङ्क्षीदिदम् ॥ ५३ ॥

मलयपवनोऽपि दक्षिणादिशा परिचयसंक्रान्तकृतान्तदारुणत्वः मम प्राणापहारं कर्तुं सञ्चरति ।

कलकव्यपदेशेन अङ्कव्याजेन । **दक्षिणेति** ॥ दक्षिणदिशायां दक्षिणादिशि परिचयेन सहवासाभ्यासेन संक्रान्तं (स्वस्मिन्) प्रविष्टं कृतान्तस्य दक्षिणदिक्पालस्य यमस्य दारुणत्वं भीषणत्वं यस्मिन् सः । **धृष्टमिति** ॥ असौ रघुकुमारः । पञ्चभि. किङ्करशतैः विशेषेणाकृष्टस्य चक्राणामष्टकेन क्रेंकुर्वतः क्रेङ्कारं कुर्वतः शकटस्य उपरि स्फुरन्त्यां राजन्त्यां अयः पेट्यां लोहमञ्जूषायां निविष्टं स्थितं धनुः धृष्टं सधैर्यं पश्यति । लीलया ननु क्रीडयैव आदत्ते गृह्णाति । भुवि समुत्तभ्नाति सम्यगुत्तंभयति च । आलम्बते मौर्वीसंयोजनाय धनुर्गृह्णाति ज्यां मौर्वीं धनुः आरोपयते धनुः आरोपितज्यं करोति च । कर्षति आकर्षति च । किं वक्ष्यामि इदं धनुः अभाङ्क्षीत् भग्नं चकार । अनेकक्रियमेककारकन्दीपकमलङ्कारः । शार्दू... ॥ ५३ ॥

**जनकः**—(साश्चर्यम् ।)

कल्पान्तध्वनदभ्रविभ्रमकरोज्जृम्भत्ककुत्स्थार्भक-
व्याकृष्टत्रुटितोरुधूर्जटिधनुर्ध्वानोत्थिते साध्वसे ।
मूर्च्छामृच्छति भूयसीं निपतति द्राङ्मन्दमुत्तिष्ठति
स्वस्थो विस्मयते च किं न्विदमिति प्रायस्त्रिलोकीजनः ॥

**शतानन्दः**—(अपवार्य । जनकं प्रति ।)

एष एव भगवान् स सुहृत्ते लक्ष्मणोऽप्ययमसावपि रामः ।
ये पुनः प्रथममागतवन्तो राक्षसा इति न किं विदितास्ते ॥

**जनकः**—(अपवार्य ।) विदिता एव ।

**शतानन्दः**—(अपवार्य ।) दिष्ट्या कुहनार्णवादपि मनोरथार्णवादिव समुत्तीर्णाः स्मः ।

**कौशिकः**—जनकराज, श्रूयताम् ।

इदं वत्साकृष्टत्रुटितहरकोदण्डजनिते
कठोरे ठात्कारे त्रिभुवनभयाय प्रभवति ।

**कल्पेति** ॥ कल्पान्ते प्रलयसमीपे ध्वनतः नदतः अभ्रस्य मेघस्य विभ्रमकरः विलासकृत् सदृश इत्यर्थः । उज्जृम्भन् वर्धमानश्च यः ककुत्स्थार्भकेण रामेण व्याकृष्टस्य त्रुटितस्य भग्नस्य उरुणः महतः धूर्जटिधनुषः शिवचापस्य ध्वानः नादः तेन उत्थिते जाते साध्वसे भये । प्रायः बहुशः त्रिलोकीजनः भूयसीं अतिबहुलां मूर्च्छां ऋच्छति गच्छति द्राक् शीघ्रं निपतति । मन्दं शनैः उत्तिष्ठति । स्वस्थः स्वास्थ्यं गतस्सन् इदं किंन्विति विस्मयते विस्मयं गच्छति च । पूर्ववद्वृत्तालङ्कारौ ॥ ५४ ॥

**एष इति** ॥ ते तव सुहृत् सखा सः कौशिकः । ते न विदिताः किं त्वया न ज्ञाताः किम् ॥ ५५ ॥

कुहना माया । **इदमिति** ॥ इदं यथा यथा, वत्सेन आकृष्टात् त्रुटितात् हरकोदण्डात् शिवधनुषः जनिते कठोरे पूर्णे चण्डे वा ठात्कारे त्रिभुवनस्य भयाय भीतिं कर्तुं प्रभवति शक्नोति सति । कमलभूः धाता वध्वाः मुखास्थितायाः भार्या-

. वधूसंरक्षायै वहति मुखमुद्रां कमलभूः
नगेशस्सव्याङ्गस्थगनपरसव्येतरभुजः ॥ ५६ ॥

**जनकः**—सत्यमेवंदम् ।

**विद्यु.**—दृढसत्त्वोऽयं क्षत्रियवटुः । तथा हि—

प्रागुद्भूतमहाद्भुतान्तकपुरीयुद्धानुबद्धक्रुधा
देवोऽयं दशभिर्मुखैरपि समं चण्डाट्टहासं व्यधात् ।
दिग्दन्तिश्रवणेष्वरुन्तुदसमारम्भेण संभाव्यते
तुल्यस्तेन ककुत्स्थपोतदलितश्रीकण्ठचापध्वनिः ॥ ५७ ॥

**सारणः**—किं वर्ण्यते विद्युज्जिह्वेन । नन्विदं मेरुधन्वनो भगवतश्चापभञ्जनं नाम महाराजस्य मनोरथमूलोच्छेदः ।

**दशाननः**—(विद्युज्जिह्वं प्रति । सामर्षम् । विहस्य ।)

भङ्क्त्वा कार्मुकमैन्दुशेखरमसौ वोढा विदेहात्मजां
दाता मैथिल एष कौशिकमुनिस्तस्यानुमन्तैष च ।

या: वाण्या: रक्षायै रक्षणाय मुखमुद्रां आननानां पिधानं वहति धत्ते । नगेशः शिवः वध्वाः वामाङ्गस्थितगौर्याः रक्षायै सव्याङ्गस्थगनपरः वामाङ्गप्रच्छादनपरः सव्येतरः दक्षिणः भुजः यस्य तथाभूतः वर्तते । सम्बन्धातिशयोक्त्यलङ्कारः । शिखरिणी वृत्तम् ॥ ५६ ॥

**दृढसत्त्वः** अतिमात्रबलः । **प्रागिति** ॥ देवः स्वामी रावणः प्राक् पुरा उद्भूते सञ्जाते महाद्भुते अन्तकपुरीयुद्धे अनुबद्धया अनुषक्तया क्रुधा कोपेन दशभिः मुखैरपि समं युगपत् यं चण्डाट्टहासं व राट्टहासध्वनिं व्यधात् अकरोत् । दिग्दन्तिनां दिग्गजानां श्रवणेषु श्रोत्रेषु (अरूंषि तुदतीति) अरुन्तुदः मर्मपीडकः समारम्भः प्रयत्नः यस्य तथोक्तेन तेन चण्डाट्टहासेन । ककुत्स्थपोतेन रामेण दलितस्य भग्नस्य श्रीकण्ठचापस्य शिवधनुषः ध्वनिः । तुल्यः सदृशः सम्भाव्यते आशङ्क्यते । उपमालङ्कारः । शार्दू...॥ ५७ ॥

**मेरुधन्वनः** शिवस्य । **भङ्क्त्वेति** ॥ असौ रामः ऐन्दुशेखरं शैवं कार्मुकं धनुः भङ्क्त्वा भग्नं कृत्वा विदेहात्मजां सीतां वोढा परिणेष्यति । एषः मैथि-

आगत्य स्वयमाप्तुमन्यवपुषा लङ्केश्वरः केवलं
यातासौ पुरमात्मनः कथमिदं जातं कथं मन्यसे ॥ ५८ ॥

**विद्यु.**—(स्वगतम् ।) प्रकुपितोऽयं राजा तदेनमनुवर्तिष्ये । (प्रकाशम् ।) यदेत्कालोचितं तन्मया न विज्ञापनीयमभिज्ञाय देवाय ।

**दशाननः**—तर्हि श्रूयताम् ।

हन्तव्यः प्रथममसौ ममापकारी
मद्वर्ग्यप्रसभवधेन राजसूनुः ।
हर्तव्या सुहृदमपि प्रमथ्य पश्चा-
द्वैदेही यदकुरुतैष विप्रलम्भम् ॥ ५९ ॥

**सारणः**—यद्येवम् ।

करतुलितगदाविभिन्नवक्षः-
सुलभनृपोतनवामिषोपदंशम् ।

---

लः जनकः दाता सीतां रामाय दास्यति । एष कौशिकमुनिः तस्य रामाय सीता-दानं(सम्बन्धसामान्ये षष्ठी) अनुमन्ता अनुमंस्यते च । यद्वा अनुमन्तेति तृजन्तम् । तत्पक्षे तस्येत्यत्र 'कर्तृकर्मणोः कृति' इति षष्ठी । असौ लङ्केश्वरः सीतां आप्तुं स्वयं अन्यवपुषा जनकसमीपं आगत्य केवलं सीतामप्राप्य एक एव यथा भवति तथा । पुरं लङ्कां याता यास्यति । इदं कथञ्जातम् । कथं मन्यसे । शार्दू . . ॥५८

**हन्तव्य इति** । मम (वर्गे भवानां) वर्ग्याणां ताटकादीनां प्रसभेण बलात्कारेण यो वधस्तेन । मम अपकारी अपकारशीलः असौ राजसूनुः रामः प्रथमं हन्तव्यः । यत् यतः एषः जनकः विप्रलम्भं वञ्चनां अकुरुत । तत् ततः सुहृदमपि जनकं प्रमथ्य हत्वा पश्चात् वैदेही सीता हर्तव्या हर्तुं योग्या । हन्तव्य-स्सुहृदपि तत्प्रमथ्य पश्चाद्वैदेहीं यदिति पाठे । प्रमथ्य राजसूनुं हत्वा पश्चात् । यत् एषः विप्रलम्भं अकुरुत तत् सुहृदपि जनकः हन्तव्य इत्यर्थः । प्रहर्षिणी वृत्तम् ॥

**करेति** ॥ करेण तुलितया कम्पितया गदया भिन्नात् वक्षसः सुलभं नृपो-तस्य नरशिशो रामस्य नवं आमिषं मांसमेव उपदंशः व्यञ्जनं यस्य तत् । असि-

असिदलितविदेहराजकण्ठ-
सुतमसृगद्य पिबामि देह्यनुज्ञाम् ॥ ६० ॥

**विद्यु.**—(आत्मगतम् ।) कौशिकोपदिष्टसकलास्त्रमन्त्रग्रामो रामोऽयमतिगंभीरमहासत्त्वः । तदस्य पुरः संप्रहारे महाराजोऽपि न प्रभवति स्थातुम् । किं पुनरसौ सारणः । (प्रकाशम् ।) धिङ्मूर्ख, किं प्रलपसि । महाराज, प्रसीद किंचिदाकर्णयितुम् ।

**दशाननः**—विधेयोऽस्मि मन्त्रिजनस्य ।

**विद्यु.**—

सहसा विहितं कर्म विशीर्येतापि जातुचित् ।
विमर्शपूर्वकं तच्चेद्विदध्यान्मङ्गलं बहु ॥ ६१ ॥

तदिदानीम्,

यथा घानिष्यते रामो यथा सीता च लप्स्यते ।
माल्यवत्प्रमुखैर्मन्त्रं कृत्वा कारिष्यते तथा ॥ ६२ ॥

ना खड्गेन दलितात् भिन्नात् विदेहराजकण्ठात् सुतं गलितं असृक् रक्तं अद्य पिबामि । अनुज्ञां अनुमतिं देहि । पुष्पिताग्रा वृत्तम् ॥ ६० ॥

**अतीति** ॥ अतिगम्भीरं अत्यगाधं महत् सत्वं बलं यस्य सः । अस्य रामस्य । सम्प्रहारे युद्धे । न प्रभवति न शक्नोति । **विधेयः** वचने स्थितः । **सहसेति** ॥ सहसा अनालोच्य विहितं कृतं कर्म जातुचित् कदाचित् विशीर्येतापि विशीर्णं भवेत् फलदायिन भवेदित्यर्थः । अपिस्सम्भावनायाम् । तत् कर्म विमर्शपूर्वकं आलोचनापुरस्सरं विहितश्चेत् बहु अधिकं मङ्गल शुभं विदध्यात् कुर्यात् ॥

**यथेति** ॥ रामः यथा घानिष्यते हनिष्यते किञ्च यथा सीता लप्स्यते प्राप्स्यते । माल्यवान् रावणस्य मातामहः मन्त्री च तत्प्रमुखैः मन्त्रं आलोचनां कृत्वा तथा कारिष्यते करिष्यते । हन्तेः कृञश्च कर्मणि लृटि 'स्यसिच् सीयुट्तासिषुभावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वद्भावविकल्पादुक्तरूपद्वयम् ॥ ६२ ॥

**दशानन**.—यद्येवं, पुनर्विमानमारुह्य लङ्कापुरमेव त्वरितं प्रविशामः। किमनेनाद्य सीताया दर्शनकुतूहलेन यैषा बलाद्गृहीतव्येति निर्धारितम्।

(इति राक्षसाभ्यां सह निष्क्रान्तः।)

**जनकः**—(सहर्षप्रश्रयम्।)

मन्मनोरथनिर्वृत्त्यै महोद्यमविधायिने।
गाधिवंशाब्धिचन्द्राय कौशिकाय नमो नमः॥ ६३॥

**शतानन्दः**—भगवन् कुशिकनन्दन,

रामाय दीयते सीता लक्ष्मणाय तथोर्मिला।
माण्डवी श्रुतकीर्तिश्च कनिष्ठाभ्यामथैनयोः॥ ६४॥

**कौशिकः**—बाढं बाढम्।

**सीता**—(स्वगतम्।) कहं इमिणा मणोरहवल्लहेण खंडपरसुणो कोदंडं मदवेदंडकिसोरएण विअ इक्खुखंडं तुरिअं भग्गं जादं। अच्चरिअं अच्चरिअं। (प्रकाशम्।) उम्मिले, किं एदं।

१. कथममुना मनोरथवल्लभेन खण्डपरशोः कोदण्ड मदवेतण्डकिशोरकेणेवेक्षुखण्डं त्वरितं भग्नं जातम्। आश्चर्यमाश्चर्यम्। ऊर्मिले किमेतत्।

**निर्धारितं** निर्णीतम्। **प्रश्रयः** विनयः। **मदिति**॥ मम मनोरथस्य निर्वृत्त्यै परिपूर्त्यै महान् उद्यमः प्रयत्नः तद्विधायिने तत्कारिणे गाधिवंश एव अब्धिस्तस्य चन्द्राय कौशिकाय। नमो नमः। आदरे द्विरुक्तिः। रूपकालङ्कारः॥६३॥

**रामायेति**॥ एनयोः रामलक्ष्मणयोः कनिष्ठाभ्यां अनुजाभ्यां भरतशत्रुघ्नाभ्याम्॥ ६४॥

**बाढं** अनुमतम्। 'बाढन्त्वदनुमते दृढे' इति यादवः। **खण्डपरशोः** शिवस्य। कोदण्डं धनुः। **मदेति**॥ मदयुक्तगजशिशुना। **भर्गः** शिवः।

**ऊर्मिला**—हद्धि हद्धि । इमिणा रहुउमारेण भग्गस्स भग्गसरासणस्स पलअघणविमुक्कणिग्घाँदभीसणेण णिग्घोसेण चलिदाहिं अण्णोण्णबाहुबंधणसंवेट्ठिअगत्ताहिं णिमीलिअणअणणीलुप्पलाहिं अह्मेहिं एसो एत्थ को वि क्खणो कहं वि अदिवाहिदो होदि ।

**माण्डवी**—[2]ता कोसिअमहेसिणो पादवंदणं करिअ अंदेउरं गच्छह्म ।

**श्रुतकीर्तिः**—[3]तह करह्म ।

**जनकः**—(सानन्दस्नेहबहुमानम् ।) एह्येहि वत्स रामभद्र ।

दिनकरकुलदीपो दीप्तबाहुप्रताप-
श्चतुरिमपदमीषद्यौवनापाङ्गिताङ्गः
मदुपजनितसंविद्वारिधेः कर्णधार-
स्त्वमसि मम सुतायाः प्राक्तनः पुण्यराशिः ॥ ६९ ॥

१ हा धिक् हा धिक् । अमुना रघुकुमारेण भग्नस्य भर्गशरासनस्य प्रलयघनविमुक्तनिर्ह्रादभीषणेन निर्घोषेण चलिताभिरन्योन्यबाहुबन्धनसंवेष्टितगात्राभिर्निमीलितनयनानीलोत्पलाभिरस्माभिरेष एव कोऽपि क्षणः कथमप्यतिवाहितो भवति ।

२. तत्कौशिकमहर्षेः पादवन्दनं कृत्वा अन्तःपुरं गच्छामः ।

३. तथा कुर्मः ।

---

**प्रलयेति** ॥ प्रलयकालमेघजनितगर्जितवद्भयङ्करेण । निर्घोषेण शब्देन चलिताभिः कम्पिताभिः । अन्योन्यं परस्परं बाहुबन्धनेन आलिङ्गनेन संवेष्टितगात्राभिः संवृतशरीराभिः । **निमीलितेति** ॥ विहितनीलोत्पलसदृशनेत्राभिः । **अतिवाहितः** नीतः । **दिनेति** ॥ रामभद्र । दिनकरस्य रवेः कुलं वंश एव कुलं गृहं तस्य दीपः । दीप्तः उज्ज्वलः बाहुप्रतापः यस्य सः । चतुरिमणः चातुर्यस्य पदं आश्रय. । ईषत् किंचित् यौवनेन तारुण्येन अपांगितानि कटाक्षितानि भूषितानीत्यर्थः । अङ्गानि यस्य सः । मया उपजनितायाः उत्पादितायाः कृतायाः संविदः प्रतिज्ञाया एव वारिधेः समुद्रस्य (कर्णं अरित्रं धरतीति) कर्णधारः नाविकः । त्वं मम

(रामो मुखमानमयन् कौशिकस्य पार्श्वे उपविशति ।)

**प्रतिहारी**—एष कन्याजनः संप्राप्तः ।-

**सीता**—(विलोक्य ।) सो एव्व एसो खंडपरसुचावखंडणो एत्थ उपविसइ । मह पाणिपादा ण प्पसरइ सद्धसेण । (इति माण्डवीपार्श्वे तिरोहिता गच्छति ।)

**रामः**—(स्वगतम् ।)

कामं रुणद्धि विनयो गुरुसंनिधाने
कान्ताविलोकनकुतूहलिनीं दृशं मे ।
तत्पादनूपुररवश्रवणोत्सवोऽयं
कर्णौ धिनोति यदनेन न किं कृती स्याम् ॥ ६६ ॥

**ऊर्मिला**—(स्वगतम् ।) कहं मिच्चुंजअचावभंजणस्स एदस्स पस्से तत्तकत्तस्सरगोरसुउमारसरीरो लक्खणो चिट्ठइ । एदं पेक्खंदीए मह

१. स एवैषः खण्डपरशुचापखण्डनोऽत्रोपाविशति । मम पाणिपादं न प्रसरति साध्वसेन ।

२. कथं मृत्युञ्जयचापभञ्जनस्यैतस्य पार्श्वे तप्तकार्तस्वरगौरसुकुमारशरीरो लक्ष्मणस्तिष्ठति । एतं पश्यन्त्या मम हृदयेन भगवतः मकरध्वजस्य क्रीडामृगत्वं गृह्यते कथमेतत् ।

सुतायाः प्राक् भवः प्राक्तनः पूर्वजन्मभवः पुण्यराशिः सुकृतसमूहः । असि । रूपकालङ्कारः । मालिनी वृत्तम् ॥ ६५ ॥

पाणी च पादौ च पाणिपादम् । साध्वसेन भयेन । **काममिति** ॥ गुरुसन्निधाने विनयः विनीतिः कान्तायाः प्रियायाः सीतायाः विलोकने कुतूहलिनीं कौतुकवतीं मे दृशं कामं भृशं रुणद्धि रुन्धे । अयं तस्याः पादनूपुररवस्य चरण मञ्जीरनादस्य श्रवणोत्सवः आकर्णनानन्दः । मम कर्णौ धिनोति प्रीणयतीति यत् अनेन कृती धन्यः न स्यां किम् । नेत्रानन्दस्य विनयेन वारितत्वेऽपि श्रोत्रानन्दस्यावारितत्वात्तावता चरितार्थो भवेयमिति भावः । वसन्ततिलका वृत्तम् ॥ ६६॥

मृत्युञ्जयः शिवः । तप्तकार्तस्वरमिव द्रुतकनकमिव गौरं पीतवर्णं सुकुमारं

हिअएण भअवंतस्स मअरद्धजस्स कीलामिअत्तणं गण्हीअदि । कहं एदं ।

(इति जनकस्य समीपं गच्छति ।)

**लक्ष्मणः**—(स्वगतम् ।) अस्याः खलु

विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे ।
हृदयं किं करिष्यामि न पुनर्विनिवर्तते ॥ ६७ ॥

(इति पराङ्मुखस्तिष्ठति ।)

**जनकः**—एष भगवान् कौशिकमहर्षिः प्रणन्तव्यो वत्साभिः ।

**कन्याः**—अज्ज अह्मे पणमामो तादपादाणं ।

**कौशिकः**—वत्साः, मनोरथेन युज्यध्वम् ।

(कन्याः किंचिदपक्रम्य तिष्ठन्ति ।)

**कौशिकः**—अद्यैव यज्ञमारप्स्ये । राजन्, त्वमपि प्रतिज्ञां निर्वर्तय ।

**जनकः**—प्रतिहारिन्, उच्यन्तामधिकारिणः ।

द्वारि द्वारि निवेशयन्तु कदलीस्तम्भान्विनम्रान् फलै-
र्व्यातन्वन्तु सुधानुलेपधवला भित्तीरगारेष्वपि ।

१. अयि वयं प्रणमामस्तातपादेभ्यः ।

---

रम्यं शरीरं यस्य सः । **क्रीडामृगत्वं गृह्यते** मन्मथशबरस्य मृगयारूपक्रीडार्थं मन्मनो मृगो भवतीति भावः । **विशालेति** ॥ विशालाक्ष्याः आयतनयनायाः अस्याः ऊर्मिलायाः कटाक्षेण मे हृदयं रश्मिना प्रग्रहेणेव विकृष्टं आकृष्टम् । शेषं सुगमम् ॥ ६७ ॥

**तातपादेभ्यः** तातमित्रत्वात्ताततुल्येभ्यः कौशिकपादेभ्यः । उत्तरपदानि तातचरणमिश्रादीनि पूज्यार्थकानि । तातपादेभ्यः प्रणमाम इत्यत्र तातपादाननुकूलयितुं प्रणमाम इत्यर्थः । 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी । अन्यथा नमति देवानितिवत् द्वितीया स्यात् । **द्वारीति** ॥ अधिकारिणः तेषु तेषु कर्मस्वधिकृताः जनाः । द्वारि द्वारि प्रतिद्वारं फलैः विनम्रान् अवनतान् कदलीस्तम्भान् निवेशयन्तु स्थापयन्तु । अगारेषु गृहेष्वपि । भित्तीः कुड्यानि सुधानुलेपधवलाः चूर्ण-

बद्धालीषु वितानपङ्क्तिषु ततिं बध्नन्तु पुष्पस्रजा-
　　मालेख्यानि लिखन्तु संनिदधते वत्साविवाहोत्सवाः ॥ ६८

**प्रतिहारी**—तथा । (इति निष्क्रान्तः ।)

(नेपथ्ये ।)

साकेतादाश्रमाभ्यर्णं संप्राप्तः कोसलेश्वरः ।
यतस्तुरङ्गमातङ्गैराक्रान्तेयमभून्मही ॥ ६९ ॥

**जनकः**—भगवन् कुशिकनन्दन, देवव्रतो ब्रवीति । तदनेन पुरोधसा शतानन्देन रामलक्ष्मणाभ्यां वत्साभिश्च सहैव चिरवयस्यो महाराजदशरथः सप्रश्रयमावाभ्यां प्रत्युद्गमनेन संभावयितव्यः ।

**कौशिकः**—एवं भवतु ।

**जनकः**—देवव्रत, कोसलेश्वरस्य सावरोधवधूजनस्य संभावनार्थमन्तःपुरिकाजनमप्यन्वगुपस्थापय । (इति निष्क्रान्ताः सर्वे ।)

**इति जानकीपरिणयनाटके चतुर्थोऽङ्कः ।**

---

विलेपेन शुभ्राः व्यातन्वन्तु रचयन्तु । बद्धाः भन्त्स्यमानपुष्पमालामकरन्दलोल्येन सम्बद्धाः अलयः भृङ्गयः (बह्वादेराकृतिगणत्वात् ङीप्) यासु तासु बद्धालीषु । त्रुट्यत्काञ्च्य इत्यादि प्रयोगा एव समासान्तकप्रत्ययस्य उपसर्जनह्रस्वस्य चाप्रवृत्तौ शरणम् । पुष्पमालाबन्धात्पूर्वमेव भृङ्गबन्धस्य कथनादत्यन्तातिशयोक्तिः । यद्वा बद्धाः सम्बन्धनीयाः 'आशंसायां भूतवच्च' इति भूतकालवत् प्रत्ययः । शेषं पूर्ववत् । वितानपङ्क्तिषु उल्लोचनततिषु । पुष्पस्रजां कुसुममालिकानां ततिं पङ्क्तिं बध्नन्तु नह्यन्तु । आलेख्यानि चित्राणि लिखन्तु । किमर्थमिति चेत् । वत्सानां विवाहोत्सवाः । सन्निदधते सन्निहिता भवन्ति । इत्युच्यन्तामिति पूर्वेण सम्बन्धः । समुच्चयः काव्यलिङ्गञ्चालङ्कारौ । शार्दू ... ॥ ६८ ॥

**साकेतादिति** ॥ यतः तुरङ्गैः अश्वैः मातङ्गैः गजैश्च इयं मही भूः आक्रान्ता व्याप्ता अभूत् । ततः कोसलेश्वरः दशरथः साकेतात् अयोध्यायाः आश्रमस्य अभ्यर्णे अन्तिके सम्प्राप्तः आगतः ॥ ६९ ॥

**देवव्रतः** शतानन्दशिष्यः ब्रवीति साकेतादित्यादिकं वदति । **वयस्यः** मित्रम् । सावरोधवधूजनस्य अन्तःपुरस्त्रीजनसमेतस्य । **अन्वक्** अनुपदं । उपस्थापय प्रस्थापय यद्वा अस्मत् समीपं प्रापय ॥

इति श्रीश्वेतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां
बालक्रीडाख्यायां चतुर्थाङ्कव्याख्या पूर्तिमगमत् ॥

# पञ्चमोऽङ्कः ।

(ततः प्रविशति विराधः ।)

**विराधः—**

श्रुत्वा जनस्थानजुषामृषीणां
त्राणाय रक्षोहननप्रतिज्ञाम् ।
संप्राप्तकोपः स खरः सखायं
मां प्राहिणोद्दाशरथेर्वधाय ॥ १ ॥

(सगर्वस्मितम् ।)

रक्षसां बलवान् राजा ततोऽपि प्रथमं खरः ।
ततोऽपि लवणस्तस्मादप्यहं कोऽस्ति मे समः ॥ २ ॥

परं तु । कैकसीसूनुरिति लङ्काराज्ये दशग्रीवोऽभिमतोऽस्माकम् । (विचिन्त्य ।) हन्त हन्त,

किं वक्ष्ये राजपुत्रस्य धैर्यं हिमगिरेरिव ।
यस्य प्रतिज्ञा कुरुते रक्षोमात्रममर्षणम् ॥ ३ ॥

---

**श्रुत्वेति** ॥ जनस्थानजुषां जनस्थानाख्यप्रदेशभाजां ऋषीणां त्राणाय रक्षणाय रक्षसां राक्षसानां हनने संहरणे प्रतिज्ञां रामकृतप्रतिज्ञानं श्रुत्वा सम्प्राप्तकोपः सः खरः दाशरथेः रामस्य वधाय मां प्राहिणोत् प्रहितवान् । इन्द्रवज्रा वृत्तम् ॥ १

**रक्षसामिति** ॥ प्रथमं प्रथमतः रक्षसां मध्ये राजा रावणः बलवान् ततोपि रावणादपि खरः बलवान् ततोपि खरादपि लवणः बलवान् तस्मादपि अहं बलवान् ततः मे समः कोस्ति ॥ २ ॥

अभिमतः सम्मतः । **किमिति** ॥ राजपुत्रस्य रामस्य हिमगिरेः हिमाचलस्यैव धैर्यं अप्रकम्प्यत्वं किं वक्ष्ये किं वदिष्यामि । यस्य राजपुत्रस्य प्रतिज्ञा रक्षोहननप्रतिज्ञा रक्षोमात्रं रक्षस्सामान्यं अमर्षणं असहनं कुरुते ॥ ३ ॥

तदिदानीं खरवचनादृतेऽपि मयायमनुशासनीयः । दृष्टश्च मयायमवलम्बितपरपुष्टरूपेण, एष हि सीतया संलपन् समुन्नतगिरितटगतं विविक्तरमणीयं प्रबुद्धमुकुलगुरुभिर्वकुलतरुभिः प्रच्छायशीतलं शिलातलमधिवसति । लक्ष्मणश्च पर्णकुटीरद्वारदेशे पटीरतरुवाटिकापरिसरे निवेशितनिषङ्गशरासनकाण्डो मण्डलाग्रमवकृष्य कोशगर्भान्निर्भरमवलोकयति तारापथम् । अहो कीदृगस्य गाम्भीर्यं, कीदृशमिदं धीरोद्धतमवस्थानं च । (सवैक्लव्यम् ।)

जेतुं क्षमः किमयमद्भुतबाहुसत्त्वः
सौमित्रिरेव मम दाशरथौ कथा का ।
तज्जानकीं रघुशिशोरवलम्ब्य रूपं
देशे दवीयसि हरन्विहरे यथेष्टम् ॥ ४ ॥

अस्या वियोगात्प्रेयस्या रामो हास्यति जीवितम् ।
सौमित्रिरपि च भ्रातुः खरस्येष्टं च सिध्यति ॥ ५ ॥

---

खरवचनात् ऋते खरवचनं विनापि । **परपुष्टः** कोकिलः । प्रबुद्धमुकुलगुरुभिः विकसितकोरकबहुलैः । अल्पाकुटी कुटीरः । पटीरतरुवाटिकायाः चन्दनवृक्षोद्यानस्य परिसरे समीपे । **निवेशितेति** ॥ स्थापिततूणीरचापबाणः । मण्डलाग्रं असिम् । **कोशगर्भात्** असि पिधानमध्यात् । निर्भरं दृढम् । तारापथम् । आकाशम् । **गाम्भीर्यं** अगाधहृदयत्वम् । **धीरोद्धतं** धीरमप्रकम्प्यं उद्धतं गर्वितञ्च । अवस्थानं स्थितिः । **सवैक्लव्यं** विक्लवस्य विह्वलस्य भावः वैक्लव्यं तेन सहितम् । **जेतुमिति** ॥ अद्भुत आश्चर्यकरं बाह्वोः सत्वं बलं यस्य सः अयं सौमित्रिः लक्ष्मणएव मम मया जेतुं क्षमः शक्यः किम् । न जय्य एवेत्यर्थः । तथा सति दाशरथौ रामे का कथा रामो न जय्य इति किमु वक्तव्यमिति भावः। काव्यार्थापत्त्यलङ्कारः । तत् ततः । रघुशिशोः रामस्य रूपं आकृतिं अवलम्ब्य आश्रित्य जानकीं दवीयसि अतिदूरे देशे हरन् नयन् यथेष्टं विहरे क्रीडामि । वसन्ततिलका वृत्तम् ॥ ४ ॥

**अस्या इति** ॥ अस्याः प्रेयस्याः प्रियायाः वियोगात् रामः जीवितं हास्यति त्यक्ष्यति अपि च सौमित्रिः भ्रातुः रामस्य वियोगाज्जीवितं हास्यति ॥ ५ ॥

तदेकाकिन्या जनककन्यकायाः बहिर्निष्क्रमणं प्रतीक्षमाणो नातिदूरेऽस्मिन् कोविदारवने स्थास्यामि। न ह्यत्र जटायुर्दृश्यते। नूनमसौ संपातिमग्रजमभिवादयितुं प्रस्थितः। (पुरोऽवलोक्य।) कथमियं लङ्काद्वीपादागता शूर्पणखा। भवतु। पृच्छामि महाराजलङ्केश्वरस्य कुशलप्रवृत्तिम्। (इति परिक्रामति।)

(ततः प्रविशति शूर्पणखा।)

**शूर्पणखा**—अहं खु पंचवडीकिदकुडीरस्स रहुराअउत्तस्स कलत्तं जाणइं मण्णिमित्तं ओहर त्ति अग्गजेण महाराअलंकेसुरेण अणुप्पेसिदम्हि। दिट्ठा खु सा भट्टुणो पस्सपरिवट्टिणी गहीददच्चूहरूवाए मए। कहं उण ओहरिस्सं त्ति तक्केमि। अह वा चिट्ठदु एदं।

कंदप्पसुंदरे तस्सिं कुंदोट्टदलसामले।
रामे दिट्ठिपहं पत्ते कामेण हरिदं मणं॥ १॥

ता दाणिं जाणईरूवं संदंसिअ दूरदो रामं एआइणं णिग्गअं गण्हीअ हेमऊडसेलप्पदेसे इमिणा जहमणोरहं विहरिस्सं।

(इति परिक्रामति।)

**विराधः**—अयि शूर्पणखे, स्वागतं भवत्याः।

१. अहं खलु पञ्चवटीकृतकुटीरस्य रघुराजपुत्रस्य कलत्रं जानकीं मन्निमित्तमपहरेत्यग्रजेन महाराजलङ्केश्वरेणानुप्रेषितास्मि। दृष्टा खलु सा भर्तुः पार्श्वपरिवर्तिनी गृहीतदात्यूहरूपया मया। कथं पुनरपहरिष्यामीति तर्कयामि। अथ वा तिष्ठत्वेतत्।

कन्दर्पसुन्दरे तस्मिन् नीलोत्पलश्यामले।
रामे दृष्टिपथं प्राप्ते कामेन हृतं मनः॥

तस्मादिदानीं जानकीरूपं संदर्श्य दूरतो राममेकाकिनं निर्गतं गृहीत्वा हेमकूटशैलप्रदेशे अमुना यथामनोरथं विहरिष्यामि।

---

**प्रतीक्षमाणः** प्रतिपालयन्। कोविदारः। ताम्रपुष्पवृक्षः (மந்தாரை) **प्रवृत्तिं** वार्ताम्। **दात्यूहः** चातकः। **कन्दर्प इति**॥ दृष्टिपथं दर्शनमार्गम्॥

**शूर्पणखा**—कहं विराहो। अज्ज, अवि कुसली होसि।

**विराधः**—अपि कुशलं महाराजलङ्केश्वरस्य।

**शूर्पणखा**—कुसलं हविस्सदि, जइ णिव्विआरो वट्टिस्सदि।

**विराधः**—(स्वगतम्।) क इवास्य विचारः। (प्रकाशम्।) अपि श्रुतं महाराजेन रजनीचरेषु वधे प्रतिज्ञातं दाशरथेः।

**शूर्पणखा**—सुदं अ इदो कादव्वं अमच्चेहिं मंतिदं अ। चारेण अकंपणेण खरस्स किं वि अविण्णादं अण्णेहिं संदिट्ठं अ।

**विराधः**—(स्वगतम्।) अत एवैवं खरेण सबहुमानमाहूय प्रस्थापितोऽस्मि। (प्रकाशम्।) कथं राक्षसशिक्षार्थमेव जनस्थानमागताविव तौ क्षत्रियकुमारौ।

**शूर्पणखा**—सुणोदु अज्जो महाराएण सअंकिदं अणत्थसंपादणं।

**विराधः**—(सादरम्।) अवहितोऽस्मि।

**शूर्पणखा**—अत्थि जणओ णाम राएसी।

**विराधः**—जानामि। यः खलु माहेश्वर इति महाराजस्य मैत्रीपदम्।

**शूर्पणखा**—तस्स कण्णअं सीदं रामाणुरत्ते त्ति रामवेसं कदुअ परिणेदुं गदो महाराओ।

१. कथं विराधः। आर्य, अपि कुशली भवसि।

२ कुशलं भविष्यति, यदि निर्विचारो वर्तिष्यते।

३. श्रुतं च, इतः कर्तव्यममात्यैर्मन्त्रितं च। चारेणाकम्पनेन खरस्य किमप्यविज्ञातमन्यैः सन्दिष्टं च।

४. शृणोत्वार्यो महाराजेन स्वयंकृतमनर्थसम्पादनम्।

५. अस्ति जनको नाम राजर्षिः।

६. तस्य कन्यकां सीतां रामानुरक्तेति रामवेषं कृत्वा परिणेतुं गतो महाराजः।

---

**अकम्पनेन** तदाख्यराक्षसेन। **सन्दिष्टं** वाचिकं प्रहितम्। **मैत्रीपदं**

**विराधः**—(स्वगतम् ।) ममेव तस्याप्यस्यां मनः प्रवृत्तं भवेत् । (प्रकाशम् ।) ततस्ततः ।

**शूर्पणखा**—तदो[1] जणएण संकरसरासणारोवणं ताए परिणअस्स पणीकिदं ।

**विराधः**—तत्तु दुष्करं महाराजस्य राक्षसतया ।

**शूर्पणखा**—अदो[2] एव्व राअउत्तेण सीदा परिणीदा ।

**विराधः**—ततस्ततः ।

**शूर्पणखा**—तदो[3] दुण्णिवारामरिसरोसलज्जाणुराअपरवसेण मह भादुणा लंकाउरं पविसिअ मल्लवंतप्पमुहेहिं अमच्चेहिं संमंतिअ किं वि णिच्चिदं आसि ।

**विराधः**—ततस्ततः ।

**शूर्पणखा**—तदो[4] संकरसरासणभंगणिवेदणेण रोसाविदो माहेसुरो भग्गवरामो राहववधस्स प्पेसिदो ।

**विराधः**—स खलु निखिलक्षत्रियवधप्रतिज्ञाकूपारपारदृश्वा पारश्वथिकः । ततस्ततः ।

१. ततो जनकेन शङ्करशरासनारोपणं तस्याः परिणयाय पणीकृतम् ।

२. अत एव राजपुत्रेण सीता परिणीता ।

३. ततो दुर्निवारामर्षरोषलज्जानुरागपरवशेन मम भ्रात्रा लङ्कापुरं प्रविश्य माल्यवत्प्रमुखैरमात्यैः संमन्त्र्य किमपि निश्चितमासीत् ।

४. ततः शङ्करशरासनभङ्गनिवेदनेन रोषापितो माहेश्वरो भार्गवरामो राघववधस्य प्रेषितः ।

स्नेहास्पदम् । **पणीकृतं** शुल्कधनीकृतम् । **अमर्षः** अक्षान्तिः रोषः कोपः अनुरागः सीतायामासक्तिः । **भ्रात्रा** रावणेन । **रोषापितः** कोपं प्रापितः । महेश्वरो भक्तिभजनीयोऽस्य माहेश्वरः । भार्गवरामः परशुरामः । वधस्य वधाय । सम्बन्धसामान्ये षष्ठी । **स इति** ॥ निखिलक्षत्रियवधप्रतिज्ञैव अकूपारः समुद्रः

**शूर्पणखा**—[1]तदो सो वि वीरेण देण राहवेण सामरिअं महुरिवुचावेण सह गहीदसत्ती पुण्णलोअगइणिरोहेण भग्गमदो किदो ।

**विराधः**—(सविषादाद्भुतम् ।)

कार्तवीर्यस्य दोर्वीर्यग्रस्तपौलस्त्यतेजसः ।
हन्तापि चेज्जितो हन्त रामेण त्रिजगज्जितम् ॥ ७ ॥

ततस्ततः ।

**शूर्पणखा**—[2]तदो महाराएण पहिदेहिं अज्ज विज्जुज्जीहप्पमुहेहिं आविट्ठा मंथराकैकईदसरहा ।

**विराधः**—ततस्ततः ।

**शूर्पणखा**—[3]तदो मंथराए रामस्स वणे वासं भरदस्स रज्जाहिआरं अ भट्टा पुव्वादिण्णेण वरजुअलेण पत्थिदव्वो त्ति अणुबंधिअमाणा केकई तह त्ति कोवाआरं पविट्ठा ।

**विराधः**—निश्चितं किमन्यत् । ततस्तया प्रार्थितस्तथा राजा वृद्धोऽपि तरुणीकामुकः कुमारं वनं प्रापितवान् ।

---

१. ततः सोऽपि वीरेण तेन राघवेण सामर्षं मधुरिपुचापेन सह गृहीतशक्तिः पुण्यलोकगतिनिरोधेन भग्नमदः कृतः ।

२. ततो महाराजेन प्रहितैरार्यविद्युज्जिह्वप्रमुखैराविष्टा मन्थराकैकेयीदशरथाः ।

३. ततो मन्थरया रामस्य वनेवासं भरतस्य राज्याधिकारं च भर्ता पूर्वदत्तेन वरयुगलेन प्रार्थितव्य इत्यनुबध्यमाना कैकयी तथेति कोपागारं प्रविष्टा ।

---

तस्य पारदृश्वा पारन्दृष्टवान् परश्वथः परशुः प्रहरणमस्येति पारश्वधिकः परशुरामः। **सामर्षं** सकोपम् । **मधुरिपुः** विष्णुः । गृहीता शक्तिः बलं यस्य सः । पुण्यलोकगतेः पुण्यार्जितलोकान्तरगमनस्य निरोधेन उपरोधेन विनाशनेनेत्यर्थः । **कार्तवीर्यस्येति** ॥ दोष्णां बाहूनां वीर्येण ग्रस्तं भक्षितं पौलस्त्यस्य रावणस्य तेजः प्रतापः यस्य तस्य । कार्तवीर्यस्य कृतवीर्यापत्यस्यार्जुनस्य हन्ता परशुरामोऽपि रामेण जितश्चेत् तर्हि रामेण त्रिजगज्जितम् । हन्तेति विषादे । अद्भुते वा ॥ प्रहितैः प्रेषितैः । **अनुबध्यमाना** निर्बध्यमाना । कोपागारं कोपप्रवेश्यं

**शूर्पणखा**—तदो लक्खणो सीदा अ वणं पत्थिदं रामं अणुगदा। पच्चा दसरहेण रक्खसावेसविमुक्कदेहेण पुत्तविवासणं जाणिअ पुत्तसिणेहेण पाणा विमुक्का ।

**विराधः**—कथं मारितो दशरथो महाराजेन । ततस्ततः ।

**शूर्पणखा**—तदो कणिट्ठस्स अणुइदं रज्जं त्ति भरदेण वणं आअदेण पत्थिदो रामो । पादुए पडिणिहीं करिअ भरदं अयोज्झं पाविदवंतो ।

**विराधः**—विदितो वृत्तान्तः । कः पुनरिहानर्थः । ननु महाराजेन वनमानाय्य रामस्य प्रभुशक्तिरपनीता । तदभावे च कः प्रसङ्गो मन्त्रोत्साहयोरिति निपुणमुपक्रान्तम् । त्वं पुनः किमर्थमिहागतासि ।

शूर्पणखा—जाणई ओहरिदव्वेत्ति लंकेसुरेण पेसिद ह्मि ।

**विराधः**—(स्वगतम् ।) सेयं विराधेन खलु स्वीकरिष्यते । (प्रकाशम् ।) अशक्यमिदं भवत्याः ।

१. ततो लक्ष्मणः सीता च वनं प्रस्थित राममनुगतौ । पश्चाद्दशरथेन राक्षसावेशविमुक्तदेहेन पुत्रविवासन ज्ञात्वा पुत्रस्नेहेन प्राणा विमुक्ताः ।

२. ततः कनिष्ठस्य अनुचितं राज्यमिति भरतेन वनमागतेन प्रार्थितो रामः । पादुके प्रतिनिधीकृत्य भरतमयोध्यां प्रापितवान् ।

३. जानक्यपहर्तव्येति लङ्केश्वरेण प्रेषितास्मि ।

गृहम् । **तरुणीकामुकः** कामयत इति कामुकः कामी तरुण्यां युवत्यां कामुकः । **विवासनं** वनप्रयापनाम् । **पादुके** उपानहौ । प्रतिनिधीकृत्य स्वसदृशीकृत्य । महाराजेन स्वयंकृतमनर्थसम्पादनमित्युक्त किल शूर्पणखया तत्र पृच्छति । **कः पुनरिहानर्थ इति** ॥ **प्रभुशक्तिः** कोशदण्डबलम् । अपनीता नाशिता । तस्याः प्रभुशक्तेरभावे च । मन्त्रः मन्त्रशक्तिः सन्ध्यादीनां सामादीनाञ्च यथा वत्स्थापनं उत्साहः उत्साहशक्तिः विक्रमबलं तयोः प्रसङ्गः कः का प्रसक्तिरिति निपुणमुपक्रान्तं सम्यगारब्धम् । **सेयमिति** ॥ अस्वा स्वा सम्पद्यमाना करिष्यते

शूर्पणखा—(स्वगतम् ।) मह खु जाणईवेसेण रामं गण्हिअ विहरिस्सं त्ति ववसाओ । होदु । एव्वं भणिस्सं (प्रकाशम् ।) अदो एव्व लंकाउरं पत्थिद ह्मि ।[1]

**विराधः**—(स्वगतम् । सहर्षम् ।) मम खलु प्रकृतकार्ये निवृत्तो महान् प्रत्यूहः । (प्रकाशम् ।) तथा क्रियताम् ।

शूर्पणखा—तुमं उण कीस रामस्समणिअडं आअदोसि ।[2]

**विराधः**—रामो निहन्तव्य इति खरेण नियुक्तोऽस्मि ।

शूर्पणखा—(स्वगतम् ।) हदास, मम वल्लहं मारेदुं किं आअदं तुए अवेहि अवेहि । (प्रकाशम् ।) तुह वि एदं ण सक्कं होदि ।[3]

**विराधः**—(स्वगतम् ।) किमेतेन, यदहं जानकीं गृहीत्वा गन्तुमिच्छामि । भवतु । एवं वक्ष्यामि । (प्रकाशम् ।) अत एव यथादृष्टं निवेदयितुं खरस्य समीपं गमिष्यामि ।

शूर्पणखा—(स्वगतम् ।) मह खु पत्थुदकज्जे दिट्ठिआ दुरिदणिवत्ती होदि । (प्रकाशम् ।) ता गच्छेहि गच्छेहि जहसमीहिदं कादुं ।[4]

(इत्युभौ निष्क्रान्तौ ।)

(मिश्रविष्कम्भः ।)

---

१. मम खलु जानकीवेषेण रामं गृहीत्वा विहरिष्यामीति व्यवसायः । भवतु । एवं भणिष्यामि । अत एव लङ्कापुरं प्रस्थितास्मि ।

२. त्वं पुनः कस्माद्रामाश्रमनिकटमागतोऽसि ।

३. हताश, मम वल्लभं मारयितुं किमागतं त्वया । अपेह्यपेहि । तवाप्येतन्न शक्यं भवति ।

४. मम खलु प्रस्तुतकार्ये दिष्ट्या दुरितनिवृत्तिर्भवति । तद्गच्छ गच्छ यथासमीहितं कर्तुम् ।

---

स्वीकरिष्यते । **व्यवसायः** उद्योगः । **प्रत्यूहः** विघ्नः । **निकटं** समीपम् । **हताश** दुष्टमनोरथ । **अपेहि** अपसर । **प्रस्तुतं** प्रकृतम् । **दुरितं** पापं विघ्न इत्यर्थः । **यथासमीहितं** समीहितं ईप्सितमनतिक्रम्य । **प्रेयसि** प्रिये ।

( ततः प्रविशति यथानिर्दिष्टो रामः सीता च । )

**रामः**—अयि प्रेयसि जानकि,

चन्द्रार्धशेखरशरासनमद्रिसारं
मीनध्वजस्य मयि चापविकर्षणञ्च ।
शौर्यस्मयं भृगुपतेश्च समापयन्ती
लब्धासि सुन्दरि मया लघुनोद्यमेन ॥ ८ ॥

**सीता**—(सस्मितवदना तिष्ठति ।)

**रामः**—

परभृतनिनदेन प्रापितौ दौरवस्थ्यं
सुखय किमपि कर्णौ सुन्दरि व्याहृतेन ।
ननु वहति मुखं ते पुण्डरीकस्य लक्ष्मीं
न पुनरिदमुदञ्चच्चञ्चरीकारवस्य ॥ ९ ॥

**चन्द्रेति** ॥ हे सुन्दरि शोभने अद्रेः पर्वतस्य सार इव सारः बलं यस्य तत् । चन्द्रार्धशेखरस्य शिवस्य शरासनं धनुः मयि मीनध्वजस्य मन्मथस्य चापविकर्षणं धनुराकर्षणञ्च । भृगुपतेः परशुरामस्य शौर्यस्मयं वीर्यगर्वञ्च समापयन्ती क्रमेण भञ्जयन्ती अनुकूलयन्ती निवर्तयन्तीत्यर्थः । त्वं मया लघुना अल्पेन उद्यमेन प्रयत्नेन लब्धा असि । वसन्ततिलका वृत्तम् ॥ ८ ॥

**परेति** ॥ हे सुन्दरि परभृतस्य कोकिलस्य निनदेन ध्वनिना किमपि अनिर्वचनीयं दौरवस्थ्यं दुःस्थितं प्रापितौ गमितौ मम कर्णौ तव व्याहृतेन वचनेन सुखय सुखितौ कुरु । कोकिलनादात्सीताव्याहृतस्याधिक्यभानाद्व्यतिरेकध्वनिः । ननु अयि ते इदं मुखं पुण्डरीकस्य सिताम्भोजस्य लक्ष्मीं शोभामिव शोभां वहति धत्ते । अत्र निदर्शना । उदञ्चतः पुण्डरीकात् उद्यतः चञ्चरीकारवस्य भृङ्गध्वनेः लक्ष्मीं पुनः शोभान्तु न वहति । तव व्याहृते सति तामपि वहेदिति भावः । तव किमपि व्याहरेति वक्तव्ये भङ्ग्यन्तरेण कथनात्पर्यायोक्तालङ्कारः । मालिनी वृत्तम् ॥ ९ ॥

**सीता**—(सप्रणयम् ।) अज्जउत्त अहं खु दाणिं तुए किदं अण्णदुक्करं भग्गचावस्सं भग्गवदुरवलेवस्सं अ भंगं सुमरिअ सुमरिअ विम्हअत्थिमिदहिअअ ह्मि । क्खणमेत्तं ता पसीद ।

**रामः**—कथमित एव प्रसादमभ्यर्थयते भवती । न किंचिदस्ति मे कोपकारणम् । किं तु । शृणु तावत् ।

हस्तप्राप्तमपास्य यद्गुरुगिरा राज्यं वने प्रस्थितं
मामेव स्मरता च यद्विमनसा तातेन यातं दिवि ।
भीमश्वापदराक्षसैकभवने यच्चास्यते कानने
शोकं तं निखिलं प्रमार्ष्टि सुमुखि त्वत्साहचर्यं मम ॥१०॥

**सीता**—णाह, तुह संणिहाणमेत्तं अरण्णे वि मह णअरादो वि सुहं संपादेइ ।

**रामः**—एवमेतत् । दृश्यतामिदम् ।

संगीतं क्व मृगीदृशां मधुलिहामग्रे कलं कूजता-
माकर्ण्यद्विपकर्णतालनिनदैरातोद्यमुत्सार्यते ।

१. आर्यपुत्र, अहं खल्विदानीं त्वया कृतमन्यदुष्करं भर्गचापस्य भार्गवदुरवलेपस्य च भङ्गं स्मृत्वा स्मृत्वा विस्मयस्तिमितहृदयास्मि । क्षणमात्रं तस्मात्प्रसीद ।

२. नाथ, तव सन्निधानमात्रमरण्येऽपि मम नगरादपि सुखं सम्पादयति ।

**दुरवलेपस्य** दुर्मदस्य । स्तिमितं स्तब्धम् । **हस्तेति** ॥ हस्तप्राप्तं हस्तगतं राज्यं गुरुगिरा पितृवाक्येन अणस्य त्यक्त्वा वने प्रस्थितमिति यत् । मामेव स्मरता विमनसा दुःखितचेतसा तातेन पित्रा दिवि स्वर्गे यातश्चेति यत् । भीमानां भयङ्कराणां श्वापदानां दुष्टमृगाणां राक्षसानाञ्च एकं मुख्यं भवनं गृहं तस्मिन् कानने वने आस्यते स्थीयत इति यत् । तं निखिलं शोकं हे सुमुखि मम तव साहचर्यं सहवासः प्रमार्ष्टि निवर्तयति । शार्दू...॥ १० ॥

**सङ्गीतमिति** ॥ कलं अव्यक्तमधुरं यथा तथा कूजतां शब्दायमानानां मधुलिहां भृङ्गाणां अग्रे पुरः मृगीदृशां स्त्रीणां सङ्गीतं गानं क्व । अरण्ये भवाः आरण्याः ये द्विपाः गजाः तेषां कर्णा एव तालाः वाद्यभाण्डानि यद्वा तालाः ताल-

नातिक्रामति हंसतूलशयनं किं पल्लवैरास्तरो
वृत्त्या वन्यफलैर्विपाकमधुरैः पौरी च विस्मार्यते ॥ ११ ॥

**सीता**—अज्जउत्त, विचित्तमिअपक्खिगणजुत्तं एदं अरण्णं एव्व रोअइ मे हिअअस्स।[1]

**रामः**—युक्तमाह भवती।

नीपस्कन्धे निवसति लसद्बर्हभारो मयूरो
दीर्घापाङ्गश्चरति च तृणं शाद्वलेऽयं कुरङ्गः।
कुम्भेनोच्चैः स्पृशति विटपे सल्लकीं कुञ्जरोऽसौ
कस्मै नायं कमलनयने रोचतेऽरण्यभागः ॥ १२ ॥

अपि च।

धत्ते बर्हभरे शिखी तव न किं धम्मिल्लभारश्रियं
सारङ्गो भजते न किं तव दृशोः सौभाग्यमालोकने।

१. आर्यपुत्र, चित्रमृगपक्षिगणयुक्तमेतदरण्यमेव रोचते मे हृदयाय।

वृन्तानि (नामैकदेशग्रहणे विशिष्टग्रहणात्) तेषां निनदैः नादैः आतोद्यं चतुर्विधवाद्यं 'ततवीणादिकं वाद्यमानद्धम्मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम्' इत्यमरः। उत्सार्यते दूरीक्रियते। पल्लवैः किसलयैः (रचितः) आस्तरः शयनं हंसतूलिकाशयनं हंसतूलरचिततल्पं नातिक्रामति किं नातिशेते किम्। अतिक्राम्यतीत्यर्थः। विपाकेन विलक्षणपाकविशेषेण मधुरैः रुचिरैः वन्यैः वनभवैः फलैः (रच्यमानया) वृत्त्या जीवनेन पौरी पुरे भवा वृत्तिश्च विस्मार्यते विस्मृतिं प्राप्यते। शार्दू... ॥ ११ ॥

**नीपेति** ॥ लसन् राजमानः बर्हभारः पिच्छसमूहः यस्य सः मयूरः शिखी नीपस्कन्धे कदम्बप्रकाण्डे 'अस्त्री प्रकाण्डः स्कन्धस्स्यात्' इत्यमरः। निवसति। दीर्घापाङ्गः आयतनेत्रान्तः अयं कुरङ्गः हरिणः शादः बालतृणमस्मिन्निति शाद्वलः नवतृणप्रचुरदेशस्तस्मिन् तृणं चरति अत्ति। असौ कुञ्जरः गजः कुम्भेन कुम्भस्थलेन सल्लकीं गजभक्ष्याख्यतरुं विटपे शाखायां स्पृशति। ततः हे कमलनयने पद्माक्षि अयं अरण्यभागः वनप्रदेशः कस्मै न रोचते। मन्दाक्रान्तावृत्तम् ॥ १२ ॥

**धत्त इति** ॥ शिखी मयूरः बर्हभारे पिच्छभारे धम्मिल्लभारश्रियं सयतकच-

मत्तेभश्च शिरःपदे वहति ते वक्षोजलक्ष्मीं न किं
तन्मन्ये तरुणि त्वया विवृणुते साम्यं वनश्रीरियम् ॥१३॥

**सीता**—(सानुरागम् । आत्मगतम् ।) अज्जउत्तो मं वण्णेदुं पवुत्तो । ता एदस्स हिअअं अण्णदो आक्खिवामि । (प्रकाशम् ।) अज्जउत्त के उण एदे पच्चग्गमिणालणिअरणिम्मलकोमलदाढा-मुउलकरालविच्छिण्ण-मुहा पुण्णिमाचंदजोण्णासवण्णसरीरा मिआ खेलंदि । के उण एदे अ चंदोदअक्खणक्खुहिददुद्धसाअरतरंगपडलपरंपरासंघट्टणसंजणिअफेणपुंज धवललोलदीहवाला तरलतरतारएक्खणा मिआ परिब्भमंदि ।

**रामः**—अयि जनकनन्दिनि, एते सिंहशावाः क्रीडन्ति । एताश्च तद्दर्शनचकिताश्चमर्यश्चरन्ति । पश्येदानीम् ।

१. आर्यपुत्रो, मां वर्णयितु प्रवृत्तः । तस्मादेतस्य हृदयमन्यत आक्षिपामि । आर्यपुत्र, के पुनरेते प्रत्यग्रमृणालनिकरनिर्मलकोमलदंष्ट्रामुकुलकरालविस्तीर्णमुखाः पौर्णिमाचन्द्रज्योत्स्नासवर्णशरीरा मृगाः खेलन्ति । के पुनरेते च चन्द्रोदयक्षणक्षुभितदुग्धसागरतरङ्गपटलपरस्परासङ्घट्टनसञ्जनितफेनपुञ्जधवललोलदीर्घवालास्तरलतरतारकेक्षणा मृगाः परिभ्रमन्ति ।

समूहशोभां किन्न धत्ते न धारयति किम् । सारङ्गः मृगः आलोकने वीक्षणे तव दृशोः नेत्रयोः सौभाग्यं सौन्दर्यं न भजते किं नाश्रयते किम् । मत्तेभः मत्तगजश्च शिरःपदे कुम्भस्थले ते तव वक्षोजलक्ष्मीं कुचशोभां किन्न वहति । तत् ततः हे तरुणि युवते सीते इयं वनश्रीः त्वया साम्यं विवृणुते प्रकटयतीति मन्ये । प्रतीपालङ्कारः । शार्दू... ॥ १३ ॥

**अन्यतः** अन्यत्र । **आक्षिपामि** प्रेरयामि । **प्रत्यग्रेति** ॥ प्रत्यग्रमृणालनिकरा इव अभिनवबिस स समूहा इव निर्मलाः स्वच्छाः कोमलाः रम्याश्च दंष्ट्रा-मुकुलाः दन्तकोरकाः तैः करालानि दन्तुराणि विस्तीर्णानि मुखानि येषान्ते । पूर्णिमाचन्द्रज्योत्स्नया राकाचन्द्रकौमुद्या सवर्णं समानवर्णं शरीरं येषां ते । खेलन्ति क्रीडन्ति । चन्द्रोदयक्षणे क्षुभितस्य कलुषितस्य दुग्धसागरस्य क्षीरसमुद्रस्य-तरङ्गपटलस्य वीचिसमूहस्य परस्परसङ्घट्टनेन सञ्जनितानां फेनानां डिण्डीराणां

क्रीडत्केसरिपोतभीतचमरीवर्गं दरीनिर्गत-
व्याघ्राकृष्टलुलायमुद्भटरुरुक्रोडाहवप्रक्रमम् ।
मध्वाक्षेपदशावधूतसरघादष्टाननव्याकुल-
क्रोशत्कीशकुलं फलं नयनयोरेतद्विधत्ते वनम् ॥ १४ ॥

**सीता**—(दृष्ट्वा।) [1]सच्चं तिनिसद्दुमविडवेसु लंबमाणाइ दोणमेत्तमहूइ महंतखोद्दपडलाइ। ण उण सुळहाइ सरहाबाहिदेहिं वाणरेहिं।

**रामः**—अथ किम्।

**सीता**—[2]ईरिसो अद्धपरस्स जणस्स प्पआरो। जह अण्णेण णिक्खित्तं वद्धु अण्णो अणुहोदि। जं इमिणा महुमक्खिआगणेण संभरिअं महु णिउणो माणुसो गण्हीअ अस्सादेहि।

१. सत्य तिनिशद्रुमविटपेषु लम्बमानानि द्रोणमात्रमधूनि महान्तक्षौद्रपटलानि। न पुनः सुलभानि सरघाबाधितैर्वानरैः।

२. ईदृशोऽर्थपरस्य जनस्य प्रकारः। यथान्येन निक्षिप्तं वस्त्वन्योऽनुभवति। यदमुना मधुमक्षिकागणेन सम्भृत मधु निपुणो मानुषो गृहीत्वास्वादयति।

---

पुञ्जाः राशय इव धवललोलदीर्घाः वालाः केशाः वा लधयो वा येषां ते। तरलतरे अत्यन्तचञ्चले तारके कनीनिके ययोस्ते ईक्षणे नयने येषां ते। **शावाः** शिशवः **चकिताः** भीताः। **चमर्यः** मृगविशेषाः। **क्रीडदिति** ॥ क्रीडद्भ्यः खेलद्भ्यः केसरिपोतेभ्यः सिंहशिशुभ्यः भीताः चमरीणां वर्गाः गणाः यस्मिंस्तत्। दर्याः गुहायाः निर्गतैः व्याघ्रैः आकृष्टाः लुलायाः महिषा यस्मिन्। उद्भटः अधिकः रुरूणां मृगभेदानां क्रोडानां वराहाणाञ्च आहवप्रक्रमः युद्धप्रकारः यस्मिन्। मधुनः माध्वीकस्य आक्षेपस्य आकर्षणस्य अपहरणस्य दशायां स्थितौ अवधूताभिः क्षिप्ताभिः सरघाभिः मधुमक्षिकाभिः दष्टाननं अतएव व्याकुलं क्रोशच्च कलकलशब्दं कुर्वत् कीशकुलं मर्कटसमूहः यस्मिंस्तत्। एतत् वनं नेत्रयोः फलं प्रयोजनं विधत्ते करोति। शार्दू...॥ १४ ॥

**तिनिशद्रुमविटपेषु** स्यन्दनवृक्षशाखासु। द्रोणमात्रमधूनि आढकाढकप्रमाणमाध्वीकानि। क्षौद्रपटलानि क्षुद्राभिर्मक्षिकाभिः कृतं क्षौद्रं मधु तस्य पट-

**रामः**—(स्वगतम् ।) अर्थपरोऽयं न भवतीति मयि संभावनेयमस्याः (प्रकाशम् ।) अन्येन निक्षिप्तमन्योऽनुभवति भाग्यवशात् । पश्य ।

अपहसितसुधारसं त्वदीये
मधु निदधाति मनोभवोऽधरोष्ठे ।
कथमपि मिथिलाधिराजकन्ये
पिबति न किं जन एष तद्गृहीत्वा ॥ १५ ॥

**सीता**—(स्वगतम् ।) [1]अदिक्कामदि अज्जउत्तस्स संजप्पिदं ।

(इति सलज्जमवाङ्मुखी तिष्ठति ।)

**रामः**—(स्वगतम् ।) इदानीमनेन मे वचनेन रमणीयमेषा लज्जते। यतः ।

उत्पुलकगण्डमण्डलमुद्भिन्नप्रणयपिशुननयनान्तम् ।
नमयति न परमियं निजमाननकमलं मनोऽपि मम ॥ १६ ॥

तदन्यद्दर्शयामि । (प्रकाशम् ।) पश्य जानकि ।

त्वद्गण्डूषमधूपसेकविकलोऽप्येष स्वयं केसरो
भव्यान्येवमभिव्यनक्ति कुसुमान्यर्हाणि धर्तुं तव ।

---

१. अतिक्रामत्यार्यपुत्रस्य सञ्जल्पितम् ।

---

लानि सञ्चयाः घनीभूतांशाः ( येभ्यो मधु पीडयन्ति ) **अर्थपरस्य** अर्थासक्तस्य । **निक्षिप्तं** न्यस्तं सञ्चितम् । **अपेति** ॥ हे मिथिलाधिराजकन्ये सीते मनोभवः कामः तवायं त्वदीयस्तस्मिन् अधरोष्ठे अधस्तनोष्ठे अपहसितसुधारसं परिहसितामृतरुचि मधु निदधाति निक्षिपति एषः जनः रामः कथमपि कृच्छ्रेण तत् अधरमधु गृहीत्वा न पिबति किम् । पुष्पिताग्रा वृत्तम् ॥ १५ ॥

सञ्जल्पितं सम्भाषणम् । **उदिति** ॥ उत्पुलकं उद्गतरोमाञ्चम् । गण्डमण्डलं कपोलदेशः यस्मिंस्तत् । उद्भिन्नः विकसितः अभिवृद्धः प्रणयः प्रेम तस्य पिशुनः सूचकः नयनान्तः अपाङ्गः यस्मिंस्तत् । निजं स्वीयं आननकमलं पर मुखपद्मं केवलं न नमयति अवनतं न करोति । किं तु मम मनोपि नमयति प्रवणं करोति ॥ १६ ॥

**त्वदिति** ॥ हे दयिते प्रिये तव गण्डूषमधुनः 'वकुलो मुखशीधुना'

येषां दिक्षु विदिक्षु च प्रवहता गन्धेन पुष्पंधयाः
श्रेणीभूय विडम्बयन्ति दयिते वेणीलतां तावकीम् ॥ १७ ॥

**सीता**—(स्वगतम् ।) जह जह सिविणएसु संकप्पदसासु अज्जउत्तो चाडुवअणादिहिं वावारेहिं मं अणुवट्टमाणो आसी तह तह दाणिं पच्चक्खं अणुवट्टदि त्ति अच्चरिअं अच्चरिअं । (प्रकाशम् ।) अज्जउत्त, किं ण पेक्खसि गिम्मदिअहावसाणविअंभमाणणवंबुदसामलकोमलच्छविहिं णिरंदरोल्लसिदेहिं गुच्छेहिं अलंकिदो एसो अदसीरुक्खो इमं पदेसं अलंकरेदि ।

**रामः**—(स्वगतम् ।) निपुणमेतस्या वयमुक्तिप्रत्युक्तिकया विडम्बिताः स्मः । (प्रकाशम् ।) अयि वनदर्शनकुतूहलिनि जानकि ।

१. यथा यथा स्वप्नेषु सङ्कल्पदशास्वार्यपुत्रश्चाटुवचनादिभिर्व्यापारैर्मामनुवर्तमान आसीत् । तथा तथेदानीं प्रत्यक्षमनुवर्तते इत्याश्चर्यमाश्चर्यम् । आर्यपुत्र किं न पश्यसि ग्रीष्मदिवसावसानविजृम्भमाणनवाम्बुदश्यामलकोमलच्छविभिर्निरन्तरोल्लसितैर्गुच्छैरलङ्कृत एषोऽतसीवृक्ष इमं प्रदेशमलङ्करोति ।

---

इत्युक्तदोहदरूपस्य मुखपूर्णमद्यस्य उपसेकेन सेचनेन विकलः रहितोऽपि एषः केसरः वकुलः स्वयं धर्तुं तव अर्हाणि योग्यानि भव्यानि शोभनानि कुसुमानि एवं अभिव्यनक्ति प्रकाशयति । दिक्षु प्राच्यादिषु विदिक्षु आग्नेय्यादिषु च प्रवहता प्रसरता येषां कुसुमानां गन्धेन आमोदेन (आकृष्टाः) श्रेणीभूय सङ्घीभूय स्थिताः पुष्पन्धयाः भृङ्गाः हे दयिते तावकीं त्वदीयां वेणीलतां लतासदृशकबरीं विडम्बयन्ति अनुकुर्वन्ति । उपमालङ्कारः । शार्दू...॥ १७ ॥

**संकल्पदशासु** प्रियसमागमविषयकमानसक्रियावस्थासु । चाटुवचनादिभिः नर्मवाक्यादिभिः । ग्रीष्मदिवसावसाने वर्षाकाले विजृम्भमाणः वर्धमानः नवः अम्बुदः मेघः तद्वत् श्यामला कोमला रम्या च छविः कान्तिर्येषां तैः । निरन्तरोल्लसितैः निबिडं विकसितैः गुच्छः स्तबकैः (रोमाञ्चैरिति ध्वन्यते) अतसीवृक्षः नीलमुनिद्रुमः (राम इति च ध्वन्यते) । **निपुणमिति** ॥ उक्तिः प्रत्युक्तिश्च

नीलश्वेतपिशङ्गरक्तहरितच्छायाभृतो धातवो
दृश्यन्तामिह सर्वतो गिरिनदीमुद्बुद्धमुग्धाम्बुजाम् ।
यस्यां हंसकुलस्य केलिकलहादुद्भ्राम्यतः कूजितै-
श्चण्डि त्वन्मणिमेखलाकलकलो नन्वीषदन्वीयते ॥ १८ ॥

सीता—(स्वगतम् । सवैलक्ष्यम् ।) जं पुढमं वणं पत्थिदेण अज्जउत्तेण उणो उणो जाजिदं वि मह अणुप्पआणं पडिसिद्धं त्ति कुविदाए मए सब्भूभंगं अहिक्खिविअ अंतेउरं गंदुं संरंहमुहरमेहलं पउत्तं आसी। तं सुमरावेदि मं अज्जउत्तो । होदु । एव्वं भणिस्सं । (प्रकाशम् ।) णाह तुह भुजदंडं अस्सिदाए मए एदस्सिं अरण्णे णिब्भअं किं किं अब्भुअं पेक्खिदुं ण सक्किअदि । जेण रक्खसाणं सआसादो जणत्थाणणिवासिणं इसिणं अभअं दिण्णं ।

१. यत्प्रथमं वनं प्रस्थितेनार्यपुत्रेण पुनः पुनर्याचितमपि ममानुप्रयाणं प्रतिषिद्धमिति कुपितया मया सभ्रूभङ्गमधिक्षिप्यान्तःपुरं गन्तुं संरम्भमुखरमेखलं प्रवृत्तमासीत् । तत्स्मारयति मामार्यपुत्रः । भवतु । एवं भणिष्यामि । नाथ, तव भुजदण्डमाश्रितया मयैतस्मिन्नरण्ये निर्भयं किं किमद्भुतं प्रेक्षितुं न शक्यते । येन राक्षसानां सकाशाज्जनस्थाननिवासिभ्य ऋषिभ्योऽभयं दत्तम् ।

---

अस्यामित्युक्तिप्रत्युक्तिकावचनप्रतिवचनरूपक्रिया तया । विडम्बिताः अनुकृताः ।

**नीलेति**॥ इह अत्र उद्बुद्धमुग्धाम्बुजां विकसितसुन्दरपद्मां गिरिनदीं सर्वतः गिरिनद्याः समन्ततः 'उभसर्वतसोः' इत्यादिना द्वितीया । नीलश्वेतपिशङ्गरक्तहरितच्छायाः कृष्णधवलकपिललोहितपालाशकान्तीः बिभ्रतीति तथोक्ताः धातवः 'सुवर्णरूप्यताम्राणि हरितालमनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्याः धातवो गिरिसम्भवाः' इत्युक्ताः । दृश्यन्ताम् । यस्यां गिरिनद्यां केलिकलहात् क्रीडाकलहात् उद्भ्राम्यतः अधिकं भ्रमणमाचरतः हंसकुलस्य हंससमूहस्य कूजितैः ध्वनिभिः । ननु हे चण्डि (यदा कदा वा) कोपने तव मणिमेखलायाः रत्नरशनायाः कलकलः कलकलध्वनिः ईषत् किञ्चित् अन्वीयते अनुस्रियते । शार्दू...॥ १८ ॥

**सवैलक्ष्यं** सविस्मयं सलज्जं वा । **अधिक्षिप्य** निन्दित्वा । संरम्भेण सम्भ्रमेण कोपेन वा । मुखरा शब्दायमाना मेखला रशना यस्मिन् कर्मणि तत् ।

**रामः**—(श्रुत्वा। दूरे दत्तदृष्टिः।)

व्याघ्राजिनधरः शूलव्यतिषिक्तेभमस्तकः।
कोविदाराटवीगर्भं कोऽयं विशति राक्षसः॥ १९॥

नेदं लक्ष्मणो जानाति।

(ततः प्रविशति लक्ष्मणः।)

**लक्ष्मणः**—कोऽयं कोविदारवनं प्रविशति राक्षसः। भवतु। तमेनं निग्रहीष्यामि। (इत्यायुधग्रहणं नाटयति।)

**सीता**—(अन्यतो दृष्ट्वा।) अज्जउत्त, ण खु एसा कोविदाराटवी किंदु कण्णिआरवणं। ण खु एसो रक्खसो। पेक्ख पेक्ख। दाढाकरालमुही तुंबीफलगुरुणो थणभारादो वि। समुण्णदं उम्मग्गणाहिअं जढरं दुव्वहं उव्वहंदी दुद्दंसरूवा का वि रक्खसी पविसदि।

**रामः**—क्व पश्यसि। अत्र किल मयोक्तम्।

**सीता**—(विलोक्य।) णं तुमं एव्व प्पविससि। ण खु रक्खसो।

**रामः**—(स्वगतम्।) कथं मां राक्षसं निर्दिशन्तीयं उपहसति। (दृष्ट्वा। प्रकाशम्।) आश्चर्यमाश्चर्यम्। पुनर्दर्शने राक्षसो मद्रूपः संवृत्तः।

---

१. आर्यपुत्र, न खल्वेषा कोविदाराटवी किं तु कर्णिकारवनं, न खल्वेष राक्षसः, पश्य पश्य। दंष्ट्राकरालमुखी तुम्बीफलगुरो स्तनभारादपि समुन्नतमुन्मग्ननाभिकं जठरं दुर्वहमुद्वहन्ती दुर्दर्शरूपा कापि राक्षसी प्रविशति।

२. ननु त्वमेव प्रविशसि। न खलु राक्षसः।

---

**व्याघ्रेति**॥ व्याघ्राजिनधरः व्याघ्रचर्मधरः शूले शूलायुधे व्यतिषिक्तः स्यूतः इभमस्तकः गजशिरः येन सः। राक्षसः कोविदाराटव्याः ताम्रपुष्पवनस्य गर्भे मध्ये विशति अयं कः॥ १९॥

**कर्णिकारः** आरग्वधवृक्षः। दंष्ट्राभिः बहिर्गतदशनैः करालं भीषणं मुखं यस्यास्सा। तुम्बीफलवत् अलाबूफलवत् गुरोः बृहतः। उन्मग्ना उद्गता नाभिः यस्मिंस्तत्। जठरं उदरं दुर्वहं वोढुमशक्यम्। द्रष्टुमशक्यं दुर्दर्शं रूपं यस्यास्सा।

**सीता**—(दृष्ट्वा । सविस्मयम् ।) [1]एसा वि कण्णिआरवणं पविट्ठा रक्खसी मह आकिदिं धारेदि । पेक्खीअदु अज्जउत्तेण ।

**रामः**—(दृष्ट्वा । साश्चर्यम् ।) किमेतयोरेवं रूपग्रहणे प्रयोजनम् ।

**सीता**—[2]ओदरिअ गिरिसिहरादो पेक्खह्म ।

**रामः**—मामैवम् । यदिह स्थितस्य जनस्य वस्तुजातं योजनमात्रेऽपि चाक्षुषं भवति ।

**लक्ष्मणः**—(पुनर्दृष्ट्वा सविस्मयम् ।) हन्त हन्त, निग्रहीतुकामस्य सायुधस्यापि ममेह समागमो विफलः संवृत्तः । यदयं राक्षसः क्वचिन्निलीनः । किं च । यदार्य एव प्रतिश्रुतराक्षसवधोऽस्यापि वधाय व्यापृत इति प्रतिभाति । तथा हि ।

करे धनुरदक्षिणे कलितहेमपट्टं वहन्
 परे कनकपुङ्खसङ्घटितकङ्कपत्त्रं शरम् ।
प्रसर्पति समर्पयन्नयमितस्ततो लोचने
 निलीनवपुषं क्वचिन्निशिचरं विचिन्वन्निव ॥ २०

१. एषापि कर्णिकारवनं प्रविष्टा राक्षसी ममाकृतिं धारयति । दृश्यतामार्यपुत्रेण ।

२. अवतीर्य गिरिशिखरात्पश्यावः ।

**निर्दिशन्ती** निरूपयन्ती । **अवतीर्य** अवरुह्य । **वस्तुजातं** पदार्थसमूहः । योजनमात्रे योजनप्रमाणदेशेऽपि । **चाक्षुषं** चक्षुषा गृह्यत इति चाक्षुषम् । **निलीनः** अन्तर्हितः । **प्रतिश्रुतः** प्रतिज्ञातः । **व्यापृतः** प्रवृत्तः । **कर इति** ॥ अदक्षिणे वामे करे कलितहेमपट्टं रचितस्वर्णपट्टं धनुः वहन् धारयन् परे दक्षिणे करे कनकपुङ्खेन सुवर्णमय ( काण्ड ) मूलेन सङ्घटितं संयोजितं कङ्कस्य लोहपृष्ठपक्षिणः पत्त्रं गरुत् यस्मिंस्तम् । शरं बाणं वहन् । इतस्ततः लोचने नयने समर्पयन् प्रेरयन् अयं रामः क्वचित् कुत्रापि निलीनवपुषं तिरोहितशरीरं निशिचरं राक्षसं विचिन्वन् मार्गयन्निव प्रसर्पति गच्छति । उत्प्रेक्षालङ्कारः । पृथ्वी वृत्तम् ॥ २० ॥

( सविमर्शम् । ) क्व पुनरार्या जानकी । नन्वेताभ्यामाधिरूढा गिरेरूर्ध्वभूमिरार्याभ्याम् । एक एव कथमार्योऽवतीर्णः । ( ऊर्ध्वमवलोक्य । सविस्मयम् । )

अधिवसति गिरेरधित्यकायां
वकुलतलं नववारिदोपमश्रीः ।
कथमिदमचिरद्युतिप्रभाङ्ग्या
क्षितिसुतया सममार्यया यमार्यः ॥ २१ ॥

तदनेन मायाविना निशाचरेण गृहीतार्यरूपेण भवितव्यम् । लतावलयनिरन्तरेण वनपथान्तरेण तिरोहितोऽनुसरन् पश्यामि ।

( इति परिक्रामति । )

( ततः प्रविशति रामवेषधरो विराधः । )

**विराधः**—( दृष्ट्वा । ) कथमासन्नां कर्णिकारवनाच्चम्पकवाटिकामागच्छति जानकी । ( उपसृत्य पश्यति । )

( ततः प्रविशति सीतारूपधारिणी शूर्पणखा । )

**शूर्पणखा**—अहं[1] एत्थ एव्व वणे चंपअकुसुमाइ ओच्चिणिस्सं, रहुउमारो वि एत्थ आअमिस्सदि ।

विराधः—( दृष्ट्वा । स्वगतम् । ) एषा निरतिशयरूपलावण्या जानकी । ( साश्चर्यम् । ) अपूर्वा खल्वियं वेधसो विरचना । अथ वा ।

१. अहमत्रैव वने चम्पककुसुमान्यपचेष्यामि । रघुकुमारोऽप्यत्रागमिष्यति ।

---

**अधीति** ॥ नववारिदोपमश्रीः नूतनमेघतुल्यकान्तिः अयं आर्यः रामः । अचिरद्युतेः तडितः प्रभेव प्रभा येषान्तानि अङ्गानि यस्यास्तया । आर्यया क्षितिसुतया समं सीतया सह कथं गिरेः अधित्यकायां ऊर्ध्वभूमौ इदं वकुलतलं अधिवसति वकुलवृक्षस्य तलेव साति । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । उपमा निदर्शना चालङ्कारौ ॥ पुष्पिताग्रा वृत्तम् ॥ २१ ॥

**लतेति** ॥ लतानां वलयेन मण्डलेन निरन्तरेण निरवकाशेन वनपथस्य अरण्यमार्गस्य अन्तरेण तिरोहितः अन्तर्हितः । **वेधसः** ब्रह्मणः। विरचना सृष्टिः।

ऊर्ध्वं नीरदवृन्दमैन्दवमिदं बिम्बं त्वधो निर्मितं
व्योम्नः पल्वलचित्रितस्य निहितौ शैलावुपर्युन्नतौ ।
किञ्चाधः पुलिनोच्चयस्य कदलीकाण्डाववाग्रोपितौ
तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः ॥ २२ ॥

तदेनां गृहीत्वा कथमपि गमिष्यामि । यावदिह नोपसर्पति रामो लक्ष्मणो वा ।

[1]शूर्पणखा—(दृष्ट्वा ।) कहं एसो मह हिअअचोरो इदो अहिमुहो एव्व अहिवट्टइ । जो एसो ।

सुभअजुवसहस्ससिट्ठिजादो
विहिकरकोसलगोअरो विपाओ

१. कथमेषो मम हृदयचोर इतोऽभिमुख एवाभिवर्तते । य एषः ।
सुभगयुवसहस्रसृष्टिजातो
विधिकरकौशलगोचरो विपाकः ।

**ऊर्ध्वमिति** ॥ ऊर्ध्वं उपरि नीरदवृन्दं निर्मितं मेघसमूहः (कचचयः) कृतः । अधः नीरदवृन्दादधस्तात् इदं ऐन्दवं बिम्बं चन्द्रमण्डलं (मुखबिम्बं) निर्मितम् । पल्वलेन अल्पसरसा (नाभ्या) चित्रितस्य अलङ्कृतस्य व्योम्नः आकाशस्य (अवलग्नस्य) उपरि उन्नतौ उत्तुङ्गौ शैलौ गिरी (स्तनौ) निहितौ निक्षिप्तौ । किञ्च पुलिनोच्चयस्य सैकतसमूहस्य (जघनदेशस्य) अधः अधस्तात् कदलीकाण्डौ रम्भास्तम्भौ (ऊरुस्तम्भौ) अवाक् अधोमुखौ रोपितौ प्ररोपितौ । तत् ततः ब्रह्मसृष्टिविलक्षणत्वात् चतुरस्य विलक्षणसामर्थ्यस्य पुष्पधनुषः मन्मथस्य अयं अन्यादृशः विलक्षणः सर्गः सृष्टिरिति मन्ये । निगीर्याध्यवसायाद्रूपकातिशयोक्तिः । शार्दू...॥ २२ ॥

य एषः रामः सुभगानां सुन्दराणां यूनां तरुणानां सहस्रस्य सृष्ट्या निर्माणेन जातः निरूढः विधेः धातुः करकौशलगोचरः हस्तनैपुणविषयः विपाकः परि-

अहव सअललोअलोअणाणं
गहिदतणू विअ पुव्वपुण्णरासी ॥ २३ ॥

ता उवाएण वणं एणं गण्हीअ गमिस्सं । ( इति पश्यन्ती पुष्पाण्यप-
चिनोति । )

**विराधः**—( उपसृत्य । ) अयि जनकनन्दिनि,

यदि भवति तेऽभिलाषश्चम्पककुसुमेषु चम्पकनिभाङ्गि ।
विनियोजय पुरतस्ते विहारदासं श्रमेणालम् ॥ २४ ॥

**शूर्पणखा**—( सहर्षम् । स्वगतम् । ) एसो मं जाणइं एव्व मण्णइ।
हंद हंद ।

कवलिअमिणालकंदलकलहंसगहीरमंसलसिणिद्धो ।
सवणाइ मह सुहाइं सिंचइ एदस्स कंठसुरो ॥ २५ ॥

अथवा सकललोकलोचनानां
गृहीततनुरिव पूर्वपुण्यराशिः ॥ २३ ॥

तस्मादुपायेन वनमेनं गृहीत्वा गमिष्यामि ।

१. एषः मां जानकीमेव मन्यते । हन्त हन्त ।
कवलितमृणालकन्दलकलहंसगभीरमांसलस्निग्धः ।
श्रवणे मम सुधाभिः सिञ्चत्येतस्य कण्ठस्वरः ॥ २५ ॥

णाम: निष्पत्तिः । अथवा गृहीततनुः मूर्तिमान् सकललोकलोचनानां पूर्वः पुण्यानां राशिः समूह इव भातीति शेषः । उत्प्रेक्षालङ्कारः । पुष्पिताग्रा वृत्तम् ॥ २३ ॥

**यदीति** ॥ चम्पकनिभाङ्गि चम्पकपुष्पसमानाङ्गि ते तव चम्पककुसुमेषु अभिलाषः भवति यदि ते पुरतः स्थितं विहारदासं क्रीडादासं मां विनियोजय पुष्पाण्याहर्तुं प्रेरय । श्रमेण अलं स्वयं पुष्पापचयप्रयासम्माकुर्वित्यर्थः ॥ २४ ॥

कवलितमृणालकन्दलस्य भक्षितबिसांकुरस्य कलहंसस्येव गम्भीरः अगाधः मांसलः घनीभूतः स्निग्धः मधुरः एतस्य कण्ठस्वरः मम श्रवणे श्रोत्रे सुधाभिः अमृतैः सिञ्चति अभिषिञ्चतीव । गम्योत्प्रेक्षा उपमा च ॥ २५ ॥

होदु एदम । इमं णिस्संकं ओहरिदुं एव्वं भणिस्सं । (प्रकाशम् ।) अज्जउत्त, इदो वि एत्थ विदूरे पदेसे पसवचावप्पदावकंदलविडंबणाइ विअसिदाइ चंपअकुसुमाइ । ता तत्थ गदुअ ओचिणम्ह ।

(इति दूरं व्रजति ।)

**विराधः**—(स्वगतम् ।)

सहजप्रणयार्द्रमार्यपुत्रेत्यमृतस्यन्दि वचो निशम्य तन्व्याः ।
कुसुमास्त्रकिरातवागुरायां निपतत्येणकिशोरवन्मनो मे ॥ २६ ॥

भवतु । प्रदेशान्तरगमनमेनस्याः निःशङ्कमपहाराय भविष्यति । (प्रकाशम् ।) यथा रोचते कल्याण्यै । (इत्यनुव्रजति ।)

**लक्ष्मणः**—कथमत्र चम्पकवनाभ्यन्तरे आर्या जानकी व्याहरति । भवतु । पश्यामि । (इति कतिचित्पदानि गत्वा ।) कथमेतत् ।

नलिनीदलसंपुटं वहन्ती
ननु हर्तुं कुसुमानि चम्पकानाम् ।
वनमारुतकम्पितांशुकान्ता
व्रजतीतो वसुधासुतेयमार्या ॥ २७ ॥

---

भवत्वेतत् । इमं निरशङ्कमपहर्तुमेवं भणिष्यामि । आर्यपुत्र, इतोऽप्यत्र विदूरे प्रदेशे प्रसवचापप्रतापकन्दलविडम्बनानि विकसितानि चम्पककुसुमानि । तदत्र गत्वा पचिनुमः ।

---

**प्रसवेति** ॥ प्रसवचापस्य मन्मथस्य प्रतापस्य तेजसः कन्दलानां अंकुराणां विडम्बनानि अनुकारीणि । **सहजेति** ॥ तन्व्याः कृशाङ्ग्याम्सीतायाः सहजेन अकृत्रिमेण प्रणयेन प्रेम्णा आर्द्रं सिक्तं अमृतस्यन्दि सुधास्रावि आर्यपुत्रेति वचः निशम्य श्रुत्वा मे मनः एणकिशोरवत् मृगशिशुवत् कुसुमास्त्रः मन्मथ एव किरातः शबरः तस्य वागुरायां जाले निपतति । रूपकमुपमा च । वसन्तमालिका वृत्तम् ॥

**कल्याण्यै** भद्रवत्यै तुभ्यम् । **नलिनीति** । इतः अत्र इयं आर्या वसुधासुता सीता वनमारुतेन कम्पितं चलितं अंशुकान्तं वस्त्राञ्चलं यस्यास्तथाभूता । नलिनीदलसम्पुटं पद्मिनीपत्रपोटकं वहन्ती च सती । चम्पकानां कुसुमानि हर्तुं ननु अपचेतुमेव व्रजति गच्छति । वसन्तमालिका वृत्तम् ॥ २७ ॥

तन्नूनमनयापि कयाचिद्राक्षस्या भवितव्यम् । (इति पश्यन् स्थितः ।)

**सीता**—अज्जउत्त, पेक्ख पेक्ख । एसो मह देवरो अंसणिबद्ध-णिसंगो गिहीदकोदण्डो करग्गकंपिअमंडलग्गो इमं रक्खसं तुमं त्ति जाणिअ अणुसरइ ।

**रामः**—भद्रे, निगूढ एवायमनुसरति । अतो नूनं राक्षस इति जानाति ।

**विराधः**—(स्वगतम् ।) इयं किल मम पुरतश्चरन्ती जानकी ।

चरणकमलचञ्चन्नूपुरारावमिश्रै-
र्घनजघनगताया मेखलाया निनादैः ।
किमपि किमपि चित्ते कुर्वती मामिदानीं
परवशयति गाढं पक्ष्मलाक्षी किमन्यत् ॥ २८ ॥

(प्रकाशम् ।) अयि सुन्दरि, कियद्दूरमाक्रम्यते वनान्तः ।

**शूर्पणखा**—(स्वगतम् ।) जत्थ विजणे सक्कं मए तुमं गण्हिअ समुप्पडिदुं । (प्रकाशम् ।) अज्जउत्त, पुरदो एव्व सो पदेसो । ता क्खणमत्तं मरिसिअदु ।

१. आर्यपुत्र, पश्य पश्य । एष मम देवरोंऽसनिबद्धनिषङ्गो गृहीतकोदण्डः कराग्रकम्पितमण्डलाग्र इमं राक्षसं त्वमिति ज्ञात्वानुसरति ।

२. यत्र विजने शक्यं मया त्वां गृहीत्वा समुत्पतितुम् । आर्यपुत्र, पुरत एव स प्रदेशः । तस्मात्क्षणमात्रं मृष्यताम् ।

---

**असनिबद्धनिषङ्गः** भुजशिखरनद्धतूणीरः । **मण्डलाग्रः** खड्गः । **चरणेति** ॥ चरणकमलयोः पादपद्मयोः चञ्चतोः चञ्चलयोः नूपुरयोः मञ्जीरयोः आरावेण शब्देन मिश्रैः युक्तैः घनं पृथुलं जघनं नितम्बं गतायाः मेखलायाः रशनायाः निनादैः चित्ते मम मनसि यद्वा स्वचित्ते किमपि किमपि कुर्वती कलयन्ती चिन्तयन्ती वा पक्ष्मलाक्षी रम्यपक्ष्मयुक्तनयना सीता इदानीं (अन्यत् वक्ष्यमाणादन्यत् किम् ) मां परवशयति परवशं करोति । मालिनी वृत्तम् ॥ २८ ॥

**रामः**—कथं राक्षसी राक्षसं दूरतो नयन्तीव दृश्यते।

**सीता**—लॅक्खणो वि तदो तदो एव्व गच्छइ।

**विराधः**—(स्वगतम्।) इयं खलु।

आलपति पिकवधूरिव पश्यति हरिणीव चरति हंसीव।
स्फुरति तटिल्लतिकेव स्पन्दति तुहिनांशुलेखेव॥ २९॥

तत्कथमेनां ग्रहीष्यामि। सम्प्राप्ता खलु दूरमेव रामावसथात्। (प्रकाशम्।)

अपचिनु कुसुमानि चम्पकाना-
मिह विकचानि मया सहानताङ्गि।
व्रजसि कियदिदं वने यतोऽयं
भवति निशाचरसञ्चरप्रदेशः॥ ३०॥

**लक्ष्मणः**—कथमेनां सीतेति जानन् राक्षसोऽयमार्यवेषेण ग्रहीतुमिच्छति।

**शूर्पणखा**—(स्वगतम्।) कॅा उण अहं। णं णिसाअरी एव्व होह्मि। (प्रकाशम्।) जं तुह्मेहिं णिसाअराणं वहो पडिण्णादो। ता तुह पुरदो णत्थि मे भीई।

१. लक्ष्मणोऽपि ततस्तत एव गच्छति।

२. का पुनरहम्। ननु निशाचर्येव भवामि। यद्युष्माभिर्निशाचराणां वधः प्रतिज्ञातः। तस्मात्तव पुरतो नास्ति मे भीतिः।

**मृष्यतां** क्षम्यताम्। **आलपतीति**॥ इयं पिकवधूः कोकिलस्त्रीव आलपति भाषते हरिणी मृगीव पश्यति हंसीव चरति गच्छति। तटिल्लतिका विद्युल्लतेव स्फुरति तेजस्विनी विद्योतते तथापि तुहिनांशुलेखा चन्द्रकलेव स्पन्दति नयनसौम्या स्फुरति। मालोपमा॥ २९॥

रामावसथात् रामगृहात्। **अपेति**॥ हे आनताङ्गि विनम्रदेहे सीते मया सह इह विकचानि विकसितानि चम्पकानां कुसुमानि अपचिनु विचिनु। इदं वने अस्मिन्वने कियद्दूरं व्रजसि गच्छसि। यतः अयं निशाचराणां सञ्चरप्रदेशः सञ्चारदेशः भवति। पुष्पिताग्रा वृत्तम्॥ ३०॥

**लक्ष्मणः**—(स्वगतम् ।) कथमियं निशाचरी आर्या जानकीव आर्यमनुगन्तुं सुसंगतमालपति । किमस्या एवं रूपग्रहणे प्रयोजनम् । अथवा अभिरूपमार्यमनुरक्ता, विप्रलभ्य विहरिष्यति ।

**विराधः**—(स्वगतम् ।) न खल्वेवं मया प्रतिज्ञातम् । किं तु । अयि मुग्धे ।

तस्य प्राणानिवादाय त्वां राघवशिशोरहम् ।
गमिष्यामि प्रतिज्ञातं निधनं येन रक्षसाम् ॥ ३१ ॥

(प्रकाशम् ।)

वद का न्यूनता तत्र वसुधागर्भसंभवे ।
न हन्यां किं खरं सैन्यैः समं तमृषिकण्टकम् ॥ ३२ ॥

**लक्ष्मणः**—(सस्मितम् ।) कथमार्य इवालपति राक्षसः ।

**शूर्पणखा**—(स्वगतम् । सावेगम् ।) एसो मह भादरं तह करिस्सदि त्ति वेवइ मे हिअअम् । (प्रकाशम् ।) रावणादो वि अहिअं बलवंतो खु सो खरो । कहं तस्स पडिण्णादो तुए णिस्संसअं वहो ।

**लक्ष्मणः**—परमार्थबुद्ध्या आर्यस्य हृदयं पृच्छति । सत्यमियं राक्षस्येव ।

१. एष मम भ्रातरं तथा करिष्यतीति वेपते मे हृदयम् । रावणादप्यधिकं बलवान् खलु स खरः । कथं तस्य प्रतिज्ञातस्त्वया निःसंशयं वधः ।

---

**सुसंगतं** सुसम्बद्धम् । **अभिरूपं** सुन्दरं विप्रलभ्य वञ्चयित्वा विहरिष्यति क्रीडिष्यति । **तस्येति** ॥ येन रक्षसां निधनं मरणं प्रतिज्ञातं तस्य राघवशिशोः प्राणानिव त्वां अहं आदाय गमिष्यामि ॥ ३१ ॥

**वदेति** ॥ हे वसुधागर्भसम्भवे भूमध्यादुद्भूते तत्र राक्षसवधप्रतिज्ञायां न्यूनता निन्द्यता का वद । ऋषीणां कण्टकं शत्रुं तं खरं सैन्यैस्समं न हन्यां किं न संहरेयं किम् ॥ ३२ ॥

**वेपते** कम्पते । **विहरन्तीं** क्रीडन्तीम् । **निग्रहीतुं** दण्डयितुं प्रभवति

**सीता**—एंदे परप्परं आलवंता विअ दिस्संदि ।

**रामः**—अथ किम् ।

**विराधः**—(स्वगतम् ।) यन्मयायं राघवः प्रष्टव्यस्तदेव मामियं पृच्छति । (प्रकाशम् ।) किं न जानासि जामदग्न्यविजयिनो विक्रमम् ।

**लक्ष्मणः**—उपपन्नमिदं प्रतिवचनम् ।

**शूर्पणखा**—(स्वगतम् ।) अदो एव्व तुए सह विहरंतिं मं ण को वि णिअजणो णिग्गहिदुं पहवदि त्ति मण्णे । (प्रकाशम् ।) जुज्जइ जुज्जइ ।

(इति पुष्पापचयं नाटयति ।)

**विराधः**—(स्वगतम् ।) अस्याः खलु ।

उत्तानिताननसरोजमुदस्तहस्त-
मुन्नम्रितस्तनमृजूकृतमध्यभागम् ।
विस्रंसिनीवि वसुधानिहिताग्रपादं
चित्ते ममार्पितमिव स्थितमुत्पलाक्ष्याः ॥ ३३ ॥

(प्रकाशम् ।) अयि प्रेयसि, विरम विरम पुष्पापचयसाहसात् । यदनेन नितरां परिश्राम्यसि । (सस्पृहम् ।) अथवा ।

१. एतौ परस्परमालपन्ताविव दृश्येते ।

२ अत एव त्वया सह विहरन्तीं मां न कोऽपि निजजनो निग्रहीतुं प्रभवतीति मन्ये । युज्यते युज्यते ।

शक्नोति । **उत्तानितेति** ॥ उत्तानिताननसरोज उन्मुखीकृतमुखपद्मम् । उदस्तहस्तं उत्क्षिप्तकरं उन्नम्रितस्तनं उत्तुङ्गीकृतकुचं ऋजुकृतमध्यभागं अकुटिलीकृतावलग्नदेशम् । विस्रंसिनीवि विस्रंसनशीलवस्त्रग्रन्थि वसुधायां भूमौ निहितौ निक्षिप्तौ अग्रपादौ यस्मिंस्तत् । उत्पलाक्ष्याः इन्दीवरनयनायाः सीतायाः स्थितं स्थितिः मम चित्ते मनसि अर्पितं न्यस्तमिव । उत्प्रेक्षा । वसन्ततिलका वृत्तम् ॥ ३३ ॥

**साहसं** 'साहसन्तु दमेदुष्करकर्मणि । अविमृश्यकृतौ धार्ष्ट्ये' इति हैमः ।

पुनरपि तव भूयादेष पुष्पापचायः
  कलयति ननु लक्ष्मीं कामपि त्वन्मुखेन्दौ ।
मृगमदरचितो यत्कुङ्कुमाङ्के कपोले
  श्रमजलकणिकाभिर्लुप्यते पत्रलेखः ॥ ३४ ॥

**शूर्पणखा**—(सलज्जस्मितम् । स्वगतम् ।) एदस्स रहुकुमारस्स वअणं णिओजेइ मं कीलिदुं । (प्रकाशम् ।) माणद, अहं परिस्संता एव्व अहिलासो हि बलवंतो मह पुप्फापहरणे ।

**लक्ष्मणः**—

आर्यां सीतां विदन्नेव राक्षसो वक्ति राक्षसीम् ।
आर्यबुद्ध्यैनमप्येषा प्रतिवक्ति यथेप्सितम् ॥ ३५ ॥

**विराधः**—यद्येवं मयैवापचीयन्ते कुसुमानि । (इति कुसुमापचयं नाटयति ।) अयि विदेहराजतनये ।

यत्नेन स्वयमानमय्य विटपं यान्यग्रहीषं प्रिये
  धम्मिल्ले कुरु चम्पकस्य कुसुमान्येतानि शातोदरि ।

१. एतस्य रघुकुमारस्य वचनं नियोजयति मां क्रीडितुम् । मानद, अहं परिश्रान्तैव । अभिलाषो हि बलवान्मम पुष्पापहरणे ।

**सस्पृहं** सौत्सुक्यम् । **पुनरिति** ॥ हे प्रिये तव एषः पुष्पापचयः कुसुमापचयः पुनरपि भूयोपि भूयात् एष पुष्पापचायः तव मुखेन्दौ मुखचन्द्रे कामपि लक्ष्मीं शोभां कलयति ननु करोति किल । यत् यतः कुङ्कुमाङ्के कुङ्कुमचिह्निते कपोले गण्डे मृगमदरचितः कस्तूरीकृतः पत्रलेखः मकरिकादिरेखाविन्यासरूपतिलकविशेषः श्रमजलकणिकाभिः स्वेदकणैः लुप्यते अपनीयते । मालिनी वृत्तम् ॥ ३४ ॥

**मानद** गौरवदायक, **आर्यामिति** ॥ विदन् जानन् । वक्ति वदति । प्रतिवक्ति प्रतिवदति । आप्तुमिष्टमनतिक्रम्य यथेप्सितम् ॥ ३५ ॥

**यत्नेनेति** ॥ शातोदरि कृशोदरि हे प्रिये यत्नेन प्रयत्नेन स्वयं विटपं शाखां आनमय्य आनतं कृत्वा यानि अग्रहीषं ग्रहीतवानभूवं एतानि चम्पकस्य

मा विस्रंसय विभ्रमेण कबरीभारं चकोरेक्षणे
मा पुष्पाणि च निष्पतन्तु परितो विस्रंसमानादितः ॥ ३६

**शूर्पणखा**—(सहर्षानुरागम् । स्वगतम् ।) [1]एसो मणोरहवल्लहो मं जाणइत्ति करिअ पडिसेहंतो विअ पत्थेदि जह अहिलसिदवावारं । कहं उण इमं गण्हिअ कीलिस्सं । (प्रकाशम् ।) अज्जउत्त, इमस्स समुण्णदस्स चंपअतरुणो अग्गसाहावलंबिदाइ कुसुमाइ सुकुमाराइ । मह चरमंगं आरुहिअ गण्हिअदु भवं । जेसु मे अहिओ अहिलासो ।

**लक्ष्मणः**—(विहस्य ।) आर्ये इति मत्वा राक्षस्येनं ग्रहीतुमिच्छति ।

**विराधः**—(स्वगतम् ।) अयं ममावकाशलाभः । (प्रकाशम् ।)

चरमाङ्गं ममारुह्य चारुचन्द्रमुखि त्वया ।
चम्पकान्यपचेयानि चञ्चलाक्षि यथेप्सितम् ॥ ३७ ॥

(इति गात्रं न्यञ्चयति ।)

**लक्ष्मणः**—आर्येति मत्वा राक्षसश्चैनां ग्रहीतुमिच्छति । अहो महदिदं कौतुकस्थानम् । तदुपसर्पन् उपरि द्रक्ष्यामि । (इति परिक्रामति ।)

---

१. एष मनोरथवल्लभो मां जानकीति कृत्वा प्रतिषेधन्निव प्रार्थयति यथाभिलषितव्यापारम् । कथं पुनरिमं गृहीत्वा गमिष्यामि । आर्यपुत्र, अस्य समुन्नतस्य चम्पकतरोरग्रशाखावलम्बितानि कुसुमानि सुकुमाराणि । मम चरमाङ्गमारुह्य गृह्णातु भवान् । येषु मेऽधिकोऽभिलाषः ।

---

कुसुमानि धम्मिल्ले संयते कचे कुरु । हे चकोरेक्षणे चकोरनेत्रि कबरीभारं वेणीभरं विभ्रमेण विलासेन सम्भ्रमेण वा मा विस्रंसय विस्रस्तम्मा कुरु । विस्रंसमानात् विस्रंसनं गच्छतः इतः कबरीभारात् पुष्पाणि परितः समन्ततः मा निष्पतन्तु च॥ शार्दू...॥ ३६ ॥

**चरमाङ्गं** पश्चिमावयवम् । **अवकाशः** अन्तरं एतदपहरणस्य समयः ।

**चरमेति** ॥ चारुचन्द्रमुखि रम्येन्दुवदने चञ्चलाक्षि तरलनयने हे प्रिये मम चरमाङ्गं आरुह्य त्वया यथेप्सितं चम्पकानि चम्पकपुष्पाणि अपचेयानि आहरणीयानि ॥ ३७ ॥

शूर्पणखा—(स्वगतम् ।) होदु । को दोसो । एदस्स चरमङ्गं आरुहिअ पादेहि आवेट्ठिअगत्तं एदं गण्हिअ गगणमग्गेण गमिस्सं ।

(इत्यारोहति ।)

सीता—अज्जउत्त, को एसो । दूरदो उभअपस्सविलंबंतवित्थिण्णमेहरासी पव्वदो विअ उवरि आअच्छइ ।

रामः—(दृष्ट्वा ।) जानकि, सम्पातिमग्रजमभिवाद्य तातजटायुः समापतति ।

सीता—अज्जउत्त, इदो पेक्ख पेक्ख । एसा रक्खसी इमं रक्खसं आरुहिअ चिट्ठइ ।

रामः—(साश्चर्यम् ।) कथमेतत् । अयि जानकि, पश्य पश्य ।

मद्रूपो रजनीचरोऽयमहह त्वद्रूपिणीं राक्षसीं
बिभ्राणश्चरमाङ्गके दिवि जवादुच्चैः समुज्जृम्भते ।
एषोऽपि त्वरमाणपक्षपवनव्याधूतजीमूतया
गत्या तातजटायुरस्य पुरतो रुन्धन्निवासीदति ॥ ३८ ॥

१. भवतु, को दोषः । एतस्य चरमाङ्गमारुह्य पादाभ्यामावेष्टितगात्रमेतं गृहीत्वा गगनमार्गेण गमिष्यामि ।

२. आर्यपुत्र, क एषः । दूरत उभयपार्श्वविलम्बमानविस्तीर्णमेघराशिः पर्वत इवोपर्यागच्छति ।

३. आर्यपुत्र, इतः पश्य पश्य । एषा राक्षसी इमं राक्षसमारुह्य तिष्ठति ।

---

**न्यञ्चयति** नीचं खर्वं अवनतं अधोमुखं वा करोति । **आवेष्टित** आवृतम् । **मद्रिति** ॥ मम रूपमिव रूपं यस्य सः अयं रजनीचरः त्वद्रूपिणीं राक्षसीं चरमाङ्गके जघन्यावयवे बिभ्राणः धरन् सन् जवात् वेगात् दिवि आकाशे **उच्चैः** उपरि समुज्जृम्भते समुद्गच्छति अहह चित्रम् । एषः तातजटायुः तातमिवभूतः जटायुरपि त्वरमाणयोः गमनत्वरामधिगच्छतोः पक्षयोः गरुतोः पवनेन वातेन व्याधूतजीमूतया कम्पितमेघया गत्या गमनेन अस्य राक्षसस्य पुरतः रुन्धन् निवारयन्निव आसीदति समीपमागच्छति । शार्दू...॥ ३८ ॥

**सीता**—( विहस्य । ) [1]अच्चरिअं अच्चरिअं । इदो कहं हविस्सादि त्ति ण जाणीअदि ।

**लक्ष्मणः**—कथं जानकीरूपधरां राक्षसीमार्यरूपधरो राक्षसो गृहीत्वा समुत्पतित एव । ( ऊर्ध्वमवलोक्य । ) कथमत्र तातजटायुः सन्निपतति । किं च । कथमेनं ब्रवीति—

"कस्त्वं रामस्य रूपेण हृत्वा सीतां प्रधावसि ।
तिष्ठ तिष्ठ पुरस्तन्मे जीवितं दुर्लभं तव ॥" ३९ ॥ इति ।

सत्यमेष राक्षसीं परमार्थतः सीतां मन्यते ।

**सीता**—[2]एदे अज्जजडाउं दिट्ठूण सज्झसेण झत्ति गगणादो भूदले एव्व णिपडिआ होंदि ।

**रामः**—वत्सलक्ष्मणोऽप्ययमेतयोरग्रे करविधूतखड्गः समुत्सर्पति ।

**शूर्पणखा**—( सविषादम् । स्वगतम् । ) [3]अण्णो एव्व एसो रहुउमाररूवेण मं मोहेदि । अण्णहा कहं ईरिसस्स मानुसस्स ईरिसो उप्पडनवेओ हवे । ( प्रकाशम् । ) को तुमं मं गण्हिअ उप्पाडिदो ।

**विराधः**—( स्वगतम् । ) कथमसौ सीतापहारस्य जरठः श्यैनेयहतकः प्रत्यूहः संवृत्तः । अथवा । नेयं सीता । अन्यथा कथमनया समुत्पतितुमिच्छन्नहमावेष्टमानपादयुगलया गगनतलं जवेन नीतः स्याम् । ( प्रकाशम् । ) का त्वं मां गृहीत्वा पादाभ्यामुत्थितासि ।

१. आश्चर्यमाश्चर्यम् । इतः कथं भविष्यतीति न ज्ञायते ।

२. एतावार्यजटायुषं दृष्ट्वा साध्वसेन झटिति गगनाद्भूतल एव निपतितौ भवतः।

३. अन्य एव सः रघुकुमाररूपेण मां मोहयति । अन्यथा कथमीदृशस्य मानुषस्येदृश उत्पतनवेगो भवेत् । कस्त्वं मां गृहीत्वोत्पतितः ।

**सन्निपतति** सङ्गच्छते । **क इति** ॥ प्रधावसि पलायसे ॥ ३९ ॥

**साध्वसेन** भीत्या । झटिति शीघ्रम् । **जरठः** वृद्धः । श्यैनेयः श्येनीपुत्रः हतकः हत इव हतकः लक्षणया अपशद इत्यर्थः । आवेष्टमानं मद्गात्रे दृढ व्याति-

**लक्ष्मणः**—( उपसृत्य । ) उभावपि युवां राक्षसो राक्षसी च । परस्परं वञ्चितौ स्थः ।

**शूर्पणखा**—( सानुस्मरणम् । ) कहं तुमं विराहो ।

**विराधः**—( विचिन्त्य । ) कथं त्वं शूर्पणखा ।

**लक्ष्मणः**—दुरात्मन् परदारचोर विराध, हतोऽसि ।

( इति विराधं हस्तेन गृह्णाति । )

**विराधः**—( सरोषम् । ) मुञ्च मुञ्च ।

( इति हस्तमाच्छिद्य स्वेन रूपेण स्थितः शूलं भ्रमयति । )

**शूर्पणखा**—( स्वेन रूपेण प्रविश्य । सावेगम् । ) अहो पमादो पमादो । एसो विराहो एक्कदो लक्खणेण अवरदो गिद्धराएण वि अहिजुत्तो वट्टइ ।

( इति क्रोशति । )

( प्रविश्य जटायुः । )

**जटायुः**—( स्वगतम् । ) नन्वेषा शूर्पणखा । या जानकीरूपमवलम्ब्य स्थिता । ( प्रकाशम् । ) वत्स लक्ष्मण, न मुञ्चैनमृषिकण्टकं विराधम् ।

**सीता**—कहं एसा रक्खसी पच्चापण्णणिअरूवा होदि । एसो वि रक्खसो पच्चापण्णणिअरूवो वच्छतादेहिं लक्खणजडाऊहिं संणिपडिदेहिं अहिजुत्तो ।

---

१. कथं त्वं विराधः ।

२. अहो प्रमादः प्रमादः । एष विराध एकतः लक्ष्मणेन, अपरतः गृध्रराजेनाप्यभिमुक्तो वर्तते ।

३. कथमेषा राक्षसी प्रत्यापन्ननिजरूपा भवति । एषोऽपि राक्षसः प्रत्यापन्ननिजरूपो वत्सताताभ्यां लक्ष्मणजटायुभ्यां सन्निपतिताभ्यामभियुक्तः ।

---

षजत् पादयोर्युगलं द्वयं यस्यास्तया । **आच्छिद्य** मोचयित्वा । **प्रमादः** अविमृष्टकृत्यम् । अहो कष्टम् । **अभियुक्तः** रुद्धः । **प्रत्यापन्नं** गृहीतम् । **सन्निप-**

**रामः**—देवि दिष्ट्या वर्धामहे यतः ।

द्वैधीकृत्य यदस्य हस्ततुलितं शूलं शितेनेषुणा
खड्गेनोज्ज्वलकान्तिना कठिनयोश्छित्वा भुजावंसयोः ।
किं चैनं विनिपात्य कुञ्जरमिव क्वाप्येष गर्तान्तरे
सौमित्रिः पिदधाति पादपलतामृत्पिण्डलोष्टोपलैः ॥ ४० ॥

**सीता**—पिअं णो पिअं णो ।

**शूर्पणखा**—( सशोकावेगम् । ) हा विराह, हा खरस्स मे भादुणो पिअसह, खरवअणेण रहुउमारवहत्थं आअदो वि तुमं मिएण विअ सद्दूलो मारिदो होसि लक्खणेण । मए वि तेण दसग्गीवेण णिउत्ताए ण जाणई ओहरिदा । एसो रहुउमारो अहिलसिदो वि जाणईरूवं उव्वहंदीए चोरिअ कीलाए हेमऊडसिहरं ण प्पाविदो । किंदु केवलं तुह णिहणं दिट्ठूण बाहासारेहिं अत्ताणं सिंचंदीए लज्जदहिअआए रोअणं एव्व सरणं करीअदि ।

( इति रोदिति । )

---

१. प्रियं नः प्रियं नः ।

२. हा विराध, हा खरस्य मे भ्रातुः प्रियसख खरवचनेन रघुकुमारवधार्थमागतोऽपि त्वं मृगेणेव शार्दूलः मारितो भवसि लक्ष्मणेन । मयापि तेन दशग्रीवेण नियुक्तया न जानक्यपहृता । एष रघुकुमारोऽभिलषितोऽपि जानकीरूपमुद्वहन्त्या चौर्यक्रीडायै हेमकूटशिखरं न प्रापितः । किं तु केवलं तव निधनं दृष्ट्वा बाष्पासारैरात्मानं सिञ्चन्त्या लज्जमानहृदयया रोदनमेव शरणं क्रियते ।

तिताभ्यां सङ्गताभ्याम् । **द्वैधीति** ॥ यत् यतः एषः सौमित्रिः लक्ष्मणः अस्य विराधस्य हस्ततुलितं करप्रेरितं शूलं शितेन तीक्ष्णेन इषुणा बाणेन द्वैधीकृत्य द्विधा कृत्वा खण्डयित्वेत्यर्थः उज्ज्वलकान्तिना दीप्तप्रभेण खड्गेन असिना अस्य भुजौ कठिनयोः कर्कशयोः अंसयोः बाहुशिखरयोः च्छित्वा किञ्च एनं विराधं क्वापि गर्तान्तरे अवटमध्ये कुञ्जरं गजमिव विनिपात्य पातयित्वा पादपैः तरुभिः लताभिः मृत्पिण्डैः लोष्टैः लेष्टुभिः उपलैः शिलाभिश्च पिदधाति गर्तमापूरयति । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । शार्दू...॥ ४० ॥

**जटायुः**—वत्स लक्ष्मण, श्रुतं किमेतस्या वचनम्। वत्सं रामभद्रं व्यतिक्रमितुमेष राक्षस आगतो हत एव विराधहतकः ।

**लक्ष्मणः**—एषापि राक्षसी आर्या जानकीमपहर्तुं दशग्रीवेण प्रहिता ततो मया विरूपयितव्या । ( इति खड्गं गृह्णाति । )

**रामः**—पश्य पश्य जानकि,

हृतश्रवणनासिका सपदि लक्ष्मणेनासिना
विनद्य रुदती भृशं व्रजति राक्षसीयं दिवि ।
अमी रुधिरबिन्दवो भुवि पतन्ति यस्यास्तनो-
र्नवाम्बुदकदम्बकान्निबिडमिन्द्रगोपा इव ॥ ४१ ॥

तदवतरावो गिरितटादस्मादभिवादयितुमार्यं तातजटायुषं, सम्भावयितुं विजयिनं वत्ससौमित्रिं च ।

**सीता**—जह रोअइ अज्जउत्तस्स । (इत्युभाववतरणं नाटयतः ।)

**लक्ष्मणः**—तातगृध्रराज, गिरितटादार्योऽयमार्यया सह सीतया सममवतरति । तदावामपि पर्णशालाद्वारमेव गच्छाव ।

**जटायुः**—यथा रोचते वत्साय । (इति परिक्रामति ।)

१. यथा रोचते आर्यपुत्रस्य ।

---

**अभिलषितः** प्रार्थितः । **बाष्पासारैः** अश्रुधारासम्पातैः । लज्जत इति लज्जमानम् । शरणं रक्षकम् । **व्यतिक्रमितुं** हन्तुमित्यर्थः । **विरूपयितव्या** विकृतरूपा कर्तव्या । **हृतेति** ॥ सपदि द्रुतं लक्ष्मणेन असिना खड्गेन हृतश्रवणनासिका छिन्नकर्णनासा इयं राक्षसी विनद्य आक्रुश्य भृशं रुदती रोदनं कुर्वती सती दिवि गगने व्रजति गच्छति । यस्याः राक्षस्याः तनोः शरीरात् अमी रुधिरबिन्दवः रक्तबिन्दवः नवाम्बुदकदम्बकात् नूतनमेघसमूहात् इन्द्रगोपाः तितिभा इव निबिडं सान्द्रं यथा तथा भुवि पतन्ति । पृथ्वी वृत्तम् ॥ ४१ ॥

**रामः**—अयि प्रेयसि,

हस्तेन हस्तमवलम्ब्य निजेन मे त्वं
निःशङ्कमेहि विषमो यदयं प्रदेशः ।
एतासु मा स्खल शिलासु विलङ्घ्य निम्न-
मायाहि कण्टकमवेक्ष्य पदं निधेहि ॥ ४२ ॥

**सीता**—[1]अज्जउत्त, तादजडाऊ वच्चलक्खणो अ पण्णसालादुवारं आअच्छंदि ।

**रामः**—मान्यत्र दृष्टिं निक्षिप ।

पन्थाः पङ्किल एष तत्कुटिलमप्याक्राम मार्गान्तरं
जङ्घाभ्यां कियदुत्क्षिपांशुकमसावुल्लङ्घ्यते निर्झरः ।
मौलिं न्यञ्चय मा स्पृशन्तु वदनं वानीरशाखा नताः
सक्तं मोचय मातुलङ्गविटपे सीते दुकूलाञ्चलम् ॥ ४३ ॥

(सीता तथा कृत्वा राममनुसरति ।)

1. आर्यपुत्र, तातजटायुर्वत्सलक्ष्मणश्च पर्णशालाद्वारमागच्छतः ।

**हस्तेनेति** ॥ यत् यतः अयं प्रदेशः विषमः निम्नोन्नतः ततः त्वं निजेन हस्तेन मे हस्तं अवलम्ब्य निश्शङ्कं निर्भयं एहि आगच्छ । एतासु शिलासु मा स्खल स्खलनपातिता मा भव । निम्नं गर्तमित्यर्थः । विलङ्घ्य लङ्घयित्वा आयाहि आगच्छ कण्टकं तीक्ष्णवृक्षाद्यवयवम् । अवेक्ष्य पदं चरणं निधेहि निक्षिप । वसन्ततिलका वृत्तम् ॥ ४२ ॥

**पन्थाइति** ॥ हे सीते एषः पन्थाः मार्गः पङ्कः अस्मिन्नस्तीति पङ्किलः कर्दमयुक्तः । तत् ततः कुटिलं वक्रमपि मार्गान्तरं अन्यम्मार्गं आक्राम आगच्छ । अंशुकं वस्त्रं जङ्घाभ्यां प्रसृताभ्यां ( पञ्चमी ) कियद्दूरं उत्क्षिप ऊर्ध्वंनय । किमर्थमिति चेत्—असौ निर्झरः प्रस्रवणान्निर्गतजलप्रवाहः उल्लङ्घ्यते उत्तीर्यते । मौलिं ( लक्षणया) शिरः न्यञ्चय अवनमयं नताः अवनताः वानीरशाखाः वेतसविटपाः तव वदनं मा स्पृशन्तु । मातुलङ्गविटपे बीजपूरशाखायां सक्तं लग्नं दुकूलाञ्चलं क्षौमाग्रं मोचय । काव्यलिङ्गमलङ्कारः । शार्दू...॥ ४३ ॥

जटायुः—एते खलु ।

गुर्वर्थे सदयेन वत्स भवता लूनप्रसूनाः शनै-
वैदेहीकरपल्लवात्तकलशीधाराम्बुसंवर्धिताः ।
पर्यन्ते रुचिरैर्विलासहरिणैः केलीमयूरैर्वृताः
प्रायः पर्णकुटीसनीडतरवः प्रीतिं प्रयच्छन्ति नः ॥ ४४ ॥

रामः—

श्रान्तासि शैलशिखरादवतार्यमाणा
सीते मया यदिदमाननपङ्कजं ते ।
घर्मोदबिन्दुकमनीयकपोलमेति
साम्यं सुधाकणमुचा शशिमण्डलेन ॥ ४५ ॥

तदिह वनदीर्घिकापरिसरे मञ्जरीपुञ्जपरिष्कृतबालसहकारतरुप्रच्छायशीतले क्षणं स्थीयतां विश्रमाय ।

**गुर्विति** ॥ हे वत्स सदयेन दयावता भवता त्वया गुर्वर्थे गुरोः ज्येष्ठस्य रामस्य अर्थे देवतार्चनादिप्रयोजनमुद्दिश्य शनैः मन्दं लूनप्रसूनाः अपचितकुसुमाः वैदेहीकरपल्लवाभ्यां किसलयसदृशसीतापाणिभ्यां आत्तकलशीधाराम्बुना गृहीतघटधाराजलेन सम्यक् वर्धिताः पोषिताः । पर्यन्ते प्रान्ते रुचिरैः रम्यैः विलासहरिणैः लीलामृगैः केलीमयूरैः क्रीडाशिखिभिश्च प्रायः बहुशः वृताः परिवृताः पर्णकुटीसनीडतरवः पर्णशालासमीपस्थितवृक्षाः नः प्रीतिं प्रयच्छन्ति ददति । पूर्ववद्वृत्तालङ्कारौ ॥ ४४ ॥

**श्रान्तेति** ॥ हे सीते मया शैलशिखरात् पर्वताग्रात् अवतार्यमाणा अवरोप्यमाणा त्वं श्रान्ता आयासिता असि । यत् यतः इदं ते तव आननपङ्कजं मुखपद्मं घर्मोदबिन्दुकमनीयकपोलं स्वेदजलबिन्दुरम्यगण्डं सत् सुधाकणमुचा अमृतबिन्दुभृता शशिमण्डलेन चन्द्रबिम्बेन साम्यं सादृश्यं एति गच्छति । उपमा काव्यलिङ्गश्चालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ४५ ॥

**सीता**—अज्जउत्त, सणअं उडअं गच्छम्ह । जं वच्चो तादो अ पडिपालअंदि णो आअमणं ।

**रामः**—तर्हि अनेन पथा गन्तव्यम् । यत्र खलु ।

प्रवहति शीकरवर्षी प्रमुषितकल्हारशीतलामोदः ।
पवनः परितो विकिरन्मदकलकारण्डवक्वणितम् ॥ ४६ ॥

(इति परिक्रम्यावलोक्य च ।) तात गृध्रराज, तत्रभवन्तमेष दाशरथिरहमभिवादये ।

**जटायुः**—वत्स, चिरं जीव ।

**सीता**—अज्ज, णमो दे ।

**जटायुः**—वत्से, वीरप्रसवा भव ।

**रामः**—(लक्ष्मणमालिङ्ग्य ।) दिष्ट्या विजयिनं त्वां पश्यामि ।

**लक्ष्मणः**—सर्वमस्य तातगृध्रराजस्य प्रसादात् ।

**जटायुः**—कथं वत्सेन वत्सस्य विजयो दृष्ट एव ।

**रामः**—शैलशिखराधिरूढाभ्यां सर्वं दृष्टमेव ।

**सीता**—किंदु तस्स रक्खसस्स ताए रक्खसीए ठाणं णामं अ ण जाणीअदि ।

---

१. आर्यपुत्र, शनैरुटजं गच्छावः । यद्वत्सस्तातश्च प्रतिपालयतो न आगमनम् ।
२. आर्य, नमस्ते ।
३. किं तु तस्य राक्षसस्य तस्या राक्षस्याः स्थानं नाम च न ज्ञायते ।

---

**वनेति** ॥ मञ्जरीपुञ्जेन वल्लरीसमूहेन परिष्कृतैः अलङ्कृतैः बालैः सहकारतरुभिः आम्रवृक्षैः प्रच्छाये प्रकृष्टच्छाये अत एव शीतले वनदीर्घिकायाः वनवाप्याः परिसरे समीपे विश्रमाय आयासनिवृत्तये क्षणं स्थीयताम् । **प्रेति** ॥ शीकरवर्षी जलकणवर्षी प्रमुषितः कल्हाराणां सौगन्धिकानां शीतलः आमोदः सौरभ्यं येन सः । परितः समन्ततः मदेन यौवनमदेन कलं अव्यक्तमधुरं कारण्डवानां प्लवानां क्वणितं ध्वनिं विकिरन् विक्षिपन् प्रसारयन् पवनः प्रवहति प्रवाति ॥४६॥

जटायुः—

चतुर्दशसहस्राणि राक्षसास्तत्पतिः खरः।
एकतस्तापसद्रोही विराधस्त्वयमेकतः॥ ४७॥

सा च खरस्यानुजा शूर्पणखा नाम राक्षसी।

**रामः**—विराध एव किं नु वत्सेन हतः।

(इति सस्नेहबहुमानं लक्ष्मणं पश्यति।)

(लक्ष्मणोऽवाङ्मुखस्तिष्ठति।)

**जटायुः**—अथकिम्।

**रामः**—अन्ये सर्वेऽपि वध्या ममैवांशा इति निर्धारिताः।

**जटायुः**—शूर्पणखावैरूप्यदर्शनान्मुहूर्तमात्रादभिषेणयिष्यति वत्सं भवन्तं खरः क्रोधेन।

**रामः**—(सोत्साहम्।) भवतु का हानिः।

**जटायुः**—इच्छाम्यहमधुना कुञ्जवतो गिरेः शिखरमभिरुह्य विश्रमितुम्।

**रामः**—यथा रोचते ताताय।

**जटायुः**—इतः परमप्रमत्तेन भवितव्यं वत्सेन। (इति निष्क्रान्तः।)

(नेपथ्ये।)

प्राप्तां शूर्पणखां विरूपितगलद्बाष्पाननामुच्चकैः
क्रन्दन्तीमुपसान्त्व्य भूमिपतितामाध्मातकोपः खरः।

---

**चतुरिति**॥ एकतः एकस्मिन् भागे। तापसेभ्यः द्रुह्यतीति तापसद्रोही॥ **वध्याः** हन्तुमर्हाः। अंशाः भागाः। **मुहूर्तमात्रात्** घटिकाद्वयकालमात्रात्। **अभिषेणयिष्यति** सेनयाऽभियास्यति। 'यत्सेनयाऽभिगमनमरौ तदभिषेणनम्' इत्यमरः। अप्रमत्तेन प्रमादरहितेन। **प्राप्तामिति**॥ एषः खरः प्राप्तां आगतां विरूपितं नासाकर्णच्छेदेन सञ्जातविकृतरूपं गलद्बाष्पं पतदश्रु आननं मुखं यस्यास्ताम्। उच्चकैः उच्चैः क्रन्दन्तीं रुदतीं भूमौ पतितां शूर्पणखां उपसान्त्व्य

योद्धुं प्रस्थित एष दाशरथिना योधैरशेषैः समं
द्रक्ष्यामो रणमेत्य खेचरकुले येषां ममेव स्पृहा ॥ ४८ ॥

**लक्ष्मणः**—समरकुतूहलिनः स्वयंभूसंभवस्य वैणिकस्य मुनेरयमालापः । तत्संनद्धव्यमस्माभिः ।

**रामः**—संनद्ध एवास्मि । यन्मया तातजटायुषः संनिधौ ससैनिकस्य खरस्य वधो ममांशो निर्णीतः । वत्स, तज्जानकीमानीय पर्णशालां प्रविशतु भवान् ।

**सीता**—अज्जउत्त[1], अप्पमादेण होदव्वम् ।

**रामः**—कः संदेहः ।

**लक्ष्मणः**—यथा रोचते भवते । (इति सीतया सह निष्क्रान्तः ।)

(नेपथ्ये ।)

इक्ष्वाकुवंशप्रभवमृषिवेषं नृपात्मजम् ।
सभार्यं सानुजं रुन्ध्वं सैनिकाः शस्त्रपाणयः ॥ ४९ ॥

**रामः**—(सहर्षस्मितम् ।) कथं खर एव संप्राप्तो व्याहरति । अरे रे राक्षसापशद, दुरात्मन्, तिष्ठ तिष्ठ ।

(इति कवचमामुच्य शरचापौ निषङ्गं च गृहीत्वा परिक्रम्य ।)

---

१. आर्यपुत्र, अप्रमादेन भवितव्यम् ।

सान्त्वयित्वा आध्मातरोषः अभिवृद्धरोषस्सन् अशेषैः समस्तैः योधैः समं सह दाशरथिना योद्धुं युद्धं कर्तुं प्रस्थितः प्रातिष्ठत । खेचराणां आकाशचारिणां देवानां कुले वृन्दे ममेव येषां स्पृहा रणदर्शनेच्छास्ति ते सर्वे वयं रणं युद्धं एत्य प्राप्य द्रक्ष्यामः । शार्दू... ॥ ४८ ॥

स्वयम्भूसम्भवस्य ब्रह्मपुत्रस्य । वैणिकस्य वीणा शिल्पमस्येति वैणिकस्तस्य नारदस्य । सन्नद्धव्यं धृतसन्नाहैर्भवितव्यम् । सेनायां समवयन्तीति सैनिकाः ।

इक्ष्वाक्विति ॥ हे सैनिकाः रुन्ध्वं आवृणुध्वम् । ४९ ॥

येषामस्थिचयश्चकास्ति धवलस्त्वद्भक्षितानां वने
यैः क्षान्तं भवतश्च दुर्विलसितं रक्षद्भिरुग्रं तपः ।
वाहिन्या चतुरङ्गया सह खर त्वां दुर्विनीतं शरै-
र्भित्वा पक्षिगणान् धिनोमि समरे तेषां करिष्यन्मुदम् ॥

(इति निष्क्रान्ताः सर्वे ।)

॥ इति जानकीपरिणयनाटके पञ्चमोऽङ्कः ॥

**व्याहरति** जल्पति । **आमुच्य** धृत्वा । **येषामिति** ॥ हे खर वने त्वया भक्षितानां येषां ऋषीणां अस्थ्नां कीकसानां चयः समूहः धवलः शुभ्रः चकास्ति राजति । किञ्च उग्रं उत्कटं तपः रक्षद्भिः यैः ऋषिभिः भवतः तव दुर्विलसितं दुष्टकृत्यं क्षान्त सोढम् । तेषां ऋषीणां मुदं सन्तोषं करिष्यन्नहम् । हे खर समरे युद्धे चत्वारि रथगजतुरगपदातिरूपाणि अङ्गानि यस्यास्तया वाहिन्या सेनया सह दुर्विनीतं उद्धतं त्वां शरैः भित्त्वा विदार्य पक्षिणां गणान् समूहान् धिनोमि प्रीणयामि । शार्दू... ॥ ५० ॥

इति श्रीतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां
बालरञ्जन्याख्यायां पञ्चमाङ्कव्याख्या समाप्तिमगमत् ॥

## षष्ठोऽङ्कः ॥

(ततः प्रविशत्यनला ।)

**अनला**—(अग्रतोऽवलोक्य ।) कहं तादस्स अमच्चो संपादी इदो एव्व आअच्छइ ।

( ततः प्रविशति संपातिः । )

**संपातिः**—एषा स्वामिनः कुमारविभीषणस्य तनया अनला समापतति । (उपसृत्य ।) वत्से अनले, कुत आगम्यते भवत्या ।

**अनला**— विज्जुज्जीहस्स घरादो ।

**संपातिः**—तत्र किमस्ति ते कार्यम् ।

**अनला**—सुणादु अज्ज अमच्चो । अत्थि खु सुप्पणहा णाम महाराअलंकेसुरस्स भइणी ।

**संपातिः**—(विहस्य ।) पितृष्वसेति वक्तव्यम् । या खलु रामं कामयमाना विरूपिता लक्ष्मणेन । यस्याश्च गिरा प्रहितेन सानुचरेण खरेण शलभायितं रामभुजप्रतापहव्यवाहे ।

**अनला**—सा विज्जुज्जीहप्पेअसीए माआवदीए मह संणिहाणे णासिअच्छेदकालणं पुच्छिदा कहंदरे रामस्स आकिदी ईरिसी तारिसी त्ति कहिदवदी ।

---

१. कथं तातस्यामात्यः सम्पातिरित एवागच्छति ।

२. विद्युज्जिह्वस्य गृहात् ।

३. शृणोत्वार्यः अमात्यः । अस्ति खलु शूर्पणखा नाम महाराजलङ्केश्वरस्य भगिनी ।

४. सा विद्युज्जिह्वप्रेयस्या मायावत्या मम सन्निधाने नासिकाच्छेदकारणं पृष्टा कथान्तरे रामस्याकृतिरीदृशी तादृशीति कथितवती ।

---

**पितृष्वसा** पितुर्भगिनी । **शलभायितं** शलभवत् पतङ्गवदाचरितम् ।

**संपातिः**—ततस्ततः ।

**अनला**—तदो[1] अ विज्जुज्जीहेण पुव्वं आणीदो आलिहिदरामरूवो चित्तपडो मह हत्थे णिक्खित्तो आसी ।

**संपातिः**—ततस्ततः ।

**अनला**—ताए[2] माआवदीए पुच्छिदं रामप्पडिकिदिं दंसणत्थं पच्चप्पेहि त्ति ।

**संपातिः**—ततस्ततः ।

**अनला**—तदो[3] अहं ताए माआवदीए चित्तपडस्स पच्चप्पणं कदुअ आअदह्मि ।

**संपातिः**—किमर्थं तव हस्ते निक्षिप्तश्चित्रपटः ।

**अनला**—सो[4] चित्तपडो परिणआदो पुव्वं जाणईए लिहिदो । दाणिं दीहविप्पओए जाणईए समस्सासणत्थं मए आणअंदीए एत्तिअं कालं दंसिदो ।

**संपातिः**—(विचिन्त्य ।) आश्चर्यमाश्चर्यम् ।

राज्ञा सीतापहृतये मारीचो मारितो मृगः ।
गरुत्मतश्च भ्रातृव्यो जटायुर्गृध्रनायकः ॥ १ ॥

---

१. ततश्च विद्युज्जिह्वेन पूर्वमानीत आलिखितरामरूपश्चित्रपटो मम हस्ते निक्षिप्त आसीत् ।

२. तया मायावत्या पृष्टं रामप्रतिकृतिं दर्शनार्थं प्रत्यर्पयेति ।

३. ततोऽहं तस्या मायावत्याः चित्रपटस्य प्रत्यर्पणं कृत्वा आगतास्मि ।

४. स चित्रपटः परिणयात्पूर्वं जानक्या लिखितः । इदानीं दीर्घविप्रयोगे जानक्याः समाश्वासनार्थं मया आनयन्त्या एतावन्त कालं दर्शितः ।

---

रामभुजप्रताप एव हव्यवाहे अग्नौ । **प्रेयस्या** भार्यया । **प्रतिकृतिं** प्रतिच्छन्दम् । **विप्रयोगे** विरहे । **राज्ञेति** ॥ राज्ञा रावणेन सीताया अपहृतये अपहरणाय मृगः मृगरूपधारी मारीचः रामद्वारा मारितः गरुत्मतः गरुडस्य भ्रातृव्यः भ्रातुः अरुणस्य पुत्रः गृध्रनायकः जटायुश्च मारितः ॥ १ ॥

इतः परं कथं भविष्यति सीतायाः समाश्वासनं । या किल चिरपरिचयात्त्वयि निबध्नाति प्रियसखीस्नेहम् ।'

अनला—अदो खु से जाणईए समस्सासणविरहादो चिट्ठइ सरीरं ण वेत्ति भीद ह्मि । (संस्कृतमाश्रित्य ।)

बाष्पैर्विश्लथहारमौक्तिकनिभैः सीता स्तनौ सिञ्चती
नेत्राब्जे मलिनान्तरीयसिचयप्रान्तेन निर्माजती ।
आलेख्यस्थितमात्मनः प्रियतमं निर्वर्णयन्ती मुहुः
सप्तैवं किल शिंशुपातरुतले मासाननैषीदसौ ॥ २ ॥

संपातिः—स्वामिनः कुमारविभीषणस्यान्येषां माल्यवत्प्रभृतीनामपि वालिप्रमापणानन्तरं प्रत्यर्पणमेव सीतायाः शुभोदर्कमित्यभिमतम् ।

अनला—कहं महाराअलंकेसुरविजई वाली वि रामेण हदो एव्व ।

संपातिः—अथ किम् ।

अनला—कहं मण्णइ महाराओ ।

१. अतः खल्वस्या जानक्याः समाश्वासनविरहात्तिष्ठति शरीरं न वेत्ति भीतास्मि ।

२. कथं महाराजलङ्केश्वरविजयी वाल्यपि रामेण हत एव ।

३. कथं मन्यते महाराजः ।

**बाष्पैरिति** ॥ असौ सीता विश्लथहारमौक्तिकनिभैः शिथिलहारगलितमुक्तासदृशैः बाष्पैः अश्रुभिः स्तनौ कुचौ सिञ्चती सिक्तौ कुर्वती । मलिनस्य शोधनाद्यभावात्संप्राप्तमालिन्यस्य अन्तरीयसिचयस्य अधोवस्त्रस्य प्रान्तेन अग्रेण नेत्राब्जे पद्मसदृशनयनद्वयं निर्माजती प्रमार्जयन्ती । आलेख्यस्थितं चित्रगतं आत्मनः स्वस्याः प्रियतमं रामं मुहुः पुनःपुनः निर्वर्णयन्ती पश्यन्ती च सती । शिंशुपातरोः तले अधः एवं सप्त मासान् अनैषीत् नयति स्म किल । शार्दू...॥२

**प्रमापणं** निधनम् । **शुभोदर्कं** शुभः उदर्कः फलमुत्तरं यस्य तत् ।

संपातिः—को वा मन्त्रिजनेषु महाराजं दर्शयितुं क्षमः । यदिदानीम् ।

वातेन नन्दनवनोपहृतैः प्रसूनैः
कॢप्तःस्तरो वरुणदत्तमृणालहारः ।
अश्रान्तमर्पितमना जनकात्मजायां
नान्तःपुराद्बहिरुपैति निशाचरेन्द्रः ॥ ३ ॥

तदनवगतोपनतप्रबलवीरवैरानुबन्धमनुपक्रान्तमन्त्रविचारमननुष्ठितकर्तव्यमेनं वागुपन्यासेन वालिवधमनुबोधयितुमपारयद्भिरमात्यैरुशनसा रामकथां प्रस्तुत्य किमपि प्रेक्षणकं कारितं लङ्केश्वरस्य दर्शयितव्यमिति ।

अनला—[1]किंआरहिअ किंअवहिअं तं कारिअं कहेहि ।

संपातिः—रामस्य सीतान्वेषणमारभ्य वालिवधावधि ।

अनला—[2]तदो तदो ।

---

१. किमारभ्य किमवधिकं तत्कारितं कथय ।

२. ततस्ततः ।

वातेनेति ॥ अश्रान्तं सततं जनकात्मजायां सीतायां अर्पितमनाः न्यस्तचेताः निशाचरेन्द्रः रावणः (कामसन्तापशान्तये) वातेन वायुना नन्दनवनात् इन्द्रोद्यानात् उपहृतैः आनीतैः प्रसूनैः पुष्पैः कॢप्तास्तरः रचितशयनः वरुणेन दत्तः मृणालहारः बिसरचितहारः यस्मै तथाभूतश्च सन् अन्तःपुराद्बहिः न उपैति नागच्छति वसन्ततिलका वृत्तम् ॥ ३ ॥

तदिति ॥ तत् ततः अनवगतः अज्ञातः (उपनतप्रबलवीरवैरानुबन्धः) उपनतः प्राप्तः प्रबलवीरेण रामेण वैरानुबन्धः वैरानुषङ्गः येन तम् । अनुपक्रान्तमन्त्रविचारं अनारब्धमन्त्रालोचनम् । अननुष्ठितकर्तव्यं अकृतकरणीयम् । एनं रावणं वाचः उपन्यासेन प्रसङ्गेन वालिवधं अनुबोधयितुं निवेदयितुं अपारयद्भिः अशक्नुवद्भिः अमात्यैः मन्त्रिभिः लङ्केश्वरस्य दर्शयितव्यमिति रामकथां प्रस्तुत्य आरभ्य आश्रित्य किमपि प्रेक्षणकं प्रेक्ष्यते दृश्यत इति प्रेक्षणं रूपकं प्रेक्षणमेव प्रेक्षणकं यद्वा अल्पं प्रेक्षणं प्रेक्षणकं उशनसा शुक्रेण कारितम् । किमिति ॥ कः

**संपातिः**—तच्च निवेदितमन्तःपुरचारिणा महाराजस्यासन्नपरिजनेन द्रष्टव्यमिति । तदवकर्णयता देवेन दिष्ट्या अप्सरोभिः प्रयुज्यमानस्य तस्य दर्शनाय सङ्गीतशालाभ्यन्तरं महापार्श्वमात्रनर्मसचिवानुगतेनाध्यास्यते ।

**अनला**—[1]तुए उण कहिं पत्थिदं ।

**संपातिः**—स्वामिना कुमारविभीषणेन सर्वमन्त्रिजनसहितेन तदेव साप्सरोजनं शैलूषकुलं देवस्य संनिधावानयेति प्रेषितोऽस्मि ।

**अनला**—[2]जइ एव्वं जाणई वि दाणिं असंभाविअचित्तपडलिहिदप्पिअजणदंसणा पिअजणभूमिआणिरूवणिज्जकहादंसणेण मणोविणोदणं करेदु ।

**संपातिः**—एवं भवतु । किं तु तिरस्करणीप्रभावेण प्रच्छन्नया द्रष्टव्यम् । तत्र क इवाभ्युपायः ।

**अनला**—[3]अत्थि एव्व तत्थ अब्भुवाओ ।

**संपातिः**—कीदृशः सः ।

---

१. त्वया पुनः कुत्र प्रस्थितम् ।

२. यद्येवं, जानक्यपीदानीमसम्भावितचित्रपटलिखितप्रियजनदर्शना प्रियजनभूमिकानिरूपणीयकथादर्शनेन मनोविनोदं करोतु ।

३. अस्त्येव तत्राभ्युपायः ।

---

अवधिः अवसानं यस्य तत् किमवधिकम् । **आसन्नः** सन्निहितः । **अवकर्णयता** शृण्वता । प्रयुज्यमानस्य अभिनीयमानस्य । तस्य प्रेक्षणकस्य । **नर्मसचिवः** (विदूषक इव) रतितन्त्रसहायः । **सेति** ॥ अप्सरस इति जनाः तैस्सहितानां साप्सरोजनानां शैलूषाणां नटानां कुलं स्वजातीयगणम् । **असम्भावितेति** ॥ चित्रपटस्य मायावतीहस्तगतत्वात् असम्भावितं अनाशङ्कितं चित्रपटलिखितस्य प्रियजनस्य रामस्य दर्शनं यस्यास्तथाभूता सती । प्रियजनस्य रामस्य भूमिकया पात्रेण तद्वेषधारिजनेनेत्यर्थः । निरूपणीयायाः प्रयोजनीयायाः

**अनला**—मह हद्धे विज्जुज्जीहघरणीए माआवदीए रक्खसंधंकरणमणिघटिअरअणकडअजुअलं णिक्खित्तं चिट्टइ । तत्थ एक्कं जाणईए एक्कं मह वि हद्धे आमोच्चिअ तिरोहिदाहिं अह्मेहिं पेक्खणिज्जं ।

**संपातिः**—श्रुतपूर्वमेवेदं मया कटकयुगलम् । यत्कौशिकेन प्रथमं जानक्यै दत्तं, यच्चैतत्पारितोषिकतया गृहीत्वा सारणेन राज्ञे दत्तम् । तेन च विद्युज्जिह्ववशे स्थापितम् ।

**अनला**—अदो तुमं सामिणिओअं असुण्णं करेहि । अहं वि तवस्सिणिं जाणइं मणोविणोदणत्थं संगीदसालं पावइस्सं ।

( इति निष्क्रान्तौ । )

**( इति मिश्रविष्कम्भः । )**

( ततः प्रविशति महापार्श्वेन सह दशाननः । )

**दशाननः**—महापार्श्व, कुतो मां प्रेक्षणकदर्शनार्थमनुबध्नन्ति मन्त्रिजनाः ।

**महापार्श्वः**—जानकीनिमित्तमनङ्गतापेन दुर्मनायमानस्य देवस्य मनोविनोदनाय ।

**दशाननः**—अस्तु । प्रस्तूयतां तर्हि शैलूषैः ।

---

१. मम हस्ते विद्युज्जिह्वगृहिण्या मायावत्या राक्षसान्धङ्करणमणिघटितरत्नकटकयुगलं निक्षिप्तं तिष्ठति । तत्रैकं जानक्या एकं ममापि हस्ते आमोच्य तिरोहिताभ्यामावाभ्यां प्रेक्षणीयम् ।

२. अतस्त्वं स्वामिनियोगमशून्यं कुरु । अहमपि तपस्विनीं जानकीं मनोविनोदनार्थं सङ्गीतशालां प्रापयिष्यामि ।

कषायाः दर्शनेन । **आमोच्य** आवध्य । **अशून्यं** पूर्णम् । **तपस्विनीं** शोच्यां । **ततः प्रविशतीति** ॥ **कुतः** कस्मात्कारणात् । **अनुबध्नन्ति** निर्बध्नन्ति । **दुर्मनायमानस्य** दुःखितं मनः यस्य सः दुर्मनाः स इवाचरतीति दुर्मनायमानः

## ॥ गर्भाङ्कः ॥

( ततः प्रविशति शैलूषेष्वेकः । )

शैलूषः—

जयति मनसिजः सुखैकहेतु-
मिथुनजनस्य वियोगिनां कठोरः ।
वपुषि यदिषुपातवारणार्थं
वहति वधूं शशिखण्डमण्डनोऽपि ॥ ४ ॥

दशाननः—सत्यमेवेदम् ।

( नाट्यन्ते । )

सूत्रधारः—

कादम्बिनीमपश्यन् गगनतले शोकशोषितशरीरः ।
शरदुपगमे शिखण्डी हन्त वनाभ्यन्तरे चरति ॥ ५ ॥

दशाननः—कथं मदपहृतां सीतामपश्यतः क्षत्रियवटोरिव सूच्यते व्यापारः ।

महापार्श्वः—अहमप्येवं मन्ये ।

---

तस्य । अस्तु मनोविनोदनं भवतु । प्रस्तूयतां आरभ्यताम् ॥ **जयतीति** ॥ मिथुनं अविरहितौ स्त्रीपुंसावेव जनस्तस्य सुखस्य एकहेतुः मुख्यकारणं वियोगिनां विरहिणां कठोरः तीव्रः मनसिजः कामः जयति सर्वोत्कृष्टो वर्तते । शशिखण्डमण्डनोपि चन्द्रचूडोपि वपुषि शरीरे यस्य मनसिजस्य इषूणां शराणां पातवारणार्थं पतनजन्योपद्रवनिवृत्त्यै वधूं स्त्रियं उमां वहति वामभागे धत्ते । पुष्पिताग्रा वृत्तम् ॥ ४ ॥

**कादम्बिनीमिति** ॥ शरदः शरदृतोः उपगमे आगमे गगनतले कादम्बिनीं मेघमालां ( सीतामिति ध्वन्यते ) अपश्यन् अत एव शोकशोषितशरीरः शिखण्डी मयूरः ( रामश्चेति ध्वन्यते ) वनाभ्यन्तरे वनमध्ये चरति हन्त कष्टम् । समासोक्त्यलङ्कारः ॥ ५ ॥

( नेपथ्ये । )

हा वत्स लक्ष्मण, सीतामन्विष्यता मया शून्यैव दृश्यते पर्णकुटी ।

सूत्रधारः—दृश्यतामयं महाराजलङ्केश्वरेण । लक्ष्मणस्य भूमिकाभृता घृताच्या सह सीतान्वेषणपरस्य रामस्य भूमिकां गृह्णती रङ्गस्थलं प्रविशति पुञ्जिकस्थला ।

(इति निष्क्रान्तः ।)

प्रस्तावना ॥

दशाननः—सम्यगुपक्रान्तं प्रेक्षणकं । यन्मया रामः सीतामपश्यन् किं करोतीति जिज्ञास्यते ।

(ततः प्रविशति कटकभूषितकहस्ता सीता ।)

सीता—[1]हला अणले, इमिणा रक्खसणाहेण अंदेउरवणंदरे णिरोहिआ असरणा दुव्वारसोआवेआ अज्ज वि पेक्खणअप्पओअं पेक्खिदुं ण पारेमि । तह वि अज्जउत्तकहापत्थावो त्ति अत्थि मे कोदूहलम् ।

(प्रविश्य ।)

अनला—[2]ता इमस्सिं संगीदसालब्भंदरे उवविसिअ पेक्खम्ह ।

सीता—(सभयम् ।) [3]हला, एसो परदारपडिग्गहमहापादई रक्खसणाहो विदूरे दीसइ ।

१. सखि अनले, अमुना राक्षसनाथेनान्तःपुरवनान्तरे निरोधिता अशरणा दुर्वारशोकावेगा अद्यापि प्रेक्षणकप्रयोगं प्रेक्षितुं न पारयामि । तथाप्यार्यपुत्रकथाप्रस्ताव इत्यस्ति मे कौतूहलम् ।

२. तदस्मिन् सङ्गीतशालाभ्यन्तरे उपविश्य पश्यावः ।

३. सखि, एषः परदारप्रतिग्रहमहापातकी राक्षसनाथो विदूरे दृश्यते ।

दृश्यतामिति ॥ घृताची पुञ्जिकस्थला चाप्सरसौ । जिज्ञास्यते ज्ञातुमिष्यते । कटकं राक्षसान्धकूरणमणिघटितरत्नवलयम् । निरोधिता उपरोधं प्रापिता अशरणा अरक्षका । न पारयामि न शक्नोमि । प्रस्तावः अवसरः उपन्यासः । पातकी पापवान् । निश्शङ्कं निर्भयम् । जल्पितं वाक्यः । उपक्रान्त-

**अनला**—[1]किं तदो । रक्खसंधकरणमणिघडिअकडअधारिणीहिं अह्मेहिं णिस्संकं एत्थ सक्कं एव्व उपविसिदुं । विदूरदाए ण सुणीअदि इमिणा अह्माणं जप्पिअं इमस्स वि अम्हेहिं ।

**सीता**—[2]पुव्वं आओज्झअतवस्सिवेसधारिणो रक्खसस्स कडअजुअलं पारितोसिअं दाऊण दाणिं अत्तणो सव्वं सुअं एव्व उवकिदं आसी ।

**अनला**—[3]अच्चरिअं अच्चरिअं महेसिणो माहाप्पं । जं मए अज्ज तुमं ण पेक्खसे । केवलं अंधाए विअ मए वि परिसमत्तेण उवलद्धव्वगत्ता होसि ।

**सीता**—[4]तुमं वि तह अण्णेण रक्खसजणेण ण सक्का पेक्खिदुं । जं तुह हत्थे वि एक्कं कडअं इमाणं आमोचिअं ।

**अनला**—[5]तुमं वि तुए त्ति भणिदव्वं । जं मए एव्व अहं वि ण सक्का पेक्खिदुं ।

**सीता**—[6]भूमिआधारिणीणं अच्छराणं कहं होम्ह ।

**अनला**—[7]एदा पेक्खंदु, को दोसो ।

---

१. किं ततः । राक्षसान्धङ्करणमणिघटितकटकधारिणीभ्यामावाभ्यां निःशङ्कमत्र शक्यमेवोपवेष्टुं, विदूरतया न श्रूयतेऽनेनावयोर्जल्पितम् । अमुष्याप्यावाभ्याम् ।

२. पूर्वमायोध्यकतपस्विवेषधारिणो राक्षसस्य कटकयुगलं पारितोषिकं दत्त्वा इदानीमात्मनः सर्वं स्वयमेवोपकृतमासीत् ।

३. आश्चर्यमाश्चर्यं महर्षेर्माहात्म्यम् । यन्मयाद्य त्वं न दृश्यसे । केवलमन्धयेव मयापि स्पर्शमात्रेणोपलब्धव्यगात्रा भवसि ।

४. त्वमपि तथा अन्येन राक्षसजनेन न शक्या प्रेक्षितुम् । यत्तव हस्तेऽप्येकं कटकमनयोरामोचितम् ।

५. त्वमपि त्वयेति भणितव्यम् । यन्मयैवाहमपि न शक्ता प्रेक्षितुम् ।

६. भूमिकाधारिणीनामप्सरसां कथं भवावः ।

७. एताः पश्यन्तु, को दोषः ।

---

व्यगात्रा ज्ञातव्यशरीरा । अनयोः एतयोः कटकयोर्मध्ये । आमोचितं आब-

(ततः प्रविशति लक्ष्मणानुगतो रामः ।)

**रामः**—(सावेगम् ।)

शून्यां पर्णकुटीमवेक्ष्य हृदयं शोकेन मे दह्यते

**दशाननः**—(सहर्षम् ।) दह्यतां दह्यताम् !

**सीता**—(सास्रम् ।) ईरिसो[1] खु तस्स मइ सिणेहाणुबंधो ।·ता कहं अज्जउत्तेण पेक्खिदुं क्खमा मं बिणा पण्णसाला ।

**लक्ष्मणः**—अलं शोकेन ।

गच्छेदद्रिनिकुञ्जमार्य कुतुकादार्या मयूराकुलम् ।

**दशाननः**—(विहस्य ।) एष न जानाति मयापहृतामेनाम् ।

**सीता**—असंभाविदो[2] एसो अत्थो । ता समासासणोवाओ वच्छलक्खणस्स ।

**रामः**—

अस्मिन्वत्स कदापि न व्रजति सा मामन्तरेण प्रिया

**दशाननः**—कातर्यादप्येवं संभवति । न तु प्रेमानुबन्धादेव ।

**सीता**—जुज्जइ[3] एदं । जं असण्णिहाणे अज्जउत्तस्स ण किं वि मे पिअं

---

१. ईदृशः खलु तस्य मयि स्नेहानुबन्धः । तत्कथमार्यपुत्रेण द्रष्टुं क्षमा मां विना पर्णशाला ।

२. असम्भावित एषोऽर्थः तस्मात्समाश्वासनोपायो वत्सलक्ष्मणस्य ।

३. युज्यत एतत् । यदसंनिधाने आर्यपुत्रस्य न किमपि मे प्रियं भवति ।

---

दम् । **शून्यामिति** ॥ शून्यां सीतारहितां पर्णकुटीं पर्णशालां अवेक्ष्य मे हृदयं शोकेन सीताविरहजन्यदुःखाग्निना । दह्यते । **गच्छेदिति** ॥ हे आर्य राम आर्या सीता कुतुकात् कौतूहलात् मयूरैः आकुलं आक्रान्तं अद्रेः पर्वतस्य निकुञ्जं कुञ्जं गच्छेत् । **अस्मिन्निति** ॥ हे वत्स लक्ष्मण सा प्रिया सीता कदापि मामन्तरेण मां विना अस्मिन् अद्रिनिकुञ्जे न व्रजति न गच्छति । ( **कातर्यात् भयात्** ।)

**लक्ष्मणः**—

पुष्पेभ्यः किमु देवतार्चनकृते पुन्नागवाटीं गता ॥ ६ ॥

**रामः**—अन्विष्यतां तर्हि वत्सेन ।

**लक्ष्मणः**—तथा (इति परिक्रामति ।)

**दशाननः**—सेयमशोकवनिकां गता । न पुनः पुन्नागवाटिकाम् ।

**सीता**—[1]तस्सिं दिणे एदं पुडमं एव्व आसी । हला अणले, तं अवत्थं सुमरिअ परवसाहोमि सोएण ।

अज्जउत्तं अपेक्खंदी पेक्खंदी दसकंधरं ।
पकंपिद ह्मि सा अत्थ पवादे कदली विअ ॥ ७ ॥

**अनला**—[2]हला जाणइ, होदी सुक्खत्तिआ खु, तदो तस्सिं ओसरे धीरा आसी ।

**सीता**—[3]णं हि ण हि । किं दु अत्तिमहेसिपुरंधीए अणसुआए दिण्णस्स दिव्ववसणंगराअस्स पहावादो ।

**अनला**—[4]जुज्जइ जुज्जइ ।

---

१. तस्मिन्दिने इदं प्रथममेवासीत् । सखि अनले, तामवस्थां स्मृत्वा परवशा भवामि शोकेन ।

आर्यपुत्रमपश्यन्ती पश्यन्ती दशकन्धरम् ।
प्रकम्पितास्मि सा अत्र प्रवाते कदली इव ॥ ७ ॥

२. सखि जानकि, भवती सुक्षत्रिया खलु, ततस्तस्मिन्नवसरे धीरासीत् ।

३. न हि न हि । किंतु अत्रिमहर्षिपुरन्ध्रया अनसूयया दत्तस्य दिव्यवसनाङ्गरागस्य प्रभावात् ।

४. युज्यते युज्यते ।

---

**पुष्पेभ्यइति** ॥ देवतार्चनकृते देवतापूजाकार्याय (कृते इत्यत्र भावे क्विप्) पुष्पेभ्यः पुष्पाण्यपचेतुं पुन्नागवाटीं पुन्नागवृक्षोद्यानं गता किमु । शार्दू...॥ ६ ॥

**आर्येति** ॥ सा तादृशी अहं प्रवाते अधिकवातयुक्तस्थले ॥ ७ ॥

**धीरा** धैर्यवती । **पुरन्ध्रया** पुरं गृहं धारयतीति पुरन्ध्री कुटुम्बिनी तया ।

रामः—हा प्रिये जानकि, कासि ।

सीता—(सावेगम् ।) तदा अज्जउत्तेण एव्वं अक्कंद्दिदं हवे ।

रामः—हन्त हन्त ।

जनकतनयामपश्यन्दर्शितकरुणस्वनस्तरलदृष्टिः ।
शोकात्केलिशुकोऽयं पञ्जरगर्भे परिभ्रमति ॥ ८ ॥

दशाननः—संभावितमेतत् ।

सीता—(सकरुणम् । हस्तेन हस्तं निष्पीड्य ।) अणले हा सुबुद्धी णामा केलिसुओ णूणं तक्खणं एव्व जीविअं परिच्चअइ ।

अनला—हला, अलं सोएण । एव्वं देव्वदुव्विलसिदे किं कादव्वं ?

रामः—कष्टं भोः कष्टम् ।

अयमिह गजशावः पर्णशालोपकण्ठे
चरति मृगयमाणो जानकीं संभ्रमेण ।
दरहसितमुखी सा लोलहस्ताञ्चलाय
प्रदिशति किल यस्मै सल्लकीपल्लवानि ॥ ९ ॥

---

१. तदा आर्यपुत्रेणैवमाक्रन्दितं भवेत् ।

२. अनले, हा सुबुद्धिनामा केलिशुकः नूनं तत्क्षणमेव जीवितं परित्यजति ।

३. सखि, अलं शोकेन । एवं दैवदुर्विलसिते किं कर्तव्यम् ।

**वसन** वस्त्रम् । अङ्गरागः विलेपनम् । हन्तेति खेदे । **जनकेति** ॥ जनकतनयां सीतां अपश्यन् दर्शितः प्रकटितः करुणः शोच्यध्वनिः येन सः । तरलदृष्टिः चञ्चलदृक् अयं केलिशुकः क्रीडाशुकः शोकात् सीताऽदर्शनजन्यदुःखात् पञ्जरस्य नीडस्य मध्ये परिभ्रमति ॥ ८ ॥

**दैवेति** ॥ दैवस्य विधेः दुष्टे विलसिते विलासे । **अयमिति** ॥ अयं गजशावः गजशिशुः इह पर्णशालायाः उपकण्ठे समीपे सम्भ्रमेण संरम्भेण जानकीं मृगयमाणः अन्विष्यन् चरति । दरहसितमुखी समन्दहासवदना सा सीता लोलहस्ताञ्चलाय चञ्चलशुण्डाग्राय यस्मै गजशावाय सल्लकीपल्लवानि गजभक्ष्यायाः किसलयानि प्रदिशति किल ददाति किल । मालिनी वृत्तम् ॥ ९ ॥

**दशाननः**—किमनेन जानक्याः । सन्ति सहस्रमेवंविधा मम गृहेषु यदीयमभिलषेत् ।

**सीता**—(सानुकम्पम् ।) पुत्तअ कालमेघ, अहं एत्थ (इत्यर्धोक्ते ।) अणले, णं पेक्खणअं खु एदं ।

**अनला**—हेला जाणइ, तुए सिणेहाणुबंधेण सो गअसावो पच्चक्खो एव्व जाणीअदि ।

**रामः**— विशत्युटजमभ्येति द्वारं पश्यति चासकृत् ।
विहारबर्ही वैदेहीं विचिन्वन्निव लक्ष्यते ॥ १० ॥

**दशाननः**—किमन्यदेष करोति मया रुषिततयापहृतायामस्यां सीतायाम् ।

**सीता**—हा विचित्तदंसण, सुबुद्धिणामहेअ, तस्सिं दिणे तुह बुभुक्खिदस्स पाणभोअणणिव्वट्टणादो पुढमं एव्व ओहरिदं ह्मि रक्खसेण । हद्धी हद्धी ।

अण्णेसिअ बहुवारं मं गअभग्गं तुमं अपेक्खंदो ।
णूणं मिदो खु एसो विवुदमुहो विददपादजुओ ॥ ११ ॥

(इति मूर्च्छति ।)

---

१. पुत्रक कालमेघ, अहमत्र । अनले, ननु प्रेक्षणकं खल्वेतत् ।

२. सखि, जानकि, त्वया स्नेहानुबन्धेन स गजशाबः प्रत्यक्ष एव ज्ञायते ।

३. हा विचित्रदर्शन, सुबुद्धिनामधेय, तस्मिन्दिने तव बुभुक्षितस्य पानभोजननिर्वर्तनात्प्रथममेवापहृतास्मि राक्षसेन । हा धिक् हा धिक् ।

अन्विष्य बहुवारं मां गतभाग्यां त्वमपश्यन् ।
नूनं मृतः खल्वेष विवृतमुखो विततपादयुगः ॥ ११ ॥

---

**पुत्रक** पुत्र इव पुत्रकः तस्य सम्बुद्धिः । **विशतीति** ॥ विहारबर्ही क्रीडामयूरः असकृत् अनेकवारं उटजं पर्णशालां प्रविशति । द्वारं अभ्येति अभिगच्छति । (समन्ततः) पश्यति च । ततः वैदेहीं सीतां विचिन्वन् मृगयमाण इव लक्ष्यते दृश्यते ॥ १० ॥

**रुषिततया** कोपेन । **हेति** ॥ बुभुक्षितस्य सञ्जातभोजनेच्छस्य पानभोजनयोः निर्वर्तनात् निष्पादनात् । **अन्विष्येति** ॥ हे क्रीडामयूर एषः त्वं गतभा-

**अनला**—(साशङ्कं हस्ताभ्यां परामृश्य । स्वगतम् ।) मुच्छिदेअम् । (प्रकाशम् ।) हञ्ञा, समस्ससिहि समस्ससिहि ।

**सीता**—(समाश्वस्य ।) अणले, एत्तिअस्स सोअस्स सिट्ठ म्हि विहिणा ।

**रामः**—(सानुस्मरणम् ।)

स्नानार्द्राः करयोर्युगेन चिकुराः संशोषणार्थं मुहु-
र्धूयन्ते कुचकुम्भनुन्नसिचयं यावत्तरुण्या तया ।
तावत्ताण्डवयत्ययं वलयितोदञ्चत्कलापोच्चयं
केकागर्भितकंन्धरं च कुतुकात्केलीमयूरोऽन्तिके ॥ १२ ॥

**दशाननः**—स्थाने खल्वेतत । यदिदमस्याः

निर्वर्ण्य वेणिकां तन्व्या नीलां कादम्बिनीमिव ।
मनो मम घनोत्कण्ठं मयूर इव नृत्यति ॥ १३ ॥

---

१. मूर्च्छितेयम् । सखि, समाश्वसिहि समाश्वसिहि ।
२. अनले एतादृशस्य शोकस्य सृष्टास्मि विधिना ।

---

ग्वां मां बहुवारं असकृत् अन्विष्य मृगयित्वा अपश्यन् विवृतमुखः व्यात्ताननः विततपादयुगः विस्तृतचरणद्वन्द्वश्च सन् मृतः खलु मृत एवासि नूनं ध्रुवम् ॥ ११ ॥

**परामृश्य** सीतायाः अङ्गानि स्पृष्ट्वा । **शोकस्य** दुःखाय । 'सम्बन्ध-सामान्ये षष्ठी ॥ विधिना दैवेन । **स्नानेति** ॥ यावत् तरुण्या युवत्या तया सीतया स्नानेनार्द्राः चिकुराः कचाः सम्यक् शोषणार्थं करयोः युगेन द्वन्द्वेन कुचकुम्भाभ्यां नुन्नः क्षिप्तः सिचयः कञ्चुकः उत्तरीयपटो वा यस्मिन् कर्मणि तद्यथा भवति तथा 'पटो स्त्रीकर्पटःशाटः सिचयप्रोतलक्तकाः' इति रभसः । मुहुः धूयन्ते कम्प्यन्ते । तावत् अन्तिके समीपे स्थितः अयं केलीमयूरः क्रीडाशिखी कुतुकात् चिकुरेषु नीरदभ्रान्तिजनितकुतूहलेन वलयितः मण्डलितः उदञ्चन् उद्गच्छंश्च कलापोच्चयः बर्हनिकरः यस्मिन् कर्मणि तद्यथा तथा केकाभिः केकाध्वनिभिः गर्भिता सञ्जातगर्भा पूर्णेत्यर्थः कन्धरा कण्ठः यस्मिन् कर्मणि तद्यथा तथा च । ताण्डवयति उद्धतनृत्तं करोति । भ्रान्तिमदलङ्कारध्वनिः । शार्दू... ॥ १२ ॥

**स्थाने** युक्तम् । **निर्वर्ण्येति** ॥ नीलां तन्व्याः सीतायाः वेणिकां कबरीं

**सीता**—अणले, एव्वं सुमरिदो अज्जउत्तेण इमस्स चित्तदंसणस्स तारिसो विलासो। (इत्यश्रूणि मुञ्चति।)

**अनला**—तस्सिं एव्व दाणिं कहासेसे का उण विलासस्स प्पसत्ती।

**रामः**—हा सुकेशि प्रेयसि। (इति मोहमुपगतः।)

**दशाननः**—(सहर्षौत्सुक्यम्।) भवत्वस्यायमनवसानो मोहः। यदेषा जानकी नैराश्यादासिन्नारोक्ष्यति मे शयनम्।

**सीता**—अणले, अत्तणो कालणादो एव्वं अज्जउत्तो आसी। अहं उण ईरिसी वज्जहिअआ संवुत्त ह्मि।

**अनला**—हला जाणइ, तुमं वि एदस्स कालणादो एव्वं क्खणे क्खणे मोहण्णवे णिमज्जिअ कहं वि उम्मज्जासि। ता कहं वज्जहिअआ होसि।

**लक्ष्मणः**—(उपसृत्य।) आर्य, समाश्वसिहि समाश्वसिहि।

**दशाननः**—कथं जीवयत्याश्वासनेनायं लक्ष्मणहतकः।

**सीता**—दिट्ठिआ एव्वं सोअं समस्सासिदो लक्खणेण।

**रामः**—(समाश्वस्य।) पुन्नागवाटिकायां वत्सेन दृष्टा किं जानकी;

१. अनले, एवं स्मरित आर्यपुत्रेणास्य चित्रदर्शनस्य तादृशो विलासः।

२. तस्मिन्नेवेदानीं कथाशेषे का पुनर्विलासस्य प्रसक्तिः।

३. अनले, आत्मनः कारणादेवमार्यपुत्र आसीत्। अहं पुनरीदृशी वज्रहृदया संवृत्तास्मि।

४. सखि जानकि, त्वमप्येतस्य कारणादेवं क्षणे क्षणे मोहार्णवे निमज्ज्य कथमप्युन्मज्जसि। तस्मात्कथं वज्रहृदया भवसि।

५. दिष्ट्यैवं स्वयं समाश्वासितो लक्ष्मणेन।

---

नीलां कादम्बिनीमिव मेघमालामिव निर्वर्ण्य दृष्ट्वा मम मनः मयूर इव घनोत्कण्ठं अधिकोत्कण्ठं यथा तथा। उत्कण्ठा इच्छाविशेषः तल्लक्षणमुक्तं प्राक्। नृत्यति ॥

**अस्य** मयूरस्य। **कथाशेषे** कथैव शेषो यस्य तस्मिन्। मृते सतीत्यर्थः प्रसक्तिः प्रसङ्गः सम्बन्धः। **अनवसानः** अवसानरहितः निवृत्तिरहित इत्यर्थः।

**लक्ष्मणः**—( स्वगतम् । ) कथं कथयाम्येतदार्याय । अथवा । भवत्वेवम् । ( प्रकाशम् । ) आर्य, श्रूयताम् ।

आर्या सा विचिता विदेहतनया पुन्नागवन्यां मया
माकन्दद्रुमवाटिकां च विशता भृङ्गालिझङ्कारिणीम् ।
एतां चोन्मदचक्रवाकचरणन्यासाङ्कितां सैकते
प्राप्तेन स्फुटपुण्डरीकमुकुलस्मेरां गिरेरापगाम् ॥ १४ ॥

**रामः**—( सोद्वेगम् । ) कथं न दृष्टा जानकी । ( दीर्घं निश्वस्य । )

ज्वलति हृदि शोकवह्निर्दलति ततो मे सबन्धनं हृदयम् ।
न च दृष्टासि क्वचिदपि हा दयिते किं करिष्यामि ॥ १५ ॥

**दशाननः**—यदुचितमुत्तमस्त्रीवियोगस्य, यच्च प्रियं लङ्केश्वरस्य ।

**सीता**—हला अणले, एव्वं तस्स मं अपेक्खंतस्स दसापरिणामो मह वि णाहस्स असण्णिहाणे रक्खसेण आणीदाए ईरिसो त्ति दुवेणं अम्हाणं कीरिसं भाअधेयं संवुत्तं ।

( इति मूर्च्छति । )

---

१. सखि अनले, एवं तस्य मामपश्यतो दशापरिणामो ममापि नाथस्यासान्निध्याने राक्षसेनानीताया ईदृश इति द्वयोरावयोः कीदृशं भागधेयं संवृत्तम् ।

---

अस्मिन् रामे नैराश्यात् निराशत्वात् । आरोक्ष्यति आश्रयिष्यतीत्यर्थः । **आर्येति**॥ आर्या सा विदेहतनया सीता पुन्नागवन्यां पुन्नागोद्याने मया विचिता मार्गिता भृङ्गालिझङ्कारिणीं भ्रमरततिझङ्कारवतीं माकन्दद्रुमवाटिकां आम्रवृक्षोद्यानञ्च विशता । सैकते पुलिने उन्मदानां अधिकमदानां चक्रवाकाणां रथाङ्गाह्वयानां चरणन्यासेन अङ्कितां चिह्नितां स्फुटपुण्डरीकमुकुलस्मेरां विकसितैश्वेतपद्मकोरकैः रम्यां एतां गिरेः आपगां गिरिनदीञ्च प्राप्तेन मया तत्र तत्र विदेहराजतनया विचिता । शार्दूलविक्रीडितवृत्तम् ॥ १४ ॥

**ज्वलतीति** ॥ हृदि मनसि शोकवह्निः ज्वलति दीप्यते । ततः शोकाग्निज्वलनात् सबन्धनं हृदयं दलति विदीर्णं भवति । हे दयिते प्रिये क्वचिदपि न दृष्टासि । हा कष्ट किं करिष्यामि ॥ १५ ॥

**दशापरिणामः** दुर्दशापरिपाकः । भाग एव भागधेयम् । भाग्यं 'भा-

**अनला**—समस्ससिहि समस्ससिहि । तुमं खु अइरेण कालेण तिहुवणेक्कवीरेण तेण रहुउमारेण संगदा हविस्ससि ।[1]

**सीता**—( समाश्वस्य । ) अणले, एत्तिअं कालं सो मह णाहो जीवइ ण वेत्ति संसओ ।[2]

**अनला**—हला, सव्वो उत्तंदो पेक्खणएण जाणीअदि ।[3]

**लक्ष्मणः**—आर्य, धैर्यमवलम्ब्यतां, दृश्यतां च शेषोऽप्ययं वंशोद्देशः ।

**रामः**—( पुरोऽवलोक्य । )

पुष्पैर्वृष्टिमिवाचरन् सुरभिलैर्मन्दानिलस्रंसितै-
वैदेह्या मम चैष बालवकुलो विस्रम्भसाक्षी तरुः ।

**दशाननः**—अतः किम् ।

**सीता**—एदं पुव्ववुत्तणिवेदइत्तअं मह मम्मभेअणं वअणं ।[4]

---

१. समाश्वसिहि समाश्वसिहि । त्वं खल्वचिरेण कालेन त्रिभुवनैकवीरेण तेन रघुकुमारेण सङ्गता भविष्यसि ।

२. अनले, एतावन्त कालं स मम नाथो जीवति न वेति संशयः ।

३. सखि, सर्वो वृत्तान्तः प्रेक्षणकेन ज्ञायते ।

४. एतत्पूर्ववृत्तनिवेदयितृकं मम मर्मभेदनं वचनम् ।

---

ग्यैकदेशयोर्भागः ' इति रुद्रः । **पुष्पैरिति** ॥ मन्दानिलेन मन्दमारुतेन स्रंसितैः अधःपातितैः सुरभिलैः परिमलवद्भिः पुष्पैः वृष्टिं वर्षं आचरन् कुर्वन्निव स्थितः । एषः बालः वकुलः तरुः वैदेह्याः सीतायाः मम च विस्रम्भस्य क्रीडाकलहस्य प्रणयस्य वा ' विस्रम्भः केलिकलहे विश्वासे प्रणये वधे ' इति विश्वः । साक्षी साक्षाद्द्रष्टा । **एतदिति** ॥ पत्युर्मम च पूर्ववृत्तस्य निवेदयितृ बोधयितृ तदेव निवेदयितृकम् ।

**रामः**—

सौहार्दादुपसृत्य साम्प्रतममुं पृच्छामि सीता त्वया
दृष्टा किं क्व गता किमाह कथयेत्येषोऽपि मे वक्ष्यति ॥

**दशाननः**—( सकोपम् । ) रे रे पादपापशद, यदि तां ब्रूयास्तदा छिन्द्यामेव भवन्तं चन्द्रहासेन ।

**महापार्श्वः**—( स्वगतम् । )

जानक्यां राघवः स्नेहादुन्मत्त इव लक्ष्यते ।
असावपि दशग्रीवस्तस्यामेव मनोरथात् ॥ १७ ॥

( प्रकाशम् । ) राजन्, अचेतनः खल्वयं तरुः । प्रेक्षणकं चेदम् ।

**दशाननः**—तथा न गृहीतं मया मन्दबुद्धिना ।

सीता—एव्वं अज्जउत्तेण उम्मत्तेण विअ एसो अचेदणो रुक्खो पुच्छिदो आसी । एद्ध मइ सिणेहाणुबंधो अवरज्झइ एदस्स ।

**रामः**—न कथयत्ययमगणितप्रणयः । भवतु । किमनेन ।

क्षितिधर कथय त्वं जानकी सा क्व याता
यदि न कथयसि त्वां चूर्णयिष्यामि बाणैः ।

---

१. एवमार्यपुत्रेणोन्मत्तेनैवैषोऽचेतनो वृक्षः पृष्ट आसीत् । अत्र मयि स्नेहानुबन्धोऽपराध्यत्येतस्य ।

---

एतद्वचनं मम मर्मभेदनं आयुस्स्थानविदारणम् । सौहार्दात् मित्रभावात् उपसृत्य समीपं गत्वा साम्प्रतं अद्य अमुं वकुलतरुं 'सीता त्वया दृष्टा किं क्व गता किं आह उवाच (आहेत्युवाचेत्यर्थे अव्ययम्) कथय' इति पृच्छामि । एषः वकुलतरुः मे अपिवक्ष्यति कथयिष्यति किम् । शार्दू ..॥ १६ ॥

**चन्द्रहासेन** असिना । 'चन्द्रहासोसिमात्रके । दशग्रीवकृपाणे च' इति हैमः । **जानक्यामिति** ॥ उन्मत्त इव पित्तविकृतिं गत इव ॥ १७ ॥

**अगणितप्रायः** अगणितः प्रायः स्वसमानः येन सः । 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः' इति विश्वः । **क्षितीति** ॥ क्षितिधर हे पर्वत त्वं कथय सा जानकी क्व याता गता । न कथयसि यदि । त्वां बाणैः चूर्णयिष्यामि ।

त्वयि विफलितवेगो दीर्घकालादमर्षी
किरतु दिशि भवन्तं केवलं चण्डवातः ॥ १८ ॥

**दशाननः—**

कथयिष्यति वैदेहीं कथमेष धराधरः ।
वज्रकल्पं तलाघातं मम जानन्नपि स्वयम् ॥ १९ ॥

**रामः**—कथमसौ न चलति । भवतु । गिरिनदीं पृच्छामि ।

उत्सङ्गं भवती गिरेरधिवसत्यद्यापि नन्वापगे
किं त्वं दृष्टवती तथा मम वधूमुत्सङ्गवासप्रियाम् ।
उन्निद्राम्बुजलोचना त्वमिव या कोकाभिरामस्तनी
धत्ते षट्पदजालनीलचिकुरा सौभाग्यमत्युज्ज्वलम् ॥ २० ॥

---

ततः त्वयि विफलितवेगः कुण्ठितजवः अतएव दीर्घकालात् अमर्षी असहनः कोपवान् चण्डवातः चण्डमारुतः केवलं असहायं यथा तथा भवन्तं त्वां दिशि किरतु विकिरतु । काव्यलिङ्गमलङ्कृतिः । मालिनी वृत्तम् ॥ १८ ॥

**कथयिष्यतीति** ॥ धराधरः पर्वतः । वज्रकल्पं वज्रपतनतुल्यमित्यर्थः । तलाघातं पाणितलेन वा पादतलेन वा ताडनम् ॥ १९ ॥

**उत्सङ्गमिति** ॥ ननु हे आपगे नदि ( हे तन्वीति ध्वन्यते ) भवती त्वं अद्यापि गिरेः पर्वतस्य ( पत्युरिति ध्वन्यते ) उत्सङ्गं अधिवसति अङ्के वससि । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । तथा मम उत्सङ्गवासे प्रियां वधूं मम जायां त्वं दृष्टवती किम् । या मम वधूः त्वमिव उन्निद्राम्बुजलोचना विकचपद्मसदृशनयना नदीपक्षे उन्निद्राम्बुजान्येव लोचनानि यस्यास्सा । कोकौ चक्रवाकाविव अभिरामौ रम्यौ स्तनौ यस्यास्सा । अन्यत्र कोका एवाभिरामस्तना यस्यास्सा षट्पदजालवत् भ्रमरततिवत् अन्यत्र षट्पदजालान्येव नीलाः चिकुराः कचाः यस्यास्सा । तथाभूता च सती अत्युज्ज्वलं अत्यन्तप्रकाशं सौभाग्यं सौन्दर्यं धत्ते बिभर्ति तां मम वधूं त्वं दृष्टवती किमिति पूर्वेण सम्बन्धः । उपमा रूपकसमासोक्त्यलङ्काराः । शार्दू...॥ २० ॥

**दशाननः**—इयमपि न कथयिष्यति मत्साध्वसेन ।

**रामः**—कथमियमपि जडरूपा न कथयति ।

**सीता**—( साचिन्ताश्वासम् । )[1]को उण रक्खसावहारिदं मं अज्जउत्तस्स भणिस्सदि । जं सुणिअ सो मं सोअसाअरं तारइस्सादि ।

**अनला**—[2]हला उवरि पेक्खह्मो ।

**लक्ष्मणः**—( स्वगतम् । ) कथमार्योऽयमुन्मादेनेव गृह्यते । अहो कीदृशी गतिर्दैवस्य । ( प्रकाशम् । ) आर्य, किमेतत् । सहजं धैर्यमवलम्ब्य संस्तम्भयात्मानम् । अपि च दृश्यतामितो दक्षिणेन ।

यानन्वहं पुनरवर्धयदेणशावा-
नार्या विदेहतनया तृणपूलदानात् ।
ते दक्षिणां दिशमुदश्रु निरीक्षमाणा-
स्तस्याः प्रवृत्तिमिव नौ विनिवेदयन्ति ॥ २१ ॥

**दशाननः**—(सक्रोधम् ।) हन्तव्या एवैते मृगार्भकाः ।

(इति खड्गमादत्ते ।)

---

१. कः पुना राक्षसापहृतां मामार्यपुत्राय भणिष्यति । यच्छ्रुत्वा स मां शोकसागरं तारयिष्यति ।

२. सखि, उपरि पश्यामः ।

---

**जडरूपा** जलरूपा मूढस्वरूपा च । **संस्तम्भय** प्रकृतिस्थं कुरु । दक्षिणेन दक्षिणभागे । एनबन्तमव्ययम् । **यानिति** ॥ आर्या विदेहतनया पुनः सीता तु अन्वहं प्रतिदिनं यान् एणशावान् मृगशिशून् तृणपूलदानात् तृणपञ्चिकायादानात् 'पूलो ऽतृणपञ्चिका' इति यादवः । करिकलभकर्णावतंसादिशब्दवत्तृणपूलशब्दः प्रयुक्तः । अवर्धयत् वर्धयति स्म । ते एणशावाः उदश्रु उद्गतबाष्पं यथा तथा दक्षिणां दिशं निरीक्षमाणास्सन्तः । नौ आवयोः तस्याः प्रवृत्तिं दक्षिणदिशि यातेत्येवंरूपं वृत्तान्तं विनिवेदयन्तीव कथयन्तीव । उत्प्रेक्षालङ्कारः । वसन्ततिलका वृत्तम् ॥ २१ ॥

**महापार्श्वः**—राजन्, प्रेक्षणकमेतत्, तदलं संरम्भेण ।

**सीता**—(सास्रम् सस्नेहम् ।) [1]कहं एव्वं मह उत्तआ एव्व पुढमं अज्जउत्तस्स मह पउत्तिं णिवेदअंदि ।

**रामः**—तर्हि दक्षिणेन पथा वत्स, मृगयावहे । (इति परिक्रम्य ।) वत्स, पश्य ।

यान्यद्य जातिकुसुमानि मयार्पितानि
तस्या विदेहदुहितुश्चिकुरान्तराले ।
तान्येव सौरभविकृष्टमधुव्रतानि
पृथ्वीतले निपतितानि ततः प्रतीमः ॥ २२ ॥

**लक्ष्मणः**—केनापि ह्रियमाणाया देव्या वैदेह्याः कबरीभाराद्गलितै-र्भवितव्यमेतैः ।

**दशाननः**—हन्त हन्त । मम तस्या हरणे परिभ्रमः प्रमादमेवम-करोत् ।

**सीता**—(साश्वासम् ।) [2]णिपदिदं खु एदं तक्खणं मं ओहरंतस्स तस्स रक्खसस्स पदवीए ।

**रामः**—(कतिचित्पदानि गत्वा ।) वत्स लक्ष्मण, किमेतत् ।

---

१. कथमेवं मम पुत्रका एव प्रथममार्यपुत्रस्य मम प्रवृत्तिं निवेदयिष्यन्ति ।

२. निपतितं खल्वेतत्तत्क्षणं मामपहरतस्तस्य राक्षसस्य पदव्याः ।

---

**अर्भकाः** शिशवः । **यानीति** ॥ अद्य अस्मिन्नहनि तस्याः विदेहदुहितुः सीतायाः चिकुरान्तराले कचान्तरे यानि जातिकुसुमानि मालतीपुष्पाणि मया अर्पितानि सौरभविकृष्टमधुव्रतानि आमोदाकृष्टभृङ्गाणि तान्येव जातिकुसुमान्येव ततः चिकुरान्तरालात् पृथ्वीतले भूतले निपतितानीति प्रतीमः जानीमः । अनु-मानालङ्कारः । वसन्ततिलका वृत्तम् ॥ २२ ॥

कस्यायं भुवि सारथिर्निपतितः कुन्तापविद्धा इमे
रथ्याः कस्य खराः पिशाचवदनाः कस्यैष भग्नो रथः ।
कस्येदं मकुटं विपाटितमिदं कस्यावलूनं धनुः
कस्यैते दश काञ्चनाङ्गदभृतः पीना भुजा दारिताः ॥२३॥

**लक्ष्मणः**—(साश्चर्यम् ।) आर्य, एवमहमुत्पश्यामि—जानकीनिमित्तं द्वयोर्वीरयोः प्रवृत्तमिदमायोधनम् ।

**दशाननः**—(सरोषम् ।)

जनितो येन विघ्नोऽयं जानकीं हरतो मम ।
सम्यक्कृतैव पापस्य शिक्षा तस्य जटायुषः ॥ २४ ॥

**सीता**—हा ताद पक्खिराअ, एव्वं मं मंदभाइणिं रक्खंतो वि ण खु धम्मस्स फलं पाविदोसि ।

**अनला**—बलवंतो खु दसग्गीवोत्ति तिहुवणवीरसंवादो । ता किं करेह्म ।

**रामः**—वत्स लक्ष्मण, धनुर्धनुः । (इति ससंभ्रमं परिक्रामति ।)

**लक्ष्मणः**—किमिदमकाण्डे पृच्छति मामार्यः । (इत्यनुव्रजति ।)

---

१. हा तात पक्षिराज, एवं मां मन्दभागिनीं रक्षन्नपि न खलु धर्मस्य फलं प्रापितोऽसि ।

२. ननु बलवान् खलु दशग्रीव इति त्रिभुवनवीरसंवादः । तत्किं कुर्मः ।

---

**प्रमादं** अनवधानताम् । **पदव्यां** मार्गे । **कस्येति** ॥ कुन्तापविद्धाः प्रासेन च्छिद्रिताः । रथं वहन्तीति रथ्याः । खराः गर्दभाः । मकुटं किरीटं विपाटितं विदारितम् । अवलूनं छिन्नम् । काञ्चनाङ्गदभृतः स्वर्णकेयूरधारिणः । पीनाः पीवराः । दारिताः छिन्नाः । शार्दू... ॥ २३ ॥

**आयोधनं** युद्धम् । **जनितइति** ॥ जनितः उत्पादितः । येन जटायुषा शिक्षा वधरूपः दण्डः ॥ २४ ॥

महापार्श्वः—

भ्रुकुटीभीषणमुखः हुंक्रियागर्भकंधरम् ।
त्रिलोकीमेष संरब्धो दिधक्षन्निव दृश्यते ॥ २५ ॥

दशाननः—(ससंभ्रमम् ।) तदेतस्य समक्षं परिहृत्य वर्तितव्यमस्माभिः । किमस्य कृपणस्य प्रतियोधनेन कीर्तिः स्यात् । (इत्युत्तिष्ठति ।)

महापार्श्वः—राजन्, प्रेक्षणकमेतत् । तदुपविश्यताम् ।

सीता—कीस एदस्स संरंभो ।

रामः—

अयमवनिधराभो निःश्वसन्दीर्घदीर्घं
सुखमुकुलितनेत्रः शोणिताभ्युक्षिताङ्गः ।
द्विरद इव मृणालीं जानकीं भक्षयित्वा
पथि निवसति कश्चिद्राक्षसः पक्षिरूपः ॥ २६ ॥

तदेनं हनिष्यामि ।

---

१. कस्मादेतस्य संरम्भः ।

---

अकाण्डे अकस्मात् । भ्रुकुटीति ॥ संरब्धः कोपसम्भ्रमयुतः अतएव हुंक्रिया हुङ्कारः गर्भे अन्तर्यस्यास्सा कन्धरा कण्ठः यस्मिन् कर्मणि तद्यथा तथा भ्रुकुट्या भ्रूभङ्गेन भीषणमुखः एषः रामः त्रयाणां लोकानां समाहारस्त्रिलोकी तां दिधक्षन् दग्धुमिच्छन्निव दृश्यते ॥ २५ ॥

समक्षं आभिमुख्यम् । कृपणस्य अल्पस्य । प्रतियोधनं प्रतियुद्धम् । अयमिति ॥ अवनिधरस्य पर्वतस्येवाभा यस्य सः अवनिधराभः पर्वततुल्य इत्यर्थः । पक्षिरूपः कश्चिद्राक्षसः अयम् । द्विरदः गजः मृणालीमिव बिसलतामिव जानकीं भक्षयित्वा दीर्घदीर्घं अत्यायतं यथा तथा निश्वसन् सुखेन मुकुलितनेत्रः निमीलितनयनः शोणिताभ्युक्षिताङ्गः रक्तालिप्तगात्रश्च सन् पथि मार्गे निवसति । मालिनी वृत्तम् ॥ २६ ॥

**दशाननः**—(सामर्षम्।)

केनेयं भक्षिता सीता रक्षसा मन्मनःप्रिया।
करालः करवालो मे कस्य कण्ठे पतिष्यति ॥ २७ ॥

**महापार्श्वः**—किं विस्मृतं देवेन। नन्वियमशोकवनिकायां निरुध्यते।

**सीता**—अहं ण केण वि रक्खसेण भक्खिद ह्मि। किंदु अज्जउत्तस्स विप्पओअसोअं अणुभविदुं अज्ज वि जीविदं धारेमि।

**लक्ष्मणः**—(पुरोऽवलोक्य।) आर्य, अलं संरम्भेण। तातजटायुरिवायं प्रतिभाति।

(नेपथ्ये।)

वत्स रामभद्र।

रक्षसापहृतां सीतां विभो वयितुमुद्यतः।
हतस्तेनास्मि मां भूयो मा वधीस्त्वं जटायुषम् ॥ २८ ॥

**दशाननः**—(श्रुत्वा।)कथमेतयो राजपुत्रयोरागमनपर्यन्तमयं जरैठगृध्रः प्राणान्धारितवान्। मया खलु परित्यक्तजीवितोऽयं मत्प्रवृत्तिं न कथयिष्यति राजपुत्रयोरिति विस्रब्धं प्रस्थातुमारब्धम्।

**सीता**—(सहर्षं।) कहं तादजडाउणा रक्खसेंदहदेण वि जीवदेण साणुअस्स अज्जउत्तस्स अहं रक्खसेण ओहरिदा कहिद ह्मि। (विचिन्त्य।) ता एत्तिअं कालं मं मोचेदुं कीस विलंबेदि अज्जउत्तो।

---

१. अहं न केनापि राक्षसेन भक्षितास्मि। किं त्वार्यपुत्रस्य विप्रयोगशोकमनुभवितुमद्यापि जीवितं धारयामि।

२. कथं तातजटायुना राक्षसेन्द्रहतेनापि जीवता सानुजस्यार्यपुत्रस्याहं राक्षसेनापहृता कथितास्मि। तस्मादेतावन्तं कालं मां मोचयितुं कस्माद्विलम्बते आर्यपुत्रः।

---

**केनेति** ॥ करालः भीषणः करवालः खड्गः ॥ २७ ॥

**विप्रयोगः** विरहः। **रक्षसेति** ॥ उद्यतः उद्युक्तोऽहम्। भूयः पुनः ॥

अनला—[1]एव्वं पेक्खणए पेक्खह्म ।

लक्ष्मणः—(सहसोपसृत्य ।) हा तात शकुन्तराज, कथं त्वमेवमवस्थः संवृत्तः ।

रामः—आर्य, कथय यदि ते शक्तिरस्ति कथयितुम् । स राक्षसः कस्य पुत्रः, किं तस्य नाम, क्व वा स निवसति, किं बलं तस्य, किमर्थमपहृता सीतेति ।

दशाननः—(सधैर्यम् ।) शंसत्वस्मै सर्वमेव वृत्तान्तं शकुन्तापशदः; किं ततो बिभेति लङ्केश्वरः ।

सीता—(सोत्कण्ठम् ।) [2]ऐसो दसग्गीवबाणदलिदगत्तो किं कहइस्स दि त्ति कादरह्मि ।

(नेपथ्ये ।)

वत्स दाशरथे,

चेतो मुह्यति मे वचः स्खलति च द्रष्टुं दृशौ चाक्षमे

दशाननः—प्रियं नः प्रियं नः ।

सीता—(सकरुणम् ।) [3]ताद सउंदराअ, मण्णिमित्तं ईरिसं दसं पाविदोसि ।

रामः—तात, कथंचिद्धैर्यमवलम्ब्य कथ्यतामुपरि ।

---

१. सर्वं प्रेक्षणके पश्याव: ।

२. एष दशग्रीवबाणदलितगात्रः किं कथयिष्यतीति कातरास्मि ।

३. तात शकुन्तराज, मन्निमित्तमीदृशीं दशां प्रापितोऽसि ।

**विस्रब्धं** प्राप्तविश्वासं यथा तथा । **शकुन्तराज** पक्षिराज । **दलितं** भिन्नम् । **कातरा** भीता । **चेतइति** ॥ मे मम चेतः मनः मुह्यति मोहं गच्छति वचश्च स्खलति स्खलितं भवति दृशौ नयने च द्रष्टुं अक्षमे अशक्ते स्तः । **किं**

(पुनर्नेपथ्ये ।)

किं वक्ष्ये हरति प्रियां स महतीमास्थाय मायां तव ।

**दशाननः**—(सगर्वम् ।) किं विमोक्ष्यति ज्ञातिवधामर्षी लङ्केश्वरः ।

**सीता**—हा[1] अज्जउत्त, हा वच्छलक्खण, ण जाणीअदि तुझेहिं एदं असरणं जाणइं रक्खस । (इत्यर्धोक्ते ।) अणले, एदं पेक्खंदीए मए सज्झससंभंदाए पुडमं परिइदाइ अक्खराइं दाणिं वि आलविदाइ ।

**अनला**—एव्वं[2] एदं ।

**रामः**—न ह्ययं रामस्य समक्षं हरति राक्षसापशदः ।

**लक्ष्मणः**—(सक्रोधावलेपम् ।)

आर्या विदेहतनयापहृतामुनेति
तातो जटायुरपि कृत्ततनुर्ब्रवीति ।
एनं द्रुतं किमसिना लवशो न कुर्यां
यद्येष चोर इव नापहरेन्निगूढम् ॥ ३० ॥

---

१. हा आर्यपुत्र, हा वत्सलक्ष्मण, न ज्ञायते युवाभ्यामेतामशरणां जानकीं राक्षसः। अनले, एतत्प्रेक्षमाणया मया साध्वससम्भ्रान्तया प्रथमं परिचितान्यक्षराणीदानीमप्यालपितानि ।

२. एवमेतत् ।

---

**वक्ष्यइति** ॥ किं वक्ष्ये किं कथयिष्यामि सुमहतीं मायां आस्थाय आश्रित्य तव प्रियां हरति ॥

**प्रेक्षमाणया** पश्यन्त्या । साध्वसेन भयेन सम्भ्रान्तया सम्भ्रमयुक्तया । आलपितानि उक्तानि । **समक्षं** सम्मुखम् । **अवलेपः** गर्वः । **आर्येति** ॥ आर्या विदेहतनया अमुना मायाविना अपहृतेति कृत्ततनुः छिन्नदेहोऽपि तातः जटायुः ब्रवीति वक्ति । एषः मायावी चोरइव निगूढं प्रच्छन्नं यथा तथा नापहरेद्यदि एनं मायाविनं राक्षसं द्रुतं शीघ्रं असिना खङ्गेन लवशः लवंलवं 'संख्यैकवचनाच्च वीप्सायां' इति शस् । न कुर्यां किम् । वसन्ततिलका वृत्तम् ॥ ३० ॥

**दशाननः**—(सस्मितम् ।)

शत्रूणां मर्मभेदेन व्यसने स्वेष्टसाधने ।
करिष्यति च कर्तव्ये किमन्यच्चतुरो जनः ॥ ११ ॥

**रामः**—तात, उपरि कथय ।

(नेपथ्ये ।)

बिन्दो नाम मुहूर्त एष सुलभं नष्टं यदस्मिन् धनं

**दशाननः**—(सावेगम् ।) अभिज्ञेनापि मया नैष विज्ञातस्तदानीं, भवतु, दैवकृतमपि यथाकालं समीकरिष्यामि पुरुषकारेण ।

**सीता**—अवि णाम एदं संभाविअदि मह मंदभाइणीए ।[1]

**लक्ष्मणः**—स एष को राक्षस इति न ज्ञायते, कथं नष्टधनस्य पुनर्लाभः ।

**रामः**—तात, पृच्छतो मम किमुत्तरम् ।

(नेपथ्ये ।)

वत्स, वक्ष्यामि सर्वं श्रूयताम् ।

पुत्रो विश्रवसो मुनेस्त्रिभुवने नाम्ना ह्ययं रावणः ॥ १९ ॥

---

१. अपि नामैतत्सम्भाव्यते मम मन्दभागिन्याः ।

---

**शत्रूणामिति** ॥ स्वेष्टसाधने चौर्येणापि सीतालाभरूपात्माभीष्टसाधने चतुरः समर्थः मादृशः जनः मर्मभेदेन सीतापहरणरूपेण आयुस्थानभेदनेन शत्रूणां युष्माकं व्यसने शोके कर्तव्ये सति अन्यत् चौर्येण सीतापहारादन्यत् किं करिष्यति ॥ चतुरः शत्रुव्यसनं येन केनाप्युपायेन रचयिष्यतीति भावः ॥ ११ ॥

**बिन्द इति** ॥ एषः सीतापहरणकालः विन्दः विन्दन्ते लभन्ते नष्टद्रव्यमस्मिन्निति विन्दः इति नाम प्रसिद्धः मुहूर्तः घटीद्वयपरिमितकालः । अस्मिन्बिन्दमुहूर्ते यद्धनं नष्टं तत्सुलभं सुखेन लब्धुं शक्यम् । अभिज्ञेनापि ज्योतिश्शास्त्रविदापि । एषः विन्दः । यथाकालं कालमनतिक्रम्य । असमं समं सम्पद्यमानं करिष्यामि समीकरिष्यामि । अविषममनुकूलं करिष्यामि । पुरुषकारेण पौरुषेण । **पुत्रइति** ॥ अयं विश्रवसः मुनेः पुत्रः त्रिभुवने नाम्ना रावणः हि रावयतीति रावण इति प्रसिद्धः । शार्दू...॥ १९ ॥

**दशाननः**—कथमुक्तमेवेदमस्मै क्षत्रबन्धवे मदीयं नाम श्यैनेय-हतकेन ।

(निःश्वस्य ।)

हन्त ।

छिन्दन्नपि कृपाणेन पक्षौ पादौ च संयुगे ।
कस्मादस्य विहंगस्य कण्ठं न च्छिन्नवानहम् ॥ ३२ ॥

**सीता**—(सचिन्ताश्वासम् ।) कहं णाममेत्तस्स वण्णणेण एदस्स एदेण दीवंदरे लंकाउरे आणीदं मं जाणादि अज्जउत्तो ।[1]

**रामः**—तात, शेषमपि कथय ।

**लक्ष्मणः**—(सबाष्पगद्गदम् ।) हन्त ।

व्यादाय चञ्चूपुटमेष मुञ्चन् समांसमास्रं परिवर्तिताक्षः ।
भूमौ लुठन्मूर्तिरपादपक्षस्तातो जटायुस्त्यजतीव जीवम् ॥ ३३ ॥

**रामः**—(सातङ्कम् ।) कथं कथितशेषमकथयन्नेव तातजटायुर्जीवितं जहाति । (उपसृत्य ।) हा तात, हा तातपाददशरथप्रियसख, हा पञ्च-वटीनिवासप्रशंसावहसाहायक, हा गरुडाग्रजकुलप्रदीप ।

---

१. कथं नाममात्रस्य वर्णनेनैतस्यैतेन द्वीपान्तरे लङ्कापुरे आनीतां मां जानात्यार्यपुत्रः ।

---

**श्यैनेयः** श्येनीपुत्रः जटायुः । **छिन्दन्निति** ॥ संयुगे युद्धे अहं कृपाणेन असिना अस्य विहङ्गमस्य पक्षिणः पक्षौ पादौ च छिन्दन्नपि कस्मात् कण्ठं न च्छिन्नवान् । कण्ठच्छेदे सत्युक्तिर्न भवेदिति भावः ॥ ३२ ॥

**सचिन्तेति** ॥ रामः कथं जानीयादत्र स्थितां मामिति चिन्ता तया श्वासः तत्सहितं यथा तथा । **सबाष्पेति** ॥ बाष्पेण अश्रुणा गद्गदेन अस्पष्टवचनेन च सहितम् । **व्यादायेति** ॥ अपादपक्षः पादपक्षरहितः एष तातो जटायुः चञ्चूपुटं पुटसदृशकोटिं व्यादाय व्यात्तं कृत्वा समांसं आस्रं रक्तं मुञ्चन् परिवर्तिताक्षः परिभ्रान्तनेत्रः भूमौ लुठन्मूर्तिः विलुठच्छरीरश्च सन् जीवं प्राणं त्यजतीव वृत्तमुपजातिः ॥ ३३ ॥

**सातङ्कम्** ससन्तापम् । **जहाति** त्यजति । **पञ्चवटीति** ॥ मम पञ्चव-

राज्यभ्रंशाद्विप्रणाशात्पितुर्नः
कान्तारेऽस्मिन्दारुणे नित्यवासात् ।
सीतायाश्चादर्शनादुत्थितोऽयं
शोकाम्भोधिर्वर्धते त्वत्क्षयेण ॥ ३४ ॥

**महापार्श्वः**—राजन्, भवानेव निमित्तमस्य सर्वस्यापि शोकस्य ।

**दशाननः**—किं न विदितमिदममात्येन ।

**महापार्श्वः**—कथय कथय ।

**दशाननः**—

सुबाहुमारीचकरालघाताद्वधात्त्रिमूर्ध्नश्च तथा खरस्य ।
महत्तरो मेऽजनि लक्ष्मणेन स्वसुर्विरूपीकरणेन शोकः ॥ ३५ ॥

( ससंरम्भम् ।) तदिदानीम् ।

मत्खड्गहृतमूर्ध्नोऽस्य सौमित्रेः कण्ठरन्ध्रतः ।
निर्यद्धमधमाकृत्य रक्तं शूर्पणखा पिबेत् ॥ ३६ ॥

त्यां निवासे प्रशंसावहं श्लाघनीयं ( सहायस्य कर्म भावो वा ) साहायकं यस्य तस्य सम्बुद्धिः । गरुडेति अरुणवंशदीप । राज्येति ॥ विप्रणाशात् मरणात् । कान्तारे महारण्ये । दारुणे भीषणे । उत्थितः उत्पन्नः शोकएवाम्भोधिस्समुद्रः । तव क्षयेण नाशेन वर्धते । शालिनी वृत्तम् ॥ ३४ ॥

**सुबाह्विति** ॥ घातात् वधात् । त्रिमूर्ध्नः त्रिशिरसः । द्वित्रिभ्यां षाङ्मूर्ध्नस्विति निर्देशेन समासान्तविधेरनित्यत्वात् द्वित्रिभ्यांषमूर्ध्न इति समासान्तष्षप्रत्ययो न । महत्तरः अत्यन्तमधिकः । अजनि उत्पादितः । स्वसुः भगिन्याश्शूर्पणखायाः विरूपीकरणेन विकृतरूपवत्त्वकरणेन । उपेन्द्रवज्रा वृत्तम् ॥ ३५ ॥

**मदिति** ॥ मम खड्गेन हृतः छिन्नः मूर्धा शिरः यस्य तस्य अस्य सौमित्रेः कण्ठरन्ध्रतः गळद्वारात् धमधमाकृत्य धमधमेति शब्दं कृत्वा । 'अनुकरणञ्चानितिपरम्' इति गतित्वाल्ल्यप् । निर्यत् निर्गच्छत् रक्तं शूर्पणखा पिबेत् पिबतु ॥

(इति खड्गपाणिरुत्तिष्ठति ।)

**महापार्श्वः**—राजन्, प्रेक्षणकमेतत् । (इति निवारयति ।)

**सीता**—(सशोकम् ।) [1]हंत इमिणा मह हरणं, एदस्स रावणो त्ति णाममेत्तं कहिअ तादजडाउणा पाणा विमुक्का । ण उण इमिणा अस्स लंकाउरं ठाणं त्ति कहिदं, ता किं करिस्सं मंदभाइणी ।

**लक्ष्मणः**—आर्य, नायं शोकावसरः, उपलब्धव्या खलु शत्रोरव-स्थानभूमिः ।

**रामः**—(सक्रोधम् ।)

यदि व्रजति जानकीमपहरन् पुरं वासुके-
यदि त्रिदशधाम वा यदि पुरद्विषो वान्तिकम् ।
तमेष रजनीचरं मम शरश्च्युतः कार्मुका-
द्ग्रहीष्यति न चर्वितुं किमुरगं गरुत्मानिव ॥ ३७ ॥

**दशाननः**—(सासूयम् ।) रे रे क्षत्रियडिम्भ, वृथा किं विकत्थसे, न जानासि वित्रासितवृत्रारिप्रमुखदिक्पालकुलस्य लङ्केश्वरस्य प्रतापम् ।

**सीता**—(सहर्षम् ।) [2]कीस विलंबीअदि एत्तिअं कालं अज्जउत्तेण । (सशोकम् ।) हला अणले, पेक्खणअं खु एदं ता मण्णे तस्सिं अण-

---

१. हन्तामुना मम हरणं, एतस्य रावण इति नाममात्रं कथयित्वा तातजटायुना प्राणा विमुक्ताः । न पुनरमुनास्य लङ्कापुरं स्थानमिति कथितं तस्मात्किं करिष्यामि मन्दभागिनी ।

२. कस्माद्विलम्ब्यते एतावान् काल आर्यपुत्रेण । सखि अनले, प्रेक्षणकं खल्वे-

---

**यदीति** ॥ जानकीं अपहरन्रावणः वासुकेः सर्पराजस्य पुरं व्रजति यदि त्रिदशधाम स्वर्गं वा व्रजति यदि अथवा पुरद्विषः पुरारेः अन्तिकं समीपं व्रजति यदि । तं रजनीचरं मम कार्मुकात् धनुषः च्युतः गलितः एषः शरः गरुत्मान् गरुडः उरगं सर्पमिव चर्वितुं अत्तुं न ग्रहीष्यति किम् । पृथ्वी वृत्तम् ॥ ३७ ॥

**डिंभ** शिशो । **विकत्थसे** आत्मानं श्लाघसे । **वित्रासितेति** ॥ बिभीषितशक्रादिदिक्पालगणस्य । **अनभिज्ञातकैतवे** अज्ञातराक्षसमाये । **अत्याहितं**

भिण्णादकेदवे महापुरुसे माआविणा इमिणा रक्खसाहमेण किं वि अच्चाहिदं किदं हवे ।

अनला—हैला, मरिसेहि क्खणमेत्तं उवरि वि पेक्खह्म ।

लक्ष्मणः—आर्य, प्रसीद प्रसीद ।

अस्मिन् क्षणे यदि शरं क्षिपसीह तिष्ठ-
न्हन्यात्तदेकमतिदुर्विषहागसं तम् ।
तं बन्धुमित्रचतुरङ्गबलैः समेतं
हन्तुं यतस्व परथा न तु वैरशान्तिः ॥ ३८ ॥

किंच ।

यद्यराक्षसमित्येकं शरं जगति मुञ्चसि ।
स्त्रीबालवृद्धान् साधूंश्च हन्यादेष निशाचरान् ॥ ३९ ॥

तत्त्वनुचितमेव दीनजनशरण्यस्य देवस्य ।

दशाननः—श्रुतं किमस्य जाल्मस्य वचनममात्येन ।

---

तत् । तस्मान्मन्ये तास्मिन्ननभिज्ञातकैतवे महापुरुषे मायाविनामुना राक्षसाधमेग किमप्यत्याहितं कृतं भवेत् ।

१. सखि, मर्षय क्षणमात्रमुपर्यपि द्रक्ष्यावः ।

---

महाभीतिकरकर्मेत्यर्थः । **मर्षय** सहस्व । **अस्मिन्निति** ॥ हे आर्य इह तिष्ठन् अस्मिन् क्षणे शरं क्षिपसि अस्यसि यदि । तदा शरः अतिदुर्विषहागसं अत्यन्तदुस्सहापराधं तं एकं रावणं हन्यात् । तं बन्धुभिः मित्रैः रथगजतुरगपातिरूपचतुरङ्गबलैश्च समेतं सहितं हन्तुं यतस्व प्रयत्नं कुरु परथा अन्यथा तु वैरस्य शान्तिः शमनं नास्ति । वसन्ततिलका वृत्तम् ॥ ३८ ॥

**यदीति** ॥ अराक्षसं राक्षसाभावः (अव्ययीभावः) यद्वा जगत् अराक्षसं राक्षसहीनं अस्त्विति मत्वा एकं शरं जगति मुञ्चसि यदि एषः शरः स्त्रीबालवृद्धान् साधून्निशाचरांश्च हन्यात् ॥ ३९ ॥

दीनजनानां अनाथजनानां शरण्यस्य शरणे रक्षणे साधोः । **जाल्मस्य**

**महापार्श्वः**—एवमेवैष मन्यते। भवतु। को दोषः।

**दशाननः**—एष खलु।

न वेत्ति मे बलं तस्मादित्थं जाल्मो विकत्थते।
इमौ शराग्निभिर्धक्ष्याम्युल्काभिरिव कुञ्जरौ॥ ४०॥

**सीता**—[1]वच्च लक्खण, साहु भणिदं तुए, सरिसी खु एसा सिक्खा एव्वं अवराहिणो रक्खसस्स।

**रामः**—तर्हि किमतः क्रियताम्।

**लक्ष्मणः**—दक्षिणा दिगाक्रम्यतामार्यापहारिणः प्रवृत्त्युपलम्भाय।

**रामः**—तर्हि तातजटायुरेष गिरिनदीतीरं नीत्वा संस्क्रियतां वत्सेन।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः। (इति निष्क्रान्तः।)

**रामः**—(सानुस्मरणम्।)

स्नेहाद्दतेन मनसा जनितानि तस्याः
संजल्पितान्यनुवनं च विचेष्टितानि।
हा कष्टमद्य मम चिन्तयदन्तरङ्गं
शोकेन दह्यत इदं प्रलयाग्निनेव॥ ४१॥

(इति मुहुः पठन् परिक्रामति।)

---

१. वत्स लक्ष्मण, साधु भणितं त्वया, सदृशी खल्वेषा शिक्षैवमपराधिनो राक्षसस्य।

---

असमीक्ष्यकारिणः। **नेति**॥ एषः जाल्मः मे बलं न वेत्ति तस्मात् इत्थं विकत्थते आत्मानं प्रशंसति। इमौ रामलक्ष्मणौ शराग्निभिः उल्काभिः उल्मुकैः कुञ्जरौ गजाविव धक्ष्यामि भस्मीकरिष्यामि॥ ४०॥

**स्नेहादिति**॥ अनुवनं प्रतिवनं स्नेहेन आदृतेन कृतादरेण मनसा जनितानि तस्याः सीतायाः सञ्जल्पितानि सम्भाषणानि विचेष्टितानि चेष्टाश्च अद्य चिन्तयत् मम यदन्तरङ्गं अन्तःकरणं अस्ति तादिदं प्रलयाग्निनेव स्थितेन शोकेन दह्यते। हा कष्टम्। वसन्ततिलका वृत्तम्॥ ४१॥

(नेपथ्ये ।)

तातं गृध्रपतिं तटेऽद्रिसरितः संस्कृत्य शास्त्राध्वना
मां प्रत्यागतमेष कर्षति समं सत्त्वैररण्योद्भवैः ।

**रामः**—कथं लक्ष्मणः क्रोशति । (साश्चर्यम् ।) वत्स, क एष कर्षति भवन्तमपि ।

**महापार्श्वः**—देवसंदेशानुरोधेन वनपथस्थितो दनुकबन्धः कर्षति लक्ष्मणमिति मे तर्कः ।

**दशाननः**—युज्यत एतत् । (सहर्षम् ।) कर्षतु भक्षयितुम् ।

**सीता**—(सोद्वेगम् ।) को एसो लक्खणं करिसदि ।

(नेपथ्ये । लक्ष्मणः ।)

बाहुभ्यां कलशाब्धिमन्थशिखरिस्थूलायताभ्यामहो
कुक्षिस्थैककराललोचनमुखः कश्चित्कबन्धाकृतिः ॥ ४१ ॥

**रामः**—अहो प्रमादः । तदुपसर्पामि ।

(नेपथ्ये ।)

कस्त्वं राजन्यकुमार इव दृश्यसे । दिष्ट्या खलु प्रदिष्टोऽसि मम भक्षणार्थं भगवता दिष्टेन ।

**रामः**—(श्रुत्वा त्वरितं परिक्रम्यावलोक्य ।) कथं वत्सेन हत एष राक्षसः । यदिदानीम् ।

---

१. क एष लक्ष्मणं कर्षति ।

---

**तातमिति** ॥ तातं पितृतुल्यं गृध्रपतिं जटायुषं अद्रिसरितः गिरिनद्याः तटे शास्त्राध्वना शास्त्रमार्गेण यथाशास्त्रं संस्कृत्य दग्ध्वा प्रत्यागतं मां एषः अरण्योद्भवैः सत्वैस्समं प्राणिभिस्सह कर्षति । **बाहुभ्यामिति** ॥ कुक्षिस्थं उदरस्थितं एकं करालं भयङ्करं लोचनं नयनं यस्य तन्मुखं यस्य सः कबन्धाकृतिः अपमूर्धशरीराकृतिः कश्चित् कलशाब्धेः क्षीरसमुद्रस्य मन्थशिखरी मन्थानाचलः मन्दरः तद्वत् स्थूलौ विपुलौ आयतौ दीर्घौ च ताभ्यां बाहुभ्यां कर्षतीति पूर्वेण सम्बन्धः । अहो हन्त । शार्दू... ॥ ४२ ॥

असिविदलितयोजनायामबाहुद्वये राक्षसे
पतति रुधिरवर्षुकस्कन्धबन्धे कबन्धाकृतौ।
वपुषि विहितलक्षणो लक्ष्मणोऽयं जयश्रीघन-
स्तनघुसृणकणैरिवासृक्पृषद्भिः समभ्येति माम्॥ ४२॥

**दशाननः**—(सशोकाश्चर्यम्।) कथं स दनुकबन्धोऽपि हतो वीरवटुना, य एतद्वटुद्वयवधाय मध्येवनपथं मया स्थापितः।

**सीता**—(सहर्षम्।) वच्छ दिट्ठिआ मुच्चुमुहादो मुक्को सि।

(प्रविश्य।)

**लक्ष्मणः**—(आकाशे लक्ष्यं बद्ध्वा।) किं ब्रवीत्यार्य प्रत्यशरीरिणी वाणी—'शृणु रामभद्र वक्ष्यामि ते तत्कर्म यज्जानकीलाभविपक्षविजययोरौपयिकम्' इति।

(रामः सादरं शृणोति।)

**लक्ष्मणः**—भूयः किं ब्रवीति।
"सुग्रीवं कपिवरमृश्यमूकशृङ्गे
तिष्ठन्तं सह सचिवैश्चतुर्भिरेव।

१. वत्स, दिष्ट्या मृत्युमुखान्मुक्तोऽसि।

**प्रदिष्टः** दत्तः। **दिष्टेन** दैवेन। **असीति**॥ असिना खड्गेन विदलितं भिन्नम्। योजनायामं गव्यूतिद्वयदैर्घ्यं बाहुद्वयं यस्य तस्मिन्। रुधिरवर्षुकः रक्तं वर्षन् स्कन्धबन्धः अंससन्धिर्यस्य तस्मिन्। कबन्धाकृतौ अपमूर्धाकारे राक्षसे पतति सति। जयश्रियः जयलक्ष्म्याः घनैस्सान्द्रैः स्तनघुसृणकणैः कुचकुङ्कुमलवैरिव स्थितैः असृक्पृषद्भिः रक्तबिन्दुभिः वपुषि शरीरे विहितलक्षणः कृतचिह्नः अयं लक्ष्मणः मां समभ्येति समुपैति। निशा वृत्तम्॥ ४३॥

**मध्येवनपथं** वनपथस्य मध्ये। **विपक्षः** शत्रुः। **औपयिकं** उपयन्त्यनेनेत्युपायः उपाय एव औपयिकं युक्तम्। 'उपायाद्धस्वश्च' इति ठक् ह्रस्वश्च। **सुग्रीवमिति**॥ चतुर्भिः सचिवैस्सह ऋश्यमूकस्य तदाख्यगिरेः शृङ्गे शिखरे तिष्ठन्तं कपिवरं सुग्रीवं प्रियसखं प्रियसुहृदं सम्प्राप्य। अग्रजस्य तज्ज्येष्ठस्य वा-

संप्राप्य प्रियसखमग्रजस्य राज्यं
तस्मै चेद्वितरसि वालिनः कृती स्याः ॥ ४४ ॥

अपि च ।

शापेन स्थूलशिरसो मुनेरासं निशाचरः ।
तस्मान्मां मोचितवतोर्वाङ्मे वां प्रत्युपक्रिया ॥ ४५ ॥

इति । कथं कबन्ध एव त्यक्तदेहो दिव्यो भूत्वा कथयति ।

**दशाननः**—(सासूयम् ।) कथं दनुकबन्धोऽपि मत्पक्षमुत्सृज्य परपक्षं प्रविष्टः ।

**महापार्श्वः**—नन्वप्रविष्ट एवायं यावद्देहबन्धनम् ।

**सीता**—[1]दिट्ठिआ उवकिदं परिच्चत्तदेहेण रक्खसेण ।

**दशाननः**—महापार्श्व असंभावितमेतत् यत्किल वालिनो राज्ये सुग्रीवस्य प्रतिष्ठापनम् । कुतः ।

भार्गवस्य त्रिशिरसः खरदूषणयोरपि ।
विजेताप्येष दुर्धर्षं वालिनं न विजेष्यते ॥ ४६ ॥

---

१. दिष्ट्योपकृतं परित्यक्तदेहेन राक्षसेन ।

---

लिनः राज्यं तस्मै सुग्रीवाय वितरसि ददासि चेत् कृती कृतमनेनेति कृती कुशलवान् स्याः भवेः । प्रहर्षिणी वृत्तम् ॥ ४४ ॥

**शापेनेति** ॥ स्थूलशिरसः घोरं रूपमास्थाय मया धर्षितात्तदाख्यात् मुनेश्शापेन ( दनुपुत्रो गन्धर्वोऽहं) निशाचरः आसम् । तस्माच्छापात् मां मोचितवतोः वां युवयोः मे मम वाक् प्रत्युपक्रिया । सुग्रीवं मित्रं कुर्वित्यादिवचनमेव प्रत्युपकारः ॥ ४५ ॥

**यावद्देहबन्धनं** देहस्थितिपर्यन्तम् । **भार्गवस्येति** ॥ एषः रामः दुर्धर्षं अभिभवितुमशक्यम् ॥ ४६ ॥

ततः क्षत्रियकुमारयोरनयोर्वधनिमित्तं वालिनः प्रेरणं सिद्धान्तितं मन्त्रिजनैः । पश्य पश्य ।

यः प्राग्दक्षिणपश्चिमेषु जलधिष्वप्येकमात्रे क्षणे
संसर्पन्वितनोति चण्डरुचये सांध्यं तदर्घ्यत्रयम् ।
हत्वा दुन्दुभिमाहवे गिरिनिभं दोर्भ्यां क्षिपन्योजने
नैतस्यास्ति समो बलीति निखिलैर्भूतैः स्तुतश्चाजनि ॥४७॥

**महापार्श्वः**—(स्वगतम् ।) एतस्य विजयाशंसा सर्वापि वालिनि परिसमाप्यते । वालिनो वधेऽपि विदिते किं करिष्यति न जाने । (प्रकाशम् ।) राजन्, एवमेवैतत् ।

**रामः**—(आकाशे ।) अनुगृहीतावावामत्रभवता । अथेदानीं यथाभिलषितं दिव्यं पदमुपगन्तव्यमार्येण । किं ब्रवीति पुनरार्यः । 'अनेन पम्पानदीतटपथेन ऋश्यमूकं प्रति प्रस्थातव्यम्' इति । तथा कुर्मः ।

(इत्युभौ परिक्रामतः ।)

**दशाननः**—(साशङ्कम् ।) महापार्श्व, कथं सुग्रीवेण सख्यं भवेदस्य मिथ्यातापसस्य ।

**महापार्श्वः**—असंभावितमेवेदम् ।

**सिद्धान्तितं** राद्धान्तितं निश्चितम् । **यइति** ॥ यः वाली एकमात्रेपि एकस्मिन्नेव क्षणे प्राग्दक्षिणपश्चिमेषु जलधिषु संसर्पन् गच्छन् सन् चण्डरुचये सूर्याय तत् सन्ध्यायां भवं सान्ध्यं अर्घ्यत्रयं वितनोति करोति ददातीत्यर्थः । आहवे युद्धे गिरिनिभं पर्वततुल्यं दुन्दुभिं तदाख्यासुरं हत्वा दोर्भ्यां बाहुभ्यां योजने गव्यूतिद्वये क्षिपन् अस्यन् अतएव एतस्य वालिनः समः बली नास्तीति निखिलैः समस्तैः भूतैः प्राणिभिः स्तुतश्च अजनि अभूत् । शार्दू... ॥ ४७ ॥

**दशाननः**—(सधैर्यावष्टम्भम् ।)

सहस्रं सन्तु सुग्रीवाः सहस्रं सन्तु राघवाः ।
वालिनं विक्रमाम्भोधिं नातिलङ्घितुमीशते ॥ ४८ ॥

**महापार्श्वः**—(स्वगतम् ।) एवं खलु तत्त्वानभिज्ञो देवः । किं कुर्वन्तु बालिशे राजनि मन्त्रिजनाः । (प्रकाशम् ।) सर्वं प्रेक्षणके व्यक्तं भविष्यति ।

**सीता**—(सानुस्मरणम् ।) [१]मं गण्हीअ गगणद्दले धावन्तस्स रक्खसस्स अंकगदाए मए कस्सिं वि पव्वदसिहरे णं पञ्च साहामिआ दिट्ठा । अवि णाम देसु एक्कतमो सुग्गीवो हवे ।

**अनला**—[२]किं ति ताणं एक्को वि तुए ण सरणीकिदो ।

**सीता**—[३]कहं एदं संभाविअदि । धावइ खु रक्खसो मं गण्हीअ पवणादो वि अहिअवेओ ।

**लक्ष्मणः**—(पुरो निर्दिशन् ।) इदमेव पम्पासरः ।

अस्योपान्ते मृगखुरपुटक्लिष्टमन्दारपुष्प-
च्योतन्माध्वीरसशिशिरया देव यावः पदव्या ।

१. मां गृहीत्वा गगनस्थले धावतो राक्षसस्याङ्कगतया मया कस्मिन्नपि पर्वतशिखरे ननु पञ्च शाखामृगा दृष्टाः । अपि नाम तेष्वेकतमः सुग्रीवो भवेत् ।

२. किमिति तेषामेकोऽपि त्वया न शरणीकृतः ।

३. कथमेतत् सम्भाव्यते । धावति खलु राक्षसो मां गृहीत्वा, पवनादप्यधिकवेगः ।

आशंसा प्रार्थना । वालिन परिसमाप्यते परिनिष्ठिता क्रियते । **सहस्रमिति** ॥ विक्रमाम्भोधिं पराक्रमसमुद्रं अतिलङ्घितुं तरितुं न ईशते न शक्नुवन्ति ॥

**बालिशे** मूढे । **शरणीकृतः** रक्षकः कृतः । **अस्येति** ॥ देव प्रभो राम अस्य पम्पासरसः उपान्ते समीपे मृगाणां खुरपुटैः शफपुटैः क्लिष्टेभ्यः मर्दितेभ्यः मन्दारपुष्पेभ्यः श्च्योतता क्षरता माध्वीरसेन मकरन्देन शिशिरया शीतल-

वातश्चूतक्रमुकपनसच्छायरुद्धातपायां
यस्यामन्तश्चरति मुषितासन्नपुंनागगन्धः ॥ ४९ ॥

**दशाननः**—रमणीयः खल्वयं स पम्पातटवनोद्देशः ।

**सीता**—(सोद्वेगम् ।) अणले, इमं पंपातटोद्देसं रमणिज्जं दठ्ठूण अज्जउत्तेण किं पडिवण्णं त्ति ण जाणीअदि ।

**अनला**—सव्वं पेक्खणए विण्णादं हविस्सदि ।

**रामः**—(विलोक्य ।) अस्यां किल पम्पायाम् ।

उत्खातार्पितया मृणाललतया तृप्तिं प्रियाया विद-
न्मातङ्गो निजपुष्करेण सलिलं संक्रामयत्यानने ।

(विचिन्त्य ।) हा कथं सा जानकी मामन्तरेण स्थास्यति ।

(इत्यश्रूणि वर्तयति ।)

**दशाननः**—यावल्लङ्केश्वरप्रसादं तावदेषा राक्षसीभिः सुरक्षिता तिष्ठति ।

१. अनले, इम पम्पातटोद्देशं रमणीयं दृष्ट्वा, आर्यपुत्रेण किं प्रतिपन्नमिति न ज्ञायते ।

२. सर्वं प्रेक्षणके विज्ञातं भविष्यति ।

---

या पदव्या मार्गेण यावः गच्छावः चूतक्रमुकपनसानां छाया चूतक्रमुकपनसच्छायं तेन रुद्धः प्रतिबद्धः आतपः यस्यां तस्याम् । यस्यां पदव्यां अन्तर्मध्ये मुषितः अपहृतः आसन्नपुन्नागगन्धः समीपस्थितपुन्नागपुष्पामोदः येन तथाभूतः वातः चरति । मन्दाक्रान्ता वृत्तम् ॥ ४९ ॥

किं प्रतिपन्नम् । तद्देशस्य विरहिणां कामोद्दीपकत्वात् कीदृशमवस्थान्तरमधिगतम् । **उत्खातेति** ॥ उत्खातया पूर्वमुत्पाटितया पश्चादर्पितया मृणाललतया बिसलतया प्रियायाः सहचर्याः तृप्तिं विदन् जानन् मातङ्गः गजः निजपुष्करेण स्वशुण्डया आनने प्रियामुखे सलिलं जलं संक्रामयति प्रवेशयति । मामन्तरेण मां विना । **वर्तयति** प्रवर्तयति मुञ्चतीत्यर्थः । **अवस्थानं** स्थितिः । **शल्यं** शङ्कुः ।

**सीता**—(सास्रम् ।) अणले, अज्जउत्तस्स असंणिहाणे वि मह जीवंदीए अवत्थाणं होदि त्ति हिअअसल्लं खु एदं ।

**रामः**—(अश्रूणि प्रमृज्य ।)

हंसानामधिरोहतां प्रणयिनीराधूतपक्षच्छदै-
रुद्भ्रान्तभ्रमराम्बुजा कमलिनीकाण्डावली कम्पते ॥ ५० ॥

हा प्रिये जानकि, (इति मूर्च्छति ।)

**दशाननः**—(ससंशयम् ) मूर्च्छितोऽपि किमयं पुनरुत्थास्यति, उताहो नपुनरुत्थानाय भवेदस्य मूर्च्छा ।

**सीता**—हद्धी । एव्वं विरहितस्स प्पिअजणस्स अवत्थंदरेण दंसिदह्मि देव्वहदएण । (इति सातंका तिष्ठति ।)

**लक्ष्मणः**—आर्य समाश्वासिहि ।

तस्याश्चोरे विदिते तस्य च नामनि तथा जयोपाये ।
सुकरे शल्योद्धरणे कुतो विमोहो विचारो वा ॥ ५१ ॥

---

१. अनले, आर्यपुत्रस्यासन्निधानेऽपि मम जीवन्त्या अवस्थानं भवतीति हृदयशल्यं खल्वेतत् ।

२. हा धिक् । एवं विरहितस्य प्रियजनस्यावस्थान्तरेण दर्शितास्मि दैवहतकेन ।

---

**हंसानामिति** ॥ प्रणयिनीः प्रियाः हंसीः अधिरोहतां कामावेशेन आरोहतां हंसानां आधूतपक्षच्छदैः कम्पितगरुद्भिः उद्भ्रान्ताः उच्चलिताः भ्रमराः येभ्यस्तानि अम्बुजानि पद्मानि यस्यास्सा । कमलिनीकाण्डावली पद्मिनीनालततिः कम्पते चलति । शार्दू... ॥ ५० ॥

उताहो आहोस्वित् । **तस्याइति** ॥ तस्याः सीतायाः चोरे अपहर्तरि तस्य नामनि तथा तस्य जयोपाये सुग्रीवसख्यमूलके विजयोपाये च विदिते ज्ञाते सति सुकरे सुखेन कर्तुं शक्ये शल्यस्य शङ्कोः पीडायाः उद्धरणे उत्पाटने कुतः कस्मात् विमोहः भ्रान्तिः मूर्च्छा वा विचारः चिन्ता वा जायत इति शेषः ॥ ५१ ॥

**रामः**—(समाश्वस्य ।) वत्स, कियद्दूरगतोऽयमृश्यमूकः ।

**लक्ष्मणः**—आर्य कश्चिदयमविदूरे भिक्षुरागच्छति, तमहमेतत्पृच्छामि ।

(ततः प्रविशति भिक्षुः ।)

**भिक्षुः**—अहं किल तावेतौ राजकुमारौ भिक्षुवेषेण प्राप्तोऽस्मि ।

**दशाननः**—कथमसौ मत्प्रेरितो वाली भिक्षुवेषेणानयोर्वधार्थमागतो भवेत् ।

**सीता**—[1]अणले, अच्चाहिदं ।

**अनला**—[2]किं त्ति अत्थाणे भीदासि ।

**सीता**—[3]णं भिक्खुरूवो सो रक्खसो जह मं चोरिअवंतो तह अज्जउत्तं वि माआए मारिदुं उवट्ठिदो त्ति तक्केमि ।

**अनला**—[4]णं पेक्खणअं खु एदं, ता उवरि वि पेक्खह्म, दाणिं अलं संभमेण ।

**लक्ष्मणः**—भगवन् भिक्षो, किं जानासि ऋश्यमूकगिरिं, यत्र चतुर्भिः सचिवैः सह सुग्रीवः प्रतिवसति ।

**भिक्षुः**—(स्वगतम् ।) कथं वालिना सुग्रीववधार्थं स्वयं दुष्प्रवेशमृश्यमूकं प्रेषिताविमौ । अत एव स्वामिना ससंशयेन निर्धारणाय प्रेषितोऽस्मि । अथवा नैतदेवम् । यतः प्रसीदत्यन्तरात्मा ।

---

१. अनले, अत्याहितम् ।

२. किमित्यस्थाने भीतासि ।

३. ननु भिक्षुरूपः स राक्षसो यथा मां चोरितवान्, तथा आर्यपुत्रमपि मायया मारयितुमुपस्थित इति तर्कयामि ।

४. ननु प्रेक्षणकं खल्वेतत् तदुपर्यपि पश्यावः । इदानीमलं सम्भ्रमेण ।

(प्रकाशम् ।)

कादम्बिनीकृतोष्णीषः ककुभारण्यकङ्कटः ।
ऋश्यमूकगिरीन्द्रोऽयं निर्झरिण्यसिवल्लिकः ॥ ५२ ॥

कौ पुनर्युवाम् ।

**दशाननः**—(स्वगतम् ।) नैष वाली (प्रकाशम् ।) महापार्श्व, किं न जानाति द्वयोरनयोरेकः खरवधमहापातकी, द्वितीयस्तु शूर्पणखामुखविरूपकरणमहापराधीति ।

**सीता**—(स्वगतम् ।) ण एसो भिक्खुरूवो रक्खसो (प्रकाशम् ।) अणले, किं इमिणा ण जाणीअदि मंदभाइणीए भत्तुणो रूवधारिणी एक्का अच्चरा, अवरा ताए देवरस्स त्ति ।

**लक्ष्मणः**—

सैष दाशरथी रामो यस्याहं लक्ष्मणोऽनुजः ।
भार्या यस्य च किं ब्रूयां

**भिक्षुः**—अलं ततः परं श्रुतवानस्मि—रावणेन हृता सीतेति ।

**लक्ष्मणः**— सुग्रीवो गतिरत्र नः ॥ ५३ ॥

**भिक्षुः**—अहं हनुमान्नाम तस्य सचिवोऽस्मि । तदिदानीं दिनकरकुलप्रदीप देव, श्रूयताम् ।

---

१. नैष भिक्षुरूपो राक्षसः । अनले, किमनेन न ज्ञायते मन्दभागिन्या जानक्या भर्तृरूपधारिण्येका अप्सराः, अपरा तस्या देवरस्येति ।

---

**अन्तरात्मा** अन्तःकरणम् । **कादंबिनीति** ॥ कादम्बिन्या मेघमालया कृतोष्णीषः कलितशिरस्त्राणः ककुभारण्य अर्जुनवनमेव कङ्कटः कवच यस्य सः । निर्झरिणी गिरिनद्येव आसिवल्लिका खड्गलता यस्य सः अयं ऋश्यमूक इति गिरीन्द्रः गिरिराजः राजापि किरीटकवचखड्गधारी । रूपकालङ्कारः ॥ ५२ ॥

**तस्याः** सीतायाः देवरस्य भर्तुस्सोदरस्य लक्ष्मणस्य । **सैषइति** ॥ सः, एष इत्यत्र 'सोचिलोपे चेत्पादपूरणम्' इत्यनेन सुलोपः । गतिः शरणम् ॥५३॥

वालिनास्य हृता भार्या हत्वा तं यदि दास्यते ।
सगणं रावणं हत्वा सोऽपि दास्यति ते प्रियाम् ॥ ५४ ॥

यदयमग्रजस्य राज्ञो दण्डचक्रमर्बुदकोटिसहस्रसंख्याकमीशिष्यते ।

**दशाननः**—(सक्रोधम् ।) किमुच्यते भिक्षुहतकेन, क मे चन्द्रहासः।

आदौ भिक्षुमिमं हत्वा हनिष्यामि ततः परम् ।
सुग्रीवमृश्यमूकस्थं सममन्यैश्च मन्त्रिभिः ॥ ५५ ॥

(विचिन्त्य ।) कथमस्थाने मम संरम्भः । ननु क्षत्रियवटुवधाय प्रहितो वाली तत्सुहृदोऽपि हनिष्यत्येतान् ।

**महापार्श्वः**—युक्तमुक्तं स्वामिना ।

**सीता**—(सहर्षम् ।) सुशीलित एदं परप्परक्कमं लक्खीअदि[1] ।

**रामः**—अस्त्वेवम् । तर्हि ऋश्यमूकमुपगच्छाम. ।

(इति सर्वे परिक्रामन्ति ।)

**रामः**—किमिदं मार्गनिरोधकमद्रिकूटमिवोन्नतमस्थिकदम्बं दृश्यते।

**हनूमान्**—वालिहतविक्षिप्तो दुन्दुभेरयमस्थिशेषः ।

**रामः**—तदेनमुदस्यामि गमनाय । (इत्युत्क्षेपणं नाटयति ।)

**लक्ष्मणः**—(साश्चर्यम् ।) कथमार्यः पादाङ्गुष्ठेन दूरतो दशयोजनमस्थिकूटं विक्षिपति ।

---

१. सुशीलित एतं परस्परक्रमं लक्ष्यति ।

---

**वालिनेति** ॥ अस्य सुग्रीवस्य तं वालिनम् ॥ ५४ ॥

**अयं** सुग्रीवः । अग्रजस्य राज्ञः ज्येष्ठस्य वानरराजस्य वालिनः दण्डचक्रं सैन्यबृन्दम् । अर्बुदः दशकोटयः । ईशिष्यते शासिष्यति । **चन्द्रहासः** असिः । **आदाविति** ॥ समं सह ॥ ५५ ॥

**सुशीलितः** सुष्ठु शीलं शुचिचरित्रमस्य सञ्जातमिति सुशीलितः अयं भिक्षुः एतं परस्परक्रमं वालिनेति श्लोकोक्तमन्योन्यक्रमं लक्षयति दर्शयति । अद्रिकूट गिरिशिखरम् । **अस्थिकदंबं** अस्थिसमूहः । **उदस्यामि** उत्क्षिपामि ।

**हनूमान्**—(स्वगतम् ।) महासत्त्वोऽयं राजन्यकुमारः (प्रकाशम् ।) देव दोर्भ्यामाहवावसाने योजनमात्रमुत्क्रान्तजीवितमेतदुदक्षिपद्वीरो वानरेन्द्रः ।

**रामः**—(पुरोऽवलोक्य ।) कस्य पुनरिमे करविदारितदर्शितविवरा दृश्यन्ते सालतरवः ।

**हनूमान्**—वालिन एव ।

**लक्ष्मणः**—कथमङ्गुष्ठनिष्पीडितभूमिभागसमरेखीकृतानेतानेकेन शरेण युगपदार्यो विदारयति ।

**हनूमान्**—(सहर्षम् ।) देव, पश्य पश्य । सुग्रीवोऽयमवरजो वालिनः सहैव मन्त्रिजनेन पर्वतशिखरादवतरति । तदहमेवं मन्ये ।

पादाङ्गुष्ठविकीर्णदुन्दुभितनूकङ्कालगम्याध्वना
  हेलादारितसालसप्तकशरप्रोताचलक्षोणिना ।
आर्येणातिबलेन वालिविजये संभावितप्रत्ययः
  सख्यं लब्धुमसावुपैति भवितुं राजा हरीणामपि ॥ ९६ ॥

---

अस्थिकूटं अस्थिसमूहम् । **महासत्त्वः** महाबलः । **आहवावसाने** युद्धविरामे उत्क्रान्तजीवितं गतप्राणम् । एतं दुन्दुभिम् । **करेति** ॥ पाणिनिर्भिन्नाः अतएव दर्शितरन्ध्राः । **अङ्गुष्ठेति** ॥ पादाङ्गुष्ठनिष्पीडनेन (अवनततया) भूमिभागस्य समरेखीकृतान् । एतान् सालतरून् । युगपत् एकदा । **अवरजः** अनुजः । **पादेति**॥ पादाङ्गुष्ठेन विकीर्णेन विक्षिप्तेन दुन्दुभितनूकङ्कालेन दुन्दुभिशरीरास्थ्ना गम्यः गन्तव्यः अध्वा मार्गः यस्य तेन । हेलया लीलया दारितं भिन्नं सालसप्तकं येन तेन शरेण प्रोताचलक्षोणिना प्रविद्धगिरिभूमिना । अतिबलेन आर्येण । वालिविजये सम्भावितप्रत्ययः सम्यग्भावितविश्वासः असौ सुग्रीवः सख्यं आर्यमैत्रीं लब्धुं प्राप्तुं हरीणां वानराणां राजा भवितुञ्च उपैति आर्यसमीपमागच्छतीत्यर्थः । शार्दू

**दशाननः**—(साश्चर्योद्वेगम् ।)

पादाग्रकीर्णघनदुन्दुभिदानवास्थि-
रेकेषुणा दलितसालतरुप्रपञ्चः ।
अर्कात्मजेन हरिणा स्पृहणीयसख्यो
हन्ता किमेष न भविष्यति वालिनोऽपि ॥ ५७ ॥

(विमृश्य ।)

प्रहर्ता च प्रहर्तॄणामन्तकस्यापि चान्तकः ।
शिलावर्षी रणे वाली जेतुं शक्यो न केनचित् ॥ ५८ ॥

**सीता**—[1]दिट्ठिआ अज्जउत्तस्स अस्सिं देसंदरे पवलमित्तलाहो तक्किअदि ।

**रामः**—मामसावेवमुपैति ।

(ततः प्रविशति सानुचरः सुग्रीवः ।)

**सुग्रीवः**—(साश्चर्यम् ।)

याभ्यां भीता वयमिमौ वालिना प्रहिताविति ।
तावेव मे सखीकर्तुमानीयेते हनूमता ॥ ५९ ॥

---

१. दिष्ट्या आर्यपुत्रस्यास्मिन्देशान्तरे प्रबलमित्रलाभस्तर्क्यते ।

---

**साश्चर्योद्वेगं** रामबलन्दृष्ट्वाश्चर्यं वालिनोप्यपजयं सम्भाव्योद्वेगः। **पादेति**॥ पादाग्रेण कीर्णं क्षिप्तं घनं सान्द्रं दुन्दुभिदानवस्य अस्थि येन सः । एकेन इषुणा शरेण दलितसालतरुप्रपञ्चः दारितसालवृक्षविस्तारः। अर्कात्मजेन सूर्यपुत्रेण हरिणा सुग्रीवेण स्पृहणीयसख्यः अभिलषणीयसौहृदः एषः रामः वालिनोपि (अपिशब्दा-त्त्वस्य रावणस्यापि ) हन्ता न भविष्यति किम् । वालिनमपि हनिष्यत्येवेति भावः। वसन्ततिलका वृत्तम् ॥ ५७ ॥

**प्रेति** ॥ प्रहर्ता ताडयिता अन्तकः यमः रणे युद्धे ॥ ५८ ॥

**याभ्यामिति** ॥ असखायौ सखायौ सम्पद्यमानौ कर्तुं सखीकर्तुम् ॥५९॥

**हनूमान्**—देव, सुग्रीवः प्रणमति ।

**रामः**—अपि कुशलं वयस्यस्य । (इत्यालिङ्गति ।)

**सुग्रीवः**—देव, किमितोऽप्यस्ति मे कुशलम् । यदत्रभवतो वयस्य-पदप्रयोगभाजनमहमभूवम् ।

**रामः**—सखे, किं जानासि विश्रवसः सुतं रावणम्, अपि च तस्य निवासनगरीं वा ।

**दशाननः**—किमुत्तरं ददाति सुग्रीवः । (इति शृणोति ।)

**सुग्रीवः**—नाहं किमपि जानामि ।

**महापार्श्वः**—सुग्रीवोऽपि किं न जानाति स्थितिं देवस्य ।

**दशाननः**—(विहस्य ।) श्रूयतां तर्हि सचिवेन ।

वैदेहीमुपरुध्य विभ्रमवने यत्पञ्चवट्याहृतां
प्राणी विस्मरतु स्थितिं मम विदन्नप्यामहेन्द्राद्वने ।
इत्याराधयता मया भगवतो लब्धो वरो धूर्जटे-
रस्मान्विस्मृतवानतः परिचयेऽप्येषोऽनुजो वालिनः ॥ ६० ॥

**सीता**—अणले, एसो वि वाणरप्पहू लङ्केसुरस्स प्पउत्तिं न जाणाइ । ता अज्जउत्तस्स को उण असोअवणे रक्खसीहिं उवरुद्धं मं कहइस्सदि ।

---

१. अनले, एषोऽपि वानरप्रभुर्लङ्केश्वरस्य प्रवृत्तिं न जानाति । तदार्यपुत्रस्य कः पुनरशोकवने राक्षसीभिरुपरुद्धां मां कथयिष्यति ।

---

भाजनं पात्रम् । अहं इत्यर्थः । **वैदेहीमिति** ॥ यत् यतः पञ्चवट्याः हृतां आहृतां वैदेहीं सीतां विभ्रमवने क्रीडावने उपरुध्य निरुध्य । आ महेन्द्रात् महेन्द्रपर्वतपर्यन्तं वने स्थितः प्राणी मम स्थितिं स्थानं विदन् जानन्नपि विस्मरतु न स्मरतु इति एवं फलोद्देशेन आराधयता पूजयता मया भगवतः धूर्जटेः शिवात् वरः लब्धः । अतः एषः वालिनः अनुजः परिचये सत्यपि अस्मान् विस्मृतवान् । शार्दू... ॥ ६० ॥

**अनला**—कुदो इदो दरं वि तुह ईरिसी चिंता। णं सुग्गीवभडअणो एत्थ को वि आआमिअ तुमं दट्ठूण तस्स कहइस्सदि।

**सुग्रीवः**—किं तु गगनाङ्गणे केनापि राक्षसेन नीयमानया कयापि राजकन्यया मम समक्षं निपातितमिदमाभरणगर्भितमुत्तरीयम्। (इत्यर्पयति)

**रामः**—(दृष्ट्वा।) तदीयमेवेदमुत्तरीयम्। (इति प्रतिगृह्णाति।)

**दशाननः**—(सावेगम्।) इदमपि न ज्ञातं मया त्वरमाणेन, यदिदमुत्तरीयं विभ्रंशितवती जानकी।

**सीता**—[२]दिट्ठिआ मए विमुक्कं उत्तरीअं अज्जउत्तस्स तस्सिं दिणे हत्थं पाविदं।

**रामः**—(सहर्षशोकम्। स्वगतम्।) तदीयमेवेदम्।

यत्कान्ताकुचकुम्भपत्रमकरीकस्तूरिकालाञ्छितं
　　कान्तायाः कठिनोन्नतौ तनुतरौ यच्च व्यनक्ति स्तनौ।
यच्चाकर्षति कान्तया मयि कृतभ्रूभङ्गमालोक्यते
　　कान्ता सा च यदञ्चलेन सहसा मां वीजयत्येकदा ॥६१॥

१. कुत इतः परमपि तवेदृशी चिन्ता। ननु सुग्रीवभटजनोऽत्र कोऽप्यागम्य त्वां दृष्ट्वा तस्य कथयिष्यति।

२. दिष्ट्या मया विमुक्तमुत्तरीयमार्यपुत्रस्य तस्मिन्दिने हस्तं प्रापितम्।

आभरणगर्भितं आभरणमेव गर्भः अन्धनान्तस्थितवस्तु अस्य सञ्जात इति आभरणगर्भितम्। विभ्रंशितवती विनिपातितवती। यदिति ॥ यत् उत्तरीयं कान्तायाः कुचकुम्भयोः पत्रमकरीकस्तूरिकया मकरिकादिरचनारूपेण लिप्तमृगमदेन लाञ्छितं अङ्कितम्। यच्च कान्तायाः कठिनौ उन्नतौ अतनुतरौ अत्यन्तपीवरौ स्तनौ व्यनक्ति काठिन्यादिसूचकमुद्रावशेन प्रकटयति। मयि यच्च (द्वितीयान्तं) आकर्षति सति कान्तया कृतः भ्रूभङ्गः यस्मिन् कर्मणि तद्यथा तथा आलोक्यते। सा कान्ता च एकदा कदाचित् क्रीडादिजनितघर्मोद्यायासकाले यस्य उत्तरीयस्य अञ्चलेन अग्रेण मां सहसा शीघ्रं वीजयति। तदिदं तदीयमेवेति पूर्वेण सम्बन्धः। शार्दू... ॥ ६१ ॥

**दशाननः**—बलवती खलु राजसूनोरियमुत्कण्ठा। (साश्चर्यम्।) न पुनः प्राणानुन्मूलयति।

**सीता**—(सोद्वेगम्।)[1]मं विणा उत्तरिज्जं मह दट्ठूण कहं अज्जउत्तेण अवत्थंदरं अदिक्कंदं।

**रामः**—(प्रकाशम्।) द्रष्टव्यान्याभरणानि प्रियायाः। (इत्युत्तरीयं विस्रस्य।)

(सास्रं पश्यन्। स्वगतम्।)

हारस्तस्याः स्तनकलशयोरङ्गरागाङ्कितोऽयं
तस्या लीलागमनपिशुनौ नूपुरौ नूनमेतौ।
एषा तस्याः कनकरशना किं न जाने

**दशाननः**—(सहर्षम्।) नूनमाभरणालोकनेन जीवितं त्यजेदेष राजपुत्रः।

**सीता**—[2]अज्जउत्तो एव्वं चिंताए आसत्तो आसी त्ति अंगारेसु अमिदेसु अ पडिदं विअ मे हिअअं।

**सुग्रीवः**—(स्वगतम्।) नूनमयमेतद्दर्शनेन स्मरति जानकीम्।

---

१. मां विनोत्तरीयं मम दृष्ट्वा कथमार्यपुत्रेण अवस्थान्तरमतिक्रान्तम्।

२. आर्यपुत्र एवं चिन्तया आसक्त आसीदित्यङ्गारेषु अमृतेषु च पतितमिव मे हृदयम्।

---

**उन्मूलयति** विनाशयति। **विस्रस्य** विरहितबन्धनं कृत्वा। सास्रं स बाष्पं कृत्वा। **हार इति**॥ अयं तस्याः कान्तायाः स्तनकलशयोः अङ्गरागाङ्कितः विलेपनद्रव्यलाञ्छितः हारः। एतौ तस्या लीलागमनपिशुनौ क्रीडागतिसूचकौ नूपुरौ मञ्जीरौ नूनं ध्रुवम्। एषा तस्याः कनकरशना सुवर्णमयकाञ्ची। इति न जाने किम्। (अङ्गारेषु स्फुलिङ्गेषु प्रियस्यात्माहितशङ्कया पतितमिव अमृतेषु

अत एव ।

स्मरतो जानकीं सख्युः सबाष्पमिदमाननम् ।
नदीजलकणोपेतं नवोद्धृतमिवाम्बुजम् ॥ ६३ ॥

(प्रकाशम् ।) सखे कृतमश्रुपातेन लप्स्यसे जानकीम् ।

**रामः**—(सानुस्मरणं स्वगतम् ।) कदाचि-
त्पाणिभ्यां नौ फलति कलहं कर्षणक्षेपयोर्या ॥ ६२ ॥

(प्रकाशम् ।) सौमित्रे, धारय माम् (इति मूर्छति ।)

**दशाननः**—किमतः परम् । एतदन्तं खल्वस्य जीवितम् । (इति सहर्षमुत्तिष्ठति ।)

**महापार्श्वः**—प्रेक्षणकमेतत् । (इति निवारयति ।)

**सीता**—[1]एदस्स अज्जउत्तचित्तवावारस्स परिण्णाणेण तं तं अवत्थं सुमरिअ को वि मे चित्तविआरो होदि । ता किं करिस्सं । (इति मूर्छति।)

**अनला**—[2]हला, समस्ससिहि समस्ससिहि ।

**लक्ष्मणः**—आर्य समाश्वसिहि ।

**रामः**—(समाश्वस्य ।) सुग्रीव, यदि सख्यमिच्छसि प्रसारितोऽयं पाणिः ।

---

१. एतस्यार्यपुत्रचित्तव्यापारस्य परिज्ञानेन तां तामवस्थां स्मृत्वा कोऽपि मे चित्तविकारः भवति । तत्किं करिष्यामि ।

२. सखि, समाश्वसिहि समाश्वसिहि ।

सुधासु परोक्षेपि मयि अत्यासक्त इति कृत्वा पतितमिव च । **स्मरतइति** ॥ सख्युः मित्रस्य रामस्य । कणः लवः । नवोद्धृतं नूतनमुत्पाटितम् ॥ ६३ ॥

**कृतं** अलं ) । **कदाचिदिति** ॥ या रशना कदाचित् क्रीडार्थमम्बराकर्षणप्राक्तनावसरे । नौ आवयोः पाणिभ्यां कर्षणक्षेपयोः ( मत्करेण रशनायाः) आकर्षणं क्षेपः ( तत्करेण मत्करस्य) क्षेपणं तयोः । कलहं युद्धं फलति निष्पादयति। एषा तस्याः कनकरशनेति पूर्वेण योज्यम् । मन्दाक्रान्ता वृत्तम् ॥ ६२ ॥

**सुग्रीवः**—(सहर्षम् ।) पाणिना पाणिमभिमृशति ।

(नेपथ्ये ।)

सख्युर्मे दशकंधरस्य समरे येन क्षता ज्ञातयः
सुग्रीवेण विरोधिना मम समं सख्यं विधत्ते च यः ।
तस्यैतस्य विनिग्रहाय महती हस्ते शिलेयं धृता
यल्लक्षीकृतिरस्य भार्गवजितः कीर्तिं न मे कृन्तति ॥ ६४ ॥

**सुग्रीवः**—कथमेवं ब्रवीति स्वयमेवागतो वाली ।

**हनूमान्**—(स्वगतम् ।) अहो प्रमादः सुग्रीवस्य । यद्वालिनो दुष्प्रवेशमृश्यमूकशिखरं परित्यजन्निह वनान्तरे समागतः । भवतु । रामसंनिधानमभयंकरमेतस्य ।

**रामः**—(सहर्षम् ।) कथमस्य कण्ठीरवस्येव ध्वनिः ।

**लक्ष्मणः**—(सकोपम् ।) अरे रे दुरात्मन्, मर्कटेन लक्षीकृतिरस्माकमेव कीर्तिं निकृन्तति । अपि च ।

भ्राता मे भरतः प्रशास्ति वसुधां तेनायमार्योऽर्थितः
प्रस्थाने यदि दुष्कृदस्ति विपिने दण्ड्यस्त्वयासाविति ।

**सख्युरिति** ॥ येन रामेण मे मम सख्युः दशकन्धरस्य ज्ञातयः खरादयः समरे युद्धे क्षताः हताः । किञ्च यः मम विरोधिना सुग्रीवेण समं सह सख्यं मैत्रीं विधत्ते करोति । तस्य एतस्य रामस्य विनिग्रहाय शिक्षणाय इयं महती शिला हस्ते धृता । भार्गवजितः क्षत्रियान्तकं परशुराममपि जितवतः अस्य रामस्य यल्लक्षीकृतिः यया शिलया लक्षीकरणं मे कीर्तिं न कृन्तति न च्छिनत्ति । सेयं शिला हस्ते धृतेति सम्बन्धः । शार्दू... ॥ ६४ ॥

**कण्ठीरवस्य** सिंहस्य । **भ्रातेति** ॥ मे भ्राता भरतः वसुधां भुवं प्रशास्ति । पालयति । तेन भरतेन विपिने वने दुष्कृत् दुष्कार्यकृत् अस्ति यदि असौ त्वया दण्ड्यः इति प्रस्थाने वनप्रयाणसमये अयं आर्यः अर्थितः प्रार्थितः । यत्

पापस्त्वं रमसे चिराय रुमया यद्भ्रातृदारैः समं
दण्ड्यस्तत्किमनेन नासि भुवनैर्गुप्तोऽपि किं मोक्ष्यसे ॥६५

दशाननः—कथं रामकथासमापनार्थं महाबलो वाली संप्राप्तः । सफलं खलु ममेदानीमाराधनं ताराररमणचूडामणेः । कथमसौ वालिनमपि दण्ड्यं मन्यते विमूढमनाः सौमित्रिः ।

सीता—कहं अज्जउत्तामरिसेण पवंगमराओ संपत्तो । वच्चेण लक्खणेण णेसग्गिअधीरत्तणावट्टंभगंभीरमहुरं एसो आलविदो अ ।

(पुनर्नेपथ्ये ।)

हन्त हन्त । किमुक्तमनेन शूर्पणखामुखविरूपीकरणमात्रशूरमानिना सुमित्रासूनुना

अयं घुणाक्षरन्यायो यद्विराधो हतोऽमुना ।
शक्तिरस्यास्ति चेद्योद्धुं दर्शयत्वेष तां मयि ॥ ६६ ॥

अथवा । तिष्ठत्वयमकृतप्रज्ञः । भो भो रघुकुमार,

१. कथमार्यपुत्रामर्षेण प्लवङ्गमराजः संप्राप्तः । वत्सेन लक्ष्मणेन नैसर्गिकधीरत्वावष्टम्भगम्भीरमधुरमेष आलपितश्च ।

यतः पापस्त्व चिराय चिरात भ्रातृदारैः भ्रातुस्सुग्रीवस्य दारैः भार्यया रुमया समं सह रमसे तत् ततः अनेन ममार्येण दण्ड्यः नासि किम् । भुवनैः गुप्तः रक्षितोपि मोक्ष्यसे किम् । शार्दू... ॥ ६५ ॥

**तारारमणचूडामणेः** चन्द्रशेखरस्य । **प्लवङ्गराजः** वानरपतिर्वाली । **नैसर्गिकेति** ॥ निसर्गे भवं नैसर्गिकं स्वाभाविकं यत् धीरत्वं धैर्यं तस्य अवष्टम्भेन अवलम्बनेन गम्भीरं मधुरञ्च यथा तथा । **शूरमानी** आत्मानं शूरं मन्यत इति शूरमानी । **अयमिति** ॥ अमुना लक्ष्मणेन विराधः हत इति यत् अयं घुणाक्षरन्यायः घुणः काष्ठवेधक कृमिविशेषः तत्कृतकाष्ठवेधनस्थलेषु यादृच्छिकाक्षरात्मना दृश्यमानरेखाविन्यासस्य रीतिः ॥ ६६ ॥

शश्वत्ते हृदयं तप्तं जानकीविरहाग्निना ।
भिद्येदियं मम शिला वेगव्याकीर्णशोणितम् ॥ ६७ ॥

**दशाननः**—युक्तमिदमुक्तमिन्द्रसूनुना ।

**सीता**—(सातङ्कम् ।) हला अणले, उवरि कहं हविस्सदि त्ति वेवइ मे हिअअं।[1]

**अनला**—रहुवीरो एव्व णं परिहविस्सदि ।[2]

**रामः**—तर्हि संप्रहारोचितस्त्वयमुद्देशः प्रविश्यते ।

(इति निष्क्रान्तः ।)

(नेपथ्ये ।)

हा[3] हद म्हि मंदभाइणी । सिलाविणिपादणादो पुढमं एव्व सिग्घहत्थेण रहुउमारेण एक्को दव्वीकरभीसणो सरो विमुक्को । जो मह णाहस्स पाणं गण्हिअ गदो त्ति सुणिअदि ।

**सुग्रीवः**—कथं हतो वाली । अत एवाकर्णितवालिवधार्ता गुहाविनिर्गता विलपति तारा । सौमित्रे, तदहं सपरिवारो रामपादोपजीवनाय गच्छामि ।

(इति सपरिवारो निष्क्रान्तः ।)

**दशाननः**—कथं वाली रामेण हतः । कथमिदं विश्वसनीयम् । न हि सलिलेन दार्यते पाषाणः ।

---

१. सखि अनले, उपरि कथं भविष्यतीति वेपते मे हृदयम् ।

२. रघुवीर एवैनं परिभविष्यति ।

३. हा हतास्मि मन्दभागिनी । शिलाविनिपातनात्प्रथममेव शीघ्रहस्तेन रघुकुमारेणैको दर्वीकरभीषणः शरो विमुक्तः । यो मम नाथस्य प्राणं गृहीत्वा गत इति श्रूयते ।

---

**अकृतप्रज्ञः** अपूर्णमतिः । **शश्वदिति** ॥ शश्वत् पुनःपुनः जानकीविरहाग्निना तप्तं ते तव हृदयं मम इयं शिला वेगेन पतनवेगेन व्याकीर्णं विक्षिप्तं शोणितं रक्तं यस्मिन् कर्मणि तद्यथा तथा । भिद्येत् भिन्द्यात् । 'दिवादेराकृतिगणत्वाच्छ्यन्'॥

(नेपथ्ये ।)

खेलद्धेमाब्जमालं शकलितरणकृद्दुन्दुभिक्रूरशृङ्गं
कक्षप्रक्षिप्तरक्षःपतिविधुतशिरःप्रान्तघातक्षमान्तम् ।
तारावक्षोजभाराहृतघुसृणरसं वालिनो बाहुमध्यं
विध्यन्बाणो विदध्यान्मम शुभमनिशं रामतूणीरधामा ॥

**महापार्श्वः**—राजन्, वालिवधजनितसमग्रहर्षस्य सुग्रीवस्य शुभसंभावनाबोधकं वचनमेतत् ।

**दशाननः**—(सक्रोधम् । उत्थाय ।) नन्वहमाहवविमर्दनिर्दयनिर्धूतदिक्पालगणो रावणः । तद्रासामसंभावितार्थमभिनयन्तीनामप्सरसां कथं केशोल्लुञ्छनं नाज्ञापयामि ।

**महापार्श्वः**—(अञ्जलिं बद्ध्वा ।) प्रसीद महाराज, प्रसीद । नन्विदमुशनसा भगवता खलु निबद्धं प्रेक्षणकं, न ह्यलीकमृतकथाप्रवृत्तिः ।

**दशाननः**—(स्वगतम् ।) अतः सत्यमेवेदम् । (प्रकाशम् । सकरुणम् ।) हा मम प्रियसख, हा दुन्दुभिदानवसमरसंदर्शितबाहुविक्रम, हा कपिकुलचक्रवर्तिन्,

---

**सम्प्रहारः** युद्धम् । **दर्वीकरभीषणः** सर्पवद्भयङ्करः । **पाषाणः** शिला ।

**खेलदिति** ॥ खेलन्ती चलन्ती । हेमाब्जमाला कनकपद्ममाला यस्मिंस्तत् । शकलिते खण्डिते रणकृतः महिषरूपेण युद्धं कृतवतः दुन्दुभेः तदाख्यासुरस्य क्रूरशृङ्गे यस्मिन् । कक्षे प्रक्षिप्तेन निहितेन रक्षःपतिना रावणेन विधुतैः कम्पितैः शिरोभिः प्रान्ते पर्यन्ते घातः ताडनं यस्य सः क्षमायाः भुवः अन्तः मध्यं यस्य तत् । तारायाः (वालिभार्यायाः) वक्षोजभारात् कुचभारात् आहृतघुसृणरसं अपहृतकुङ्कुमद्रवम् । वालिनः बाहुमध्यं भुजान्तरं विध्यन् ताडयन् रामस्य तूणीरः निषङ्गः धाम स्थानं यस्य सः बाणः मम शुभं अनिशं सदा विदध्यात् कुर्यात् । स्रग्धरा वृत्तम् ॥ ६८ ॥

**समग्रः** पूर्णः । **संभावना** आशङ्का प्रार्थना । **नन्विति** ॥ आहवे युद्धे विमर्देन अधिकमर्दनेन निर्दयं कृपारहितं यथा तथा निर्धूताः विक्षिप्ताः दिक्पाल-

हते विराधेऽपि हते खरेऽपि स्थिता जयाशा त्वयि भूयसी मे ।
बली स एवं त्वमभूस्तथा चेल्लङ्काजनस्यायमपि प्रहर्ता ॥ ६९ ॥

**लक्ष्मणः**—कथमार्यो वालिनं विजित्य सम्प्राप्तः ।

( ततः प्रविशति रामः । )

**रामः**—वत्स लक्ष्मण, सुग्रीव एष सपरिवारो राज्याभिषेकाय प्रवेशयितव्यः किष्किन्धाम् । यौवराज्यायाङ्गदश्च ।

**लक्ष्मणः**—दीनजनानुकम्पी खल्वार्यः ।

**सीता**—एव्वं एदं । ण उण मं दीणेत्ति जाणाइ अज्जउत्तो ।[1]

**अनला**—हला, किं भणासि । किं णिमित्तं दुक्करो रणभीसणस्स वालिणो वहो इमिणा किदो ।[2]

(नेपथ्ये ।)

राज्यं प्राप्य रघूद्वहान्मघवतः सूनोर्हतस्याहवे
सुग्रीवेण नियोजिता हरिचमूरन्वेषितुं जानकीम् ।

**रामः**—प्रियं नः प्रियं नः । वत्स लक्ष्मण, यावज्जानकीप्रवृत्त्युपलम्भमस्मिन् प्रस्रवणगिरौ स्थास्यावः । ( इति निष्क्रान्तौ । )

---

१. एवमेतत् । न पुनर्मां दीनेति जानात्यार्यपुत्रः ।

२. हला, किं भणसि । किं निमित्तं दुष्करो रणभीषणस्य वालिनो वधोऽनेन कृतः ।

---

गणाः येन सः । **असंभावितार्थं** अनाशङ्कितवालिवधरूपविषयमुद्दिश्य । **केशोल्लुञ्छनं** कचकृन्तनम् । **हतइति** ॥ विराधेपि हते खरेपि हते । मे भूयसी अत्यन्तमधिका जयाशा त्वयि स्थिता । बली स एव त्वं तथा रामेण घातितः अभूश्चेत् अयं रामः लङ्काजनस्यापि प्रहर्ता संहर्ता भवेत् । वृत्तमुपजातिः ॥ ६९ ॥

**किन्निमित्तं** कुतो हेतोः । 'निमित्तपर्यायप्रयोगे सर्वासांप्रायदर्शनम्' इति सर्वा विभक्तयः । **राज्यमिति** ॥ आहवे युद्धे (रामेण) हतस्य मघवतस्सूनोः इन्द्रपुत्रस्य वालिनः राज्यं रघूद्वहात् रामात् प्राप्य । सुग्रीवेण जानकीं अन्वेषितुं

**दशाननः**—(विचिन्त्य।) किमत्र प्रतिविधातव्यमस्माभिः।

**सीता**—(सहर्षम्।) अणले, सच्चवचना खु तुमं।[1]

(पुनर्नेपथ्ये।)

सखे शुक, किं न पश्यसि।

तस्यामेष जटायुरग्रजगिरा विज्ञाय सीतास्थितिं
लङ्कादर्शनकौतुकेन हनुमानम्भोधिमुल्लङ्घते॥ ७०॥

(पुनर्नेपथ्ये।)

सखे शार्दूल, यथादृष्टं महाराजलङ्केश्वराय निवेदयितुं गच्छावः।

**दशाननः**—कथमस्मत्प्रहितयोः शुकशार्दूलयोश्चारयोरयं संलापः। अहो मया रामं प्रति चारप्रेषणमपि विस्मृतम्। (सविमर्शम्।)

जानकीकृतकामस्य शयानस्यान्तरन्वहम्।
मन्त्रिणां किमुपायोऽयं मम कार्यान्ववेक्षणे॥ ७१॥

**महापार्श्वः**—(सस्मितम्।) महाराज, प्रेक्षणकमिदमेतदर्थमेव प्रदर्शितम्।

---

१. अनले, सत्यवचना खलु त्वम्।

मृगयितुं हरिचमूः वानरसेना नियोजिता प्रेषिता। **यावदिति**॥ सीतावृत्तान्तप्राप्तिपर्यन्तम्। तस्यामिति। तस्यां हरिचम्वां एषः हनुमान् जटायुषः अग्रजस्य सम्पातेः गिरा वचनेन सीतायाः स्थितिं विज्ञाय लङ्कादर्शनकौतुकेन अम्भोधिं उल्लङ्घते उत्तरति। शार्दू...॥ ७०॥

**जानकीति**॥ जानक्यां कृतकामस्य अतएव अन्वहं प्रतिदिन अन्तः गृहमध्ये शयानस्य मम कार्याणां राजकार्याणां अन्ववेक्षणे आलोकनविषये अयं मन्त्रिणां उपायः किम्॥ ७१॥

**सीता**—(सहर्षातिशयम् ।) हला अणले, अह्मे वि असोअवणिअं एव्व गच्छह्म । जं हणुमंदेण समुद्दो लंघीअदि त्ति सुणिअदि ।

( इति निष्क्रान्ते । )

**दशाननः**—तर्हि महापार्श्व, परिजनानेवमनुशास्मि ।

पाथः शोषयत प्लवङ्गमचमूमार्गे फलग्राहिणो
वृक्षान् प्लोषत कण्टकैर्वितनुत प्राकारमभ्रंलिहम् ।
लङ्कां ब्रूत तथा कुरुष्व स यथा नेमां हनूमान्विशे-
द्यत्पथ्यं मम साम्प्रतं तदहमप्यालोचये मन्त्रिभिः ॥७२॥

(इति महापार्श्वेन निष्क्रान्तः ।)

( गर्भाङ्कः समाप्तः ।)

## ॥ इति जानकीपरिणयनाटके षष्ठोऽङ्कः ॥

१. सखि अनले, आवामप्यशोकवनिकामेव गच्छावः । यद्धनुमता समुद्रो लङ्घयत इति श्रूयते ।

**अनुशास्मि** आज्ञापयामि । **पाथइति** ॥ प्लवङ्गचम्वाः वानरसेनायाः मार्गे पाथः पानीयं शोषयत । फलानि ताच्छील्येन गृह्णन्तीति फलग्राहिणः वृक्षान् प्लोषत दहत । कण्टकैः अभ्रं लेढीति अभ्रंलिहः तं आकाशव्यापिनं प्राकारं वितनुत कुरुत । स हनूमान् यथा इमां लङ्कां नाविशेत् न प्रविशेत तथा कुरुष्वेति लङ्कां लङ्काधिष्ठानदेवतां ब्रूत वदत । साम्प्रतं अद्य मम यत् पथः अनपेतं पथ्यं अनुकूलम् । तत् अहमपि मन्त्रिभिस्सह आलोचये । शार्दू... ॥ ७१ ॥

इति श्रीश्वेतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां बालरञ्जन्याख्यायां षष्ठाङ्कव्याख्या समाप्तिमगमत् ॥

# सप्तमोऽङ्कः ।



( ततः प्रविशति शूर्पणखा । )

**शूर्पणखा**—( सशोकं सोरस्ताडं च । ) हा अज्ज दसग्गीव, अज्ज कुंभअण्ण, वच्च मेहणाह, कहं गदा तुह्मे । ( सावेगम् । ) हा अदिआअ हा तिसिरस, हा देवंदअ, णरंदअ, कुंभ, णिउंभ, वच्चा, तुह्मे वि अक्खकुमारेण सह कहासेसा संउत्ता । हा किं करेमि मंदभाइणी । जं इमिणा अज्ज सोएण पुव्वं हणुमंतवालग्गसंकमिदेण अग्गिणा विअ लंकाउरघरणिउरुंबं डज्झइ मे हिअअम् । ( सरोषम् । ) ता दाणिं ताणं रक्खसकुलकालरत्तिणं राअउत्ताणं अहं इत्थिआ वि जहसत्ति पडिआरं करिस्सं । ( पुरोऽवलोक्य । ) कहं एत्थ पुप्फअविमाणं आणअंतो कुमारविभीसणस्स अमच्चो संपादि सुग्गीवसिबिरं अणुप्पविसिअ चिट्ठइ । इमिणा खु वच्चविभीसणस्स परपक्खप्पवेसव्ववसाअं उप्पादअंदेण विणासिअं लंकाउरं । ण खु मे वच्चविभीसणस्स रज्जलाहेण संदोसो । जं एसो रक्खसकुलविरुद्धं कज्जं णिच्चं आअरइ ।

१. हा आर्य दशग्रीव, आर्य कुम्भकर्ण, वत्स मेघनाद, कथं गता यूयम् । हा अतिकाय, हा त्रिशिरः, हा देवान्तक, नरान्तक, कुम्भ, निकुम्भ, वत्साः, यूयमप्यक्षकुमारेण सह कथाशेषाः संवृत्ताः । हा किं करोमि मन्दभागिनी । यदनेनाद्य शोकेन पूर्वं हनूमद्वालाग्रसंक्रामितेनाग्निनेव लङ्कापुरगृहनिकुरुम्बं दह्यते मे हृदयम् । तदिदानीं तयो राक्षसकुलकालरात्र्यो राजपुत्रयोरहं स्त्र्यपि यथाशक्ति प्रतीकारं करिष्यामि । कथमत्र पुष्पकविमानमानयन् कुमारविभीषणस्यामात्यः संपातिः सुग्रीवशिबिरमनुप्रविश्य तिष्ठति । अनेन खलु वत्सविभीषणस्य परपक्षप्रवेशव्यवसायमुत्पादयता विनाशितं लङ्कापुरम् । न खलु मे वत्सविभीषणस्य राज्यलाभेन संतोषः, यदेष राक्षसकुलविरुद्धं कार्यं नित्यमाचरति ।

**निकुरुंबं** समूहः । **कालरात्र्योः** प्रलयकालरात्रितुल्ययोः । **शिबिरं**

( ततः प्रविशति संपातिः ।)

**संपातिः**—( साश्चर्यम् । )

किं ब्रूमो भुजविक्रमं रघुपतेर्यः सेतुमम्भोनिधौ
बद्ध्वा तेन पथोपगत्य च दशग्रीवं युधि न्यग्रहीत् ।
किं ब्रूमः शरणागते च करुणां संश्रुत्य यो दत्तवान्
सम्प्राप्ताय विभीषणाय परमां लङ्काधिराज्यश्रियम् ॥ १ ॥

( पार्श्वतो दूरे दृष्ट्वा । ) कथमियं शूर्पणखा व्याकुलेव दृश्यते । न ह्यस्याः क्रूराया धर्मात्मनो विभीषणस्य राज्यप्राप्तिरभिमता । तत एवमियं स्यात् । भवतु । पृच्छामि । अयि शूर्पणखे, किं दुर्मनायमानेव दृश्यसे ।

**शूर्पणखा**—( स्वगतम् । ) [1]णिहिलेसु अह्मकेरेसु जणेसु हदेसु कीस तुमं जीवासि त्ति । ( प्रकाशम् । ) लंकेसुरविअइणं णाहं पेक्खिदुं आहूदाए पत्थिदाए जाणईए अहिमुहं आगदा अहं वेत्तिजणेण दूरदो विग्गेत्ति अवणीदाह्मि ।

---

१. निखिलेष्वस्मदीयेषु जनेषु हतेषु, कस्मात्त्वं जीवसीति । लङ्केश्वरविजयिनं नाथं प्रेक्षितुमाहूतायाः प्रस्थिताया जानक्या अभिमुखमागताहं वेत्रिजनेन दूरतो विग्रेत्यपनीतास्मि ।

सैन्यवसतिम् । **अमुना** सम्पातिना । **व्यवसायं** प्रयत्नम् । **किमिति** ॥ यः अम्भोनिधौ सेतुं बध्वा तेन पथा उपगत्य आगत्य च युधि रणे दशग्रीवं न्यग्रहीत् निगृहीतवान् तस्य रघुपतेः भुजविक्रमं किं ब्रूमः । किञ्च यः सम्प्राप्ताय शरणागताय विभीषणाय परमां श्रेष्ठां लङ्काधिराज्यश्रियं लङ्काधिराजत्वसम्पदं संश्रुत्य प्रतिज्ञाय दत्तवान् तस्य रघुपतेः शरणागतविषये करुणां किं ब्रूमः । शार्दू... ॥१

**दुर्मनायमाना** दुःखितं मनो यस्यास्सा दुर्मनाः अदुर्मनाः दुर्मनाः भवतीति दुर्मनायमाना । **वेत्रिजनेन** वेत्रवता प्रतीहार्यादिजनेन । **विग्रा** विगतना-

**संपातिः**—ननु त्वं यतो विभ्रासि, अत एवापनीता। एवं खलु निमित्तविद आचक्षते—'प्रतिष्ठमानस्याभिमुखं विगतनासिकामुखदर्शनं भाविनः क्लेशस्य सूचकम्' इति। अतो न्यायगतेऽर्थे कुत एतत्ते दौर्मनस्यम्। अत एव तवानुभूतेन दर्शनमात्रेण सापि जानकी चकोरीव चन्द्रमसं चिराय नाथं द्रष्टुकामापि दर्शनसमये तेन महाराजरामेण परुषमुक्ता प्रविष्टा च हुताशनम्। भगवता तेन परिशुद्धेयमिति प्रतिपादिता च श्रीमते तस्मै।

**शूर्पणखा**—होदु। किं दाणिं कादुं इच्छदि सो रामदेव्वो।

**संपातिः**—किमन्यत्।

पौलस्त्यं युधि केसरीव करिणं भङ्क्त्वान्वितः सीतया
काञ्चन्येव विभूषया हुतवहस्वच्छीकृतस्वात्मना।

**शूर्पणखा**—(स्वगतम्।) तस्स तह अणुऊलो दाणिं विही, दसग्गीवस्स उण पडिऊलो त्ति किं कादव्वं मए। (प्रकाशम्।) तदो तदो।

**संपातिः**—वाहिन्या सह पुष्पकेण नगरीं वाञ्छत्युपैतुं निजां
सन्देशं भरताय हारयति च द्रागञ्जनासूनुना॥ २॥

(इत्युक्त्वा निष्क्रान्तः।)

१. भवतु। किमिदानीं कर्तुमिच्छति स रामदेवः।

२. तस्य तथानुकूल इदानीं विधिः, दशग्रीवस्य पुनः प्रतिकूल इति किं कर्तव्यं मया। ततस्ततः।

सिका। **निमित्तविदः** शकुनज्ञाः। आचक्षते वदन्ति। प्रतिष्ठमानस्य प्रयाणं कुर्वतः। भाविनः भविष्यतः। अर्थे विषये। दौर्मनस्यं दुर्मनसः भावः। **परुषं** कर्णकठोरं यथा तथा। **तेन** अग्निना। प्रतिपादिता दत्ता। **पौलस्त्यमिति**॥ युधि युद्धे केसरी सिंहः करिणं गजमिव। पौलस्त्यं रावणं भङ्क्त्वा हत्वा काञ्चन्या विभूषयेव स्वर्णमयालङ्कृत्येव हुतवहेन अग्निना स्वच्छीकृतस्वात्मना निर्मलीकृतनिजदेहया सीतया अन्वितः युक्तः। वाहिन्या सेनया सह पुष्पकेण पुष्पकविमानेन निजां नगरीं उपैतु गन्तुं वाञ्छति इच्छति। द्राक् शीघ्रं अञ्जनासूनुना हनूमता भरताय सन्देशं स्ववृत्तान्तं हारयति। प्रेषयति च। शार्दू... ॥ २॥

**शूर्पणखा**—( सविमर्शम् । ) [1]जाव हणुमंदो भरदस्स संदेसं ण हरेदि, तदो पुढमं एव्व दावसीवेसं करिअ तस्स अप्पिअं किं वि कहइस्सं । सो भरदो साणुजो जं सुणिअ सरीरं विसज्जिस्सदि । देण रामेण किदस्स मह भादुणं दुवेणं वहस्स पडिआरो हविस्सदि ।

( इति निष्क्रान्ता । )

(इति मिश्रविष्कम्भः ।)

( ततः प्रविशति शत्रुघ्नेनानुगम्यमानो भरतः ।)

**भरतः**—वत्स शत्रुघ्न,

सम्भावय क्षितिभुजो विविधोपचारैः
सौवीरमद्रमगधद्रविडाधिपादीन् ।
सज्जीभवन्ति वचसा मम ये पुरेऽस्मिन्
क्रव्यादमुन्मथितुमार्यकलत्रचोरम् ॥ ३ ॥

अहमपि तदुपाहृतान्युपायनान्यार्यपादुकयोरग्रे निवेद्य कोशगृहे स्थापयामि ।

**शत्रुघ्नः**—आर्य, भवदाज्ञया पूर्वमेव सम्भाविता मया राजानः, भवतापि पूर्वमेव तदुपाहृतान्युपायनान्यार्यपादुकयोरग्रे निवेद्य कोशगृहे स्थापितानि । तत्किं पुनरप्यावेद्यते ।

---

१. यावद्धनूमान् भरतस्य संदेशं न हरति, ततः प्रथममेव तापसीवेषं कृत्वा तस्याप्रियं किमपि कथयिष्यामि । स भरतः सानुजो यच्छ्रुत्वा शरीरं विसक्ष्यति । तेन रामेण कृतस्य मम भ्रात्रोर्द्वयोर्वधस्य प्रतीकारो भविष्यति ।

---

**संभावयेति** ॥ ये आर्यस्य रामस्य कलत्रचोरं भार्यापहारिणं क्रव्यादं राक्षसं उन्मथितुं नाशयितुं मम वचसा अस्मिन् पुरे सज्जीभवन्ति तान् सौवीरादिदेशाधिपप्रभृतीन् क्षितिभुजः नृपान् विविधैरुपचारैः सम्भावय सम्मानय । वसन्ततिलका वृत्तम् ॥ ३ ॥

**भरतः**—आः । स्मरामि तावत् । किं तु ।

द्रक्ष्यामि तातचरणप्रियसूनुमार्यं
देवं कदाहमिति चिन्तयतोऽनिशं मे ।
हा हन्त विस्मरति चित्तमिदं कृतानि
कर्माण्यपि त्वमवधेहि ततः क्रियासु ॥ ४ ॥

**शत्रुघ्नः**—बाढम् । एवं क्रियते ।

**भरतः**—( सानुस्मरणम् । ) वत्स शत्रुघ्न,

नीलं मूर्ध्नि जटाभरं कटितटे धौतं नवं वल्कलं
पाणावुज्ज्वलमक्षदाम तपसा देहे श्रियं कामपि ।
बिभ्राणेन नवोटजान्तरततव्याघ्राजिनाध्यासिना
प्राग्दृष्टेन वनेऽधुनापि हृदयं नोन्मुक्तमार्येण मे ॥ ५ ॥

**शत्रुघ्नः**—( सबाष्पकण्ठम् । ) केन वा तादृशस्य सार्वभौमप्रथमसूनोरार्यस्य महानुभावस्य तादृशी दैवकृता दशापि विस्मर्यते ।

**भरतः**—( सशोकावेगम् । )

---

**उपायनानि** उपहारान् । **द्रक्ष्यामीति** ॥ अहं तातचरणानां पितृपादानां दशरथस्येत्यर्थः प्रियसूनुं आर्यं देवं रामदेवं कदा द्रक्ष्यामि इति अनिशं सदा चिन्तयतः मे इदं चित्तं कृतानि कर्माण्यपि विस्मरति हा हन्त कष्टं चित्रं ततः त्वं क्रियासु कर्मसु अवधेहि अवधानवान्भव । वसन्ततिलका वृत्तम् ॥ ४ ॥

**नीलमिति** ॥ मूर्ध्नि शिरसि नीलं श्यामं जटाभरं कटितटे कटिदेशे धौतं क्षालितं नवं वल्कलं पाणौ हस्ते उज्ज्वलं दीप्तं अक्षदाम अक्षमालां तपसा देहे कामपि अनिर्वचनीयां श्रियं शोभां बिभ्राणेन धरता नवोटजस्य नूतनपर्णशालायाः अन्तरे मध्ये ततं व्याघ्राजिनं अध्यासितुं विस्तारिते व्याघ्रचर्मणि वर्तितुं शीलवता वने प्राक् पुरा दृष्टेन आर्येण रामेण मे हृदयं अधुनापि अद्यापि नोन्मुक्तं न त्यक्तं शार्दू... ॥ ५ ॥

सञ्चारः कटुकीटकण्टकशिलाखण्डैर्वने दुर्गमे
प्रायेणाम्लकषायतिक्तकटुभिर्वृत्तिस्तरूणां फलैः ।
कीर्णानोकहजीर्णपर्णविरसैस्तोयैरुदन्याशमः
शय्या स्थण्डिल एव तस्य विषमे यः सर्वलोकेश्वरः ॥६॥

( इति मूर्च्छति । )

**शत्रुघ्नः**—आर्य, समाश्वसिहि समाश्वसिहि । न स्मर्तव्योऽयमार्यस्य तादृशो दशाविपरिणामः ।

**भरतः**—( समाश्वस्य । ) कथं न स्मर्तव्यः ।

जटाभारं धत्ते मणिमकुटयोग्येन शिरसा
बिभर्ति क्षौमार्हे बत कटितटे वल्कलमपि ।
मणिप्रासादाग्रस्थितिसमुचितोऽपि प्रतिदिनं
यदार्यो वैदेह्या सममुटजमध्ये निवसति ॥ ७ ॥

हन्त हन्त । न दीर्यते सहस्रधा मे वज्रमयं हृदयम् ।

**सञ्चारइति** ॥ यः सर्वलोकेश्वरः तस्य रामस्य कटुकीटैः मशकैः कण्टकैः शिलाखण्डैश्च दुर्गमे कृच्छ्रेण गन्तुं शक्ये वने सञ्चारः । प्रायेण बहुशः अम्लकषायतिक्तकटुरसैर्वद्भिः तरूणां फलैः वृत्तिर्जीवनम् । कीर्णैर्विशीर्णैः अनसामक घ्नन्तीति अनोकहा वृक्षास्तेषां जीर्णपर्णैः जरठपत्रैः विरसैः विगतरसैः तोयैर्जलैः उदन्या उदकेच्छा तृट् तस्याः शमः निवृत्तिः विषमे निम्नोन्नते स्थण्डिले अनास्तृतदेश एव शय्या शयनम् । शार्दू... ॥ ६ ॥

**जटेति** ॥ यत् यतः आर्यः मणिमकुटयोग्येन रत्नकिरीटार्हेण शिरसा जटाभारं धत्ते । क्षौमार्हे दुकूलयोग्ये कटितटे वल्कलमपि बिभर्ति धरति बत कष्टम् । प्रतिदिनं दिने दिने मणिप्रासादाग्रे रत्नहर्म्योपरि स्थितेर्वर्तनस्य समुचितोपि वैदेह्या समं सीतया सह उटजमध्ये पर्णशालान्तरे निवसति । ततः कथं न स्मर्तव्य इति पूर्वेण योज्यम् । शिखरिणी वृत्तम् ॥ ७ ॥

(साश्रगद्गदम्।)

आर्या विदेहतनया रजनीचरेण
नीता न जीवति पुनर्यदि जीवतीयम्।
अप्रेक्षितस्वजनमप्रतिषेधदीर्घ-
मुच्छूनपक्ष्म न करिष्यति रोदनं किम्॥ ८॥

शत्रुघ्नः—आर्य, किमस्माभिः क्रियतामेवंविधे दैवदुर्विलसिते।

भरतः—कष्टं भोः कष्टम्।

सीता चेद्रक्षसा नीता तिष्ठत्वस्या गुणान्तरम्।
शीलाभिरूप्ये सञ्चिन्त्य धीरोऽप्यार्यो न जीवति॥ ९॥

तदिदानीं किं करोमि मन्दभाग्यः।

शत्रुघ्नः—धैर्यमवलम्ब्यतामार्येण, अनुप्रेषयितव्याः खलु यथास्थानं राजानः।

भरतः—(विमृश्य।) कथमन्यदुपक्रान्तमन्यथा प्रस्तूयते। तदिदानीमिदं राजकमनुकर्षन् रिपुनिपातनाय संनिकर्षमहमार्यस्य यास्यामि।

शत्रुघ्नः—किमार्येण नाकर्णितमपदानमार्यस्य।

भरतः—किं तत्।

---

नदीर्यते न भिद्यते। **साश्रेति**॥ अस्रेण अश्रुणा गद्गदेन अस्पष्टवचनेन च सहितम्। **आर्येति**॥ आर्या विदेहतनया सीता रजनीचरेण राक्षसेन नीता सती न जीवति पुनः यद्वा 'पुनरप्रथमे मतम्। अधिकारे च भेदे च तथा पक्षान्तरेऽपि च' इति मेदिनी। इयं जीवति यदि अप्रेक्षितस्वजनं अदृष्टनिजजनं अप्रतिषेधेन निषेधाभावेन दीर्घं उच्छूनपक्ष्म प्रवृद्धनेत्रलोम रोदनं न करिष्यति किम्। वसन्ततिलका वृत्तम्॥ ८॥

**सीतेति**॥ सीता रक्षसा नीता चेत् अस्याः सीतायाः गुणान्तरं शीलाभिरूप्याभ्यामन्यद्गुणजातं तिष्ठतु। अस्याः शीलं आचारं आभिरूप्यं सौन्दर्यं वैदुष्यं वा सञ्चिन्त्य धीरोऽप्यार्यो न जीवति॥ ९॥

**प्रस्तूयतां** आरभ्यताम्। **राजकं** राजसमूहम्। **अपदानं** वृत्तं कर्म।

शत्रुघ्नः—निषादाधिपतिर्गुहः पत्रिकां प्रेषितवान् ।

भरतः—उक्तं हि मया गुहं प्रति—ज्ञातिभिर्वनगोचरैरनुप्रविश्य दण्डकारण्यमार्यस्य प्रवृत्तिरुपलब्धव्या । इति । तत एव मायामृगेण रूपवचनाभ्यामार्यलक्ष्मणौ विमोह्य सुदूरं नीतवता रक्षसा भिक्षुवेषप्रतिच्छन्नेन देव्यपहृतेति गुहेन मे विज्ञापितम् । तदिदानीं पत्रिकायां किं लिखितम् ।

शत्रुघ्नः—'आर्यस्यार्यलक्ष्मणमात्रसहायस्य नेदानीं सहायान्तरापेक्षा । यतः शत्रून् हत्वा देव्याः प्रत्यानयने ससैन्यः सुग्रीवः सहायो लब्धः । ततश्च राजानो यथास्थानं प्रेषयितव्याः' इति ।

भरतः—कः सुग्रीवो नाम, कथं स सहायो लब्धः ।

शत्रुघ्नः—किष्किन्धाधिपतेः कपिकुलचक्रवर्तिनो वालिनः कनीयानेषः । स च वालिनं हत्वा राज्ये स्थापनादार्यस्य सहायः संवृत्तः । श्रूयतां सङ्ग्रहेण वाचिकमिदम् ।

भरतः—कथमिव ।

शत्रुघ्नः—

"हत्वार्यो युधि वालिनं कपिवरं तस्यानुजाय श्रियं
सुग्रीवाय वितीर्य तेन सुहृदा विष्वग्विसृष्टैर्भटैः ।
अन्विष्यावगतां पुरीं जनकजाचोरस्य विज्ञापितां
रुन्धे वानरसेनया गमितया सेतुं निबध्याम्बुधौ" ॥१०॥ इति ।

---

**कनीयान्** कनिष्ठः । **वाचिकं** सन्देशवाक्यम् । **हत्वेति** ॥ आर्यः रामः युधि युद्धे कपिवरं वालिनं हत्वा तस्यानुजाय सुग्रीवाय श्रियं कपिराज्यलक्ष्मीं वितीर्य दत्वा सुहृदा मित्रेण तेन सुग्रीवेण विष्वक् सर्वतः विसृष्टैः प्रेषितैः भटैः वानरभटैः अन्विष्य मृगयित्वा अवगतां ज्ञातां विज्ञापितां निवेदितां जनकजाचोरस्य सीतापहर्तुः पुरीं लङ्कां आगमितया सर्वतः प्रापितया वानरसेनया अम्बुधौ सेतुं निबध्य नितरां बध्वा रुन्धे रुणद्धि । शार्दू... ॥ १० ॥

भरतः—(विमृश्य।) वत्स, सम्भावितमिदम्। यतः कदाचिदाश्चर्येण परस्परमालपतां खेचराणां वचः श्रुतवानस्मि।

शत्रुघ्नः—कीदृशं वचः।

भरतः—

"निहते राजपुत्रेण निजपुत्रेऽपि वालिनि।
न शोचतीन्द्रः कार्यार्थी नेक्षते ह्यात्मनो व्यथाम्" ॥११॥ इति।

शत्रुघ्नः—तर्हि भवितव्यमिन्द्रसूनुना वालिना। किंतु न ज्ञायते तस्य कीदृशी कार्यार्थितेति।

भरतः—वत्स, पुनश्च तेषां किञ्चित् श्रुतवानस्मि।

शत्रुघ्नः—तदप्यनुगृह्यतामार्येण।

भरतः—

"नेदं दृष्टचरं जातु नापि श्रुतचरं क्वचित्।
अगाधे योजनशतं सागरे सेतुबन्धनम्" ॥ १२ ॥ इति।

शत्रुघ्नः—आर्य, ततः कपिराक्षसानीकयोर्युद्धमपि प्रवृत्तमिति मन्ये। यतः कस्मिन्नपि दिने प्रवृत्तं चण्डानिलमुद्दिश्य मरुदयमौत्पातिको भवतीति शान्तिं प्रष्टुकामेन मया स्वमाश्रमं प्रेषितमार्यरामप्रियसखं पिङ्गलं प्रति वसिष्ठमिश्रैः प्रतिसन्दिष्टम्।

भरतः—कथमिव।

---

**खेचराणां** आकाशचारिणां देवानाम्। **निहतइति** ॥ राजपुत्रेण रामेण। व्यथां पीडाम् ॥ ११ ॥

**अनुगृह्यतां** कथ्यतामित्यर्थः। **नेदमिति** ॥ पूर्वं दृष्टं दृष्टचरम् ॥ १२ ॥

**अनीकयोः** सेनयोः। **औत्पातिकः** उत्पातः शुभाशुभसूचकमहाभूत-

शत्रुघ्नः—

लङ्कापुरे वानरराक्षसानां
रणं दिदृक्षोर्विनतासुतस्य ।
गत्यागतिभ्यां गगने समुत्थः
पक्षानिलोऽयं प्रसृतो धरण्याम् ॥ १३ ॥

तन्न भेतव्यमौत्पातिकोऽयमिति वत्सेनेति ।

(नेपथ्ये ।)

विनिपातेन सुहृदां विजयेन च दुर्हृदाम् ।
विषण्णाहं तपस्तप्तुं व्रजामि तुहिनाचलम् ॥ १४ ॥

**भरतः**—(आकर्ण्य ।) युध्यमानानां केषामपि जयपराजयशंसिनी केयं वृद्धा तापसीव लक्ष्यते ।

(ततः प्रविशति वृद्धतापसीवेषेण शूर्पणखा ।)

**शूर्पणखा**—विनिपातेन सुहृदां (इत्यादि पुनः पठति ।)

**भरतः**—वत्स, केयं कुत आगतेति पृच्छ । यतः सम्भवेदप्यार्यस्य समरप्रवृत्तिराकर्णयितुमस्या मुखात् ।

शत्रुघ्नः—आर्य, भवत्वेवम् । (शूर्पणखां प्रति ।) अयि तापसि, का त्वं कुत आगम्यते ।

---

विकारः तत्रभवः औत्पातिकः। **लङ्केति**॥ लङ्कापुरे वानरराक्षसानां रणं युद्धं दिदृक्षोः द्रष्टुमिच्छोः विनतासुतस्य गरुडस्य गगने आकाशे गत्यागतिभ्यां गमनागमनाभ्यां समुत्थः उद्भूतः अयं पक्षानिलः गरुद्वायुः धरण्यां भुवि प्रसृतः प्रविततः । वृत्तमुपजातिः ॥ १३ ॥

**न भेतव्यं** भयं न प्राप्तव्यम् । **विनिपातेनेति** ॥ सुहृदां मित्राणां विनिपातेन नाशेन दुर्हृदां शत्रूणां विजयेन च विषण्णा दुःखिता अहं तपः तप्तुं कर्तुं तुहिनाचलं हिमालयं व्रजामि गच्छामि ॥ १४ ॥

**शूर्पणखा**—( शत्रुघ्नं दृष्ट्वा । सभयं स्वगतम् । ) कथमिहाप्यागतो मम कर्णनासावैरी क्षत्रियवटुः । ( निपुणं निरूप्य । ) नासौ लक्ष्मणः, अनेन हि तत्सरूपेण तदनुजेन शत्रुघ्नेन भवितव्यम् ।( करेण नासिकामभिमृश्य) मम गृहीततापसीरूपाया वर्तत एव नासिका ।

ततः प्रतिपदं वर्णानानुनासिक्यदूषितान् ।
न श्रोतुं नोपहसितुं शक्यमस्य मदुक्तिषु ॥ १५ ॥

( प्रकाशम् ।) किमुक्तं भवता ।

**शत्रुघ्नः**—ननु ब्रवीमि का त्वं कुत आगम्यत इति ।

**शूर्पणखा**—(स्वगतम् ।) रावणानुजाहं लङ्काद्वीपात् । ( प्रकाशम् । ) निश्वासेन खेदमभिनीय ।) या काचिद्यतः कुतश्चिदिति जानीहि ।

**भरतः**—(स्वगतम् ।) नूनमियं यतस्तापसी, ततो न राक्षसपक्षपातिनी । विषण्णा चेयं दृश्यते, तत्कुशलं दुर्लभमिति प्रतिभात्यार्यस्य वा लक्ष्मणस्य वा । अथवा निर्विण्णेयमन्येन हेतुना स्यात् । (प्रकाशम् ।) अयि तापसि, किं ते नाम ।

**शूर्पणखा**—(स्वगतम् ।) अयमपि रूपेण मदीयनासिकाच्छेदमात्रफलकाभिलाषविषयः क्षत्रियकुमार इव वर्तते । तन्नूनमनेन भरतेन भवितव्यम् । प्रश्रितश्चायमस्मिन् शत्रुघ्नः । (प्रकाशम् ।) भद्र, किमाह भवान् ।

**कर्णेति** ॥ कर्णसहिता नासा नासिका कर्णनासा तस्याः वैरी छेदकः । **ततइति** ॥ ततः तापसीवेषग्रहणेन नासिकायास्सत्वात् । मदुक्तिषु मम वचनेषु प्रतिपदं पदे पदे नासिकामनुगतः अनुनासिकः तस्य भाव आनुनासिक्यं तेन दूषितान् (स्वस्या नासिकाभावादनुनासिकाक्षरोच्चारणस्यानभिप्रेतत्वादिति भावः) वर्णान् अक्षराणि श्रोतुं अस्य अनेन न शक्यं श्रुत्वा उपहसितुं न शक्यम् ॥ १५ ॥

**निर्विण्णा** निर्वेदं गता । **मदीयेति** ॥ मदीयनासिकाच्छेदमात्रं फलं ( न तु रामप्राप्तिः ) यस्य सः अभिलाषः तस्य विषयः गोचरः राम इत्यर्थः ।

शत्रुघ्नः—किं ते नामेति पृच्छत्ययमार्यः ।

शूर्पणखा—(स्वगतम् ।) मम खलु जन्मकृतं नाम शूर्पणखेति, कर्मकृतं तु विग्रमुखेति । (प्रकाशम् ।) पर्णादिनीति मामृश्यमूकगिरिवास्तव्या मुनयो व्यपदिशन्ति। यतः पुलस्त्यमहर्षेरियं कुलप्रसूतेति मयि प्रसीदन्ति।

भरतः—तर्ह्यनेन तव वचनेन पुलस्त्यकुलीनां भवतीमृश्यमूकगिरेरागच्छन्तीमवगच्छामि ।

शूर्पणखा—अथकिम् ।

शत्रुघ्नः—किं भवती राक्षसी ।

शूर्पणखा—(स्वगतम् ।) किमत्र कश्चित्प्रष्टव्यः । (प्रकाशम् । सकोपम् ।) किं पुलस्त्यवंशप्रभूत्यैव राक्षस्या भवितव्यम् ।

**भरतः**—वत्स, न कोपयितव्या तापसी, न हि विश्रवसो वैश्रवणस्य वा,राक्षसी जातिः ।

शूर्पणखा—(स्वगतम् ।) विभीषणहतकस्यापि तथा । (प्रकाशम् ।) युक्तमुक्तं भद्रेण ।

**भरतः**—कुतो निर्विण्णेव भवती लक्ष्यते ।

शूर्पणखा—तर्हि श्रूयताम् । विनिपातेन सुहृदां (इत्यादि पठति ।)

शत्रुघ्नः—के तव सुहृदः, के तव दुर्हृदः ।

शूर्पणखा—(स्वगतम् ।) राक्षसाः सुहृदो वानरा दुर्हृदः । (प्रकाशम् ।) वानराः सुहृदो राक्षसा दुर्हृदः ।

**भरतः**—(स्वगतम् । साशङ्कम् ।) आर्यपक्षपातिनां विनिपात इति दारुणमिव वर्तते । (प्रकाशम् ।) अयि, पर्णादिनि, ऋश्यमूकगिराववस्थानमुक्तं भवत्या । किं तत्र तेषां युद्धं प्रवृत्तम् ।

---

**प्रश्रितः** विनीतः । **विग्रमुखा** विग्रं विगतनासिकं मुखं यस्यास्सा । **वैश्रवणस्य** कुबेरस्य । **अनुशास्ति** पालयति । **धात्रेयी** उपमातृसुता । **व्यवस्यता**

शूर्पणखा—न हि न हि लङ्काद्वीपे ।

**भरतः**—युज्यत एतत् ।

शत्रुघ्नः—कथमवगतमिदं भवत्या ।

शूर्पणखा—अस्ति खलु किष्किन्धा नाम गुहा ।

शत्रुघ्नः—अस्ति वाली यामनुशास्ति ।

शूर्पणखा—न खल्विदानीं वाली । अपि तु तं निहत्य रघुकुलीनेन रामेण राज्ये स्थापितस्तां सुग्रीवोऽनुशास्ति ।

शत्रुघ्नः—ज्ञायत एतदपि ।

शूर्पणखा—तस्यां गुहायां रुमाधात्रेयी शङ्कुकर्णी नाम मम प्रियसखी कापि वानरी रुमायाः सपत्नीभिः साकमग्निप्रवेशमवेक्ष्य व्यसनमसहमाना ऋश्यमूकगिरौ मम समीपमागता । तया निवेदितमिदं मे ।

**भरतः**—(सावेगम् ।) का रुमा नाम ।

शूर्पणखा—सुग्रीवस्य प्लवंगमाधिराजस्य महिषी ।

शत्रुघ्नः—(सावेगम् ।) कथं सुग्रीवो राक्षसैर्व्यापादितः ।

शूर्पणखा—(सबाष्पगद्गदम् ।) न केवलं सः तत्सचिवोऽपि हनुमान् वालिपुत्रो युवराजोऽङ्गदोऽन्ये सैनिकाश्च ।

शत्रुघ्नः—पर्णादिनि, तत्र गतयो रघुकुलीनयो राजपुत्रयोः कीदृशी प्रवृत्तिः ।

शूर्पणखा—का पुनरन्या भविष्यति । या पुनः मायाविनां राक्षसानामग्रे समुचिता ।

शत्रुघ्नः—(सबाष्पम् ।) कथं माया प्रयुक्ता तयोरपि दारुणं कर्तुं व्यवस्यता राक्षसराजेन ।

शूर्पणखा—तर्हि श्रूयताम् ।

साकेताद्भरतेन भूमिपतिना सैन्या वयं प्रेषिताः
साहाय्याय तवावकर्णितवता लङ्कापुरे सङ्गरम् ।
इत्यागत्य सलक्ष्मणे रघुसुते नक्तं प्रसुप्ते तथा
पौलस्त्यस्य भटैः कृतं नृतनुभिः

भरतशत्रुघ्नौ—(सोद्वेगम् ।) कथं कृतं कथं कृतम् ।

शूर्पणखा—(स्वगतम् ।)

अग्रजं मे दशग्रीवं कुम्भकर्णं च योऽवधीत् ।
हन्यां भरतशत्रुघ्नौ वाचैवास्यानुजावहम् ॥ १७ ॥

(प्रकाशम् ।) नामैव शिष्टं यथा ॥ १६ ॥

भरतः—हा आर्य राम, हा वत्स लक्ष्मण, (इति मोहमुपगतः ।)

शत्रुघ्नः—हा कथमार्यावेवंगतौ । (इति मूर्छति ।)

शूर्पणखा—कथमप्रियमिदमुक्तं युवयोः, कौ युवां समाश्वासितम् समाश्वसितम् ।

उभौ—(समाश्वस्य ।) कथमुभावेवं संवृत्तौ ।

शूर्पणखा—अथ किम् । अनन्तरं च स्वपन्त एव सुग्रीवादयो मत्सुहृदो राक्षसैः शस्त्रपाणिभिः (इत्यर्धोक्ते ।) ननु भणामि कौ युवामिति ।

---

प्रयतमानेन । साकेतादिति ॥ हे राम तव लङ्कापुरे सङ्गरं युद्धं अवकर्णितवता श्रुतवता भूमिपतिना भरतेन तव साहाय्याय सहायत्वाय साकेतात् अयोध्यापुरात् वयं प्रेषिताः इत्युक्त्वा आगत्य नृतनुभिः नरशरीरधरैः पौलस्त्यस्य रावणस्य भटैः नक्तं रात्रौ सलक्ष्मणे रघुसुते रामे प्रसुप्ते सति तथा कृतम् ॥ (अग्रजमिति॥ यः रामः मे अग्रजं दशग्रीवं कुम्भकर्णञ्च अवधीत् हतवान् । अहं अस्य रामस्य अनुजौ भरतशत्रुघ्नौ वाचैव हन्यां हन्तुं शक्नुयाम् ॥ १७ ॥)

नामैवेति ॥ यथा नामैव शिष्टं अवशिष्टं तथा कृतमिति पूर्वेण योज्यम् । शार्दू... ॥ १६ ॥

भरतः—ज्ञायत एव शेषमपि तेपि हता इति ।

शत्रुघ्नः—अयमार्यो भरतः, अहं तदनुजः शत्रुघ्नः ।

शूर्पणखा—(उद्वेगं नाटयन्ती ।) कथं रामलक्ष्मणयोर्भ्रातरौ युवाम् । हा हतास्मि ।

सत्यमप्यप्रियं वक्तुं नार्हमित्यार्यभाषितम् ।
जानानाप्येवमुक्त्वाहं नरके न पतामि किम् ॥ १८ ॥

(इति रोदिति ।)

भरतः—को दोषो भवत्याः, यदन्येनापि वक्तव्यमेवेदमावयोः ?

शूर्पणखा—पृच्छतोऽस्य शत्रुघ्नस्य संबन्धानभिज्ञा शङ्कुकर्ण्या कथितमिदमप्यहमुक्तवती ।

शत्रुघ्नः—कीदृशी सीतादेव्याः प्रवृत्तिः ।

शूर्पणखा—किमिव कथयामि ।

निशाचरेणापहृता निरुद्धा कदर्थिता केलिसखी भवेति ।
तयोरवस्थामपि बोधितासूनुद्बन्धनान्मुक्तवती शुचं च ॥ १९ ॥

शत्रुघ्नः—(सशोकम् ।) हा कथमिदमापतितम् ।

आर्ये जानकि यः प्रवासदिवसे श्वश्रूजनस्त्वां वधूं
पश्यन्वल्कलमार्यदर्शितकटीबन्धक्रमं गृह्णतीम् ।

---

**सत्यमिति** ॥ आर्याणां पूज्यानां भाषितं उक्तिं जानानापि विदन्त्यपि ॥

**निशेति** ॥ निशाचरेण रावणेन अपहृता निरुद्धा अशोकवने उपरुद्धा केलिसखी क्रीडासहचरी भव इति कदर्थिता कुत्सितप्रार्थनाविषयीकृता तयोः रामलक्ष्मणयोः अवस्थामपि बोधिता च सीता उद्बन्धनात् रज्ज्वादिना कण्ठबन्धनात् असून् प्राणान् शुचं दुःखं च मुक्तवती । वृत्तमुपजातिः ॥ १९ ॥

**आर्ये इति** ॥ आर्ये जानकि प्रवासदिवसे वनप्रयाणदिने यस्तव श्वश्रूजनः आर्येण रामेण दर्शितः कट्यां कटिदेशे बन्धक्रमः बन्धनरीतिर्यस्य तत् वल्कलं

शोकान्मोहमुपागतः स किमिदं शृण्वन्विसोढुं क्षम-
स्त्यक्ता यत्किल खिन्नया तनुरभूदुद्बन्धनेन त्वया ॥ २० ॥

**भरतः**—आर्ये, धन्यासि, यया कालोचितमेवेदमाचरितम् । अहं तु न जाने किमिदानीमाचरितव्यमिति ।

शत्रुघ्नः—
वैरं निर्यातयिष्यामो हत्वा वैरिणमाहवे ।

शूर्पणखा—(स्वगतम् ।) निर्वृत्तमेवेदम् । (प्रकाशम् ।)
इदानीं नैष पन्था वां सहाया न हि सन्ति यत् ॥ २१ ॥

अतो विषण्णानां तथाचरन्त्या सीतयैव निरूपितः समुदाचारः ।

**भरतः**—कष्टं भोः कष्टम् ।
नीता एव चतुर्दशापि शरदो यासां दिनेषु क्षणो-
ऽप्येकः कल्पवदास्त मे दिनमिदं त्वार्यागमस्यावधिः ।
प्रायेणाद्य समागतस्य विपिनादार्यस्य पादाम्बुजं
द्रक्ष्यामीति समुत्सुकस्य ननु मे छिन्नोऽभिलाषद्रुमः ॥ २२ ॥
(इति मूर्च्छति ।)

---

गृह्णतीं आददानां वधूं स्नुषां त्वां पश्यन् सन् शोकात् मोहं मूर्च्छामुपागतः । सः खिन्नया दुःखितया त्वया उद्बन्धनेन तनुः त्यक्ता अभूत्किलेति यत् इदं शृण्वन् सन् विसोढुं क्षमः किम् । शार्दू... ॥ २० ॥

**वैरमिति** ॥ निर्यातयिष्यामः विगमयिष्यामः 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च' इत्यमरः वां युवयोः ॥ २१ ॥

**विषण्णानां** दुःखितानाम् । **समुदाचारः** सम्प्रदायः । **नीताइति** ॥ चतुर्दश शरदः संवत्सरा अपि नीता एव यासां शरदां दिनेषु एकः क्षणोपि कल्पवत् प्रलयकालवत् मे आस्त अस्ति स्म । इदं दिनन्तु आर्यागमस्य रामागमनस्य अवधिः अवसानदिनम् । प्रायेण बहुशः अद्य अस्मिन्दिने विपिनात् वनात् समागतस्य आर्यस्य पादाम्बुजं द्रक्ष्यामीति समुत्सुकस्य सम्यगुत्कण्ठावतः मे मम अभिलाष एव द्रुमः छिन्नः ननु छिन्न एव । शार्दू... ॥ २२ ॥

शूर्पणखा—(स्वगतम्) भरत, न केवलं भवतः, ममापि रूपवन्तमिममभिलषन्त्याश्छिन्न एवार्थम् । परं तु नासिकया सार्धमित्यवगन्तव्यम् । (प्रकाशम् ।) वत्स, समाश्वसिहि समाश्वसिहि । कथमितः परं द्रष्टव्यो रामः ।

शत्रुघ्नः—(सोत्कण्ठं सशोकं च ।)

तद्वक्त्रं शरदिन्दुबिम्बमधुरं ते पद्मपत्रायते
नेत्रे तौ रमणीयगारुडमणिस्तम्भोपमानौ भुजौ ।
तौ लक्ष्मीकरपद्मकेलिकमलच्छायौ च पादौ तथा-
भावादार्यरघूद्वहस्य न पुनर्द्रष्टुं मया शक्यते ॥ २३ ॥

(इति मूर्च्छति ।)

शूर्पणखा—(स्वगतम् ।) मया पुनस्तदखिलं दृष्ट्वापि न पूरितो मनोरथः (प्रकाशम् ।) वत्स शत्रुघ्न, समाश्वसिहि समाश्वसिहि । समाश्वासय चैनम् । परं त्वस्य शोकस्य प्रतीकारश्चिन्त्यताम् ।

भरतः—(समाश्वस्य ।)

त्रातव्या मणिपादुके मम पुरस्कृत्य त्वया मेदिनी
वस्तव्यं च वने चतुर्दश मया वर्षाणि तताज्ञया ।

---

**तद्वक्त्रमिति** ॥ आर्यस्य रघूद्वहस्य रामस्य तथाभावात् तादृशस्थितेः । शरदिन्दुबिम्बवत् मधुरं रुचिरं (अत्र उत्तरत्रचोपमा) तत् (आर्यस्य) वक्त्रं पद्मपत्रे इव आयते दीर्घे ते नेत्रे । रमणीयगारुडमणिस्तम्भोपमानौ रम्यगारुत्मतरत्नस्तम्भतुल्यौ तौ भुजौ । लक्ष्म्याः करपद्मयोः पद्मसदृशहस्तयोः स्थिते ये केलिकमले क्रीडापद्मे तयोः छायेव छाया कान्तिर्ययोस्तथाभूतौ तौ पादौ च । पुनः द्रष्टुं मया न शक्यते । शार्दू... ॥ २३ ॥

**त्रातव्येति** ॥ (हे भरत) मम मणिपादुके रत्नपादुकाद्वयं पुरस्कृत्य त्वया मेदिनी भूः त्रातव्या रक्ष्या । मया च तताज्ञया चतुर्दशवर्षाणि वने वस्तव्यम् ।

कामं पूरयितुं ततस्तव भुवं शास्मीति मां लालयन्
यातोऽयं न निवर्तते यदि पुनः शोकं सहिष्ये कथम् ॥ २४

तदहमिदानीमनलं प्रवेक्ष्यामि ।

शत्रुघ्नः—(समाश्वस्य ।) कः पुनरन्योऽस्य प्रतीकारः । (भरतं प्रत्यञ्जलिं बद्ध्वा ।)

आर्येणार्योऽनुगमितो यथा रामेण लक्ष्मणः ।
तथानुगमय त्वं मां प्रवेक्ष्यन्नार्य पावकम् ॥ २५ ॥

शूर्पणखा—(सहर्षं स्वगतम् ।) एतदर्थः खल्वयमारम्भः । (प्रकाशम् ।) वत्स भरत, सम्यगवधारितं भवता । वत्स शत्रुघ्न, भवतापि प्रतीकारः साधु चिन्तितः । अहमपि तपसे न गमिष्यामि । किं तु,

सुग्रीवादिकृतः शोको ममाप्येष सदुःसहः ।
अतोऽनलं प्रवेक्ष्यन्तावनुयास्याम्यहं युवाम् ॥ २६ ॥

भरतः—हा वत्स लक्ष्मण,

येनार्यस्य तदानुरुध्य हृदयं क्षान्तं पितुश्चेष्टितं
माता मे न नियन्त्रिता बलवता नोत्सारिता मन्थरा ।
आर्येणानुगतः पुरादिव वने नाके समीकाङ्क्षणा-
त्स त्वं दर्शितभक्तिरार्यविषये धन्योऽसि नाहं तथा ॥ २७

ततः तदनु तव कामं अभिलाषं पूरयितुं भुवं शास्मि इति मां लालयन् विनोदयन् यातः वनं गतः अयं आर्यः न निवर्तते यदि पुनः शोकं कथं सहिष्ये । शार्दू... ॥ २४ ॥

**आर्येणेति** ॥ अनुगमितः सह नीतः ॥ २५ ॥

**सुग्रीवेति** ॥ अनलं प्रवेक्ष्यन्तौ अग्निप्रवेशं करिष्यन्तौ युवां अनुयास्यामि अनुगमिष्यामि ॥ २६ ॥

**येनेति** ॥ हे लक्ष्मण बलवतापि येन त्वया आर्यस्य रामस्य हृदयं अनुरुध्य अनुसृत्य तदा पितुः चेष्टितं क्षान्तम् । मे माता न नियन्त्रिता न शिक्षिता । मन्थरा च नोत्सारिता नोच्चाटिता । यः त्वं पुरात् वने इव समीकाङ्क्षणात् युद्धाका-

वत्स शत्रुघ्न,

कृच्छ्रेणेदमजप्रजाधिपकुलं शान्ताकुटुम्बी मुनि-
र्वीतापत्यमवर्धयत्करुणया कुर्वन्नपत्योदयम् ।

हा किं ब्रवीमि मन्दभाग्यः ।

रामाद्येषु गतेषु च त्रिषु ततोऽपत्येषु गत्या विधे-
स्तुर्यस्त्वं नय जीवितः पितृजनं तृप्तिं निवापाम्बुभिः ॥२८

शूर्पणखा—(स्वगतम् ।) कथं शत्रुघ्नो जीविष्यति, हन्त किमर्धमेव फलिष्यति मे मनोरथः (प्रकाशम् ।) वत्स भरत, तवैव शत्रुघ्नस्यापि शोकभारः । तन्मन्ये वृथैवायं नियोग इति ।

शत्रुघ्नः—(सास्रम् ।)

प्रियापत्येषु युष्मासु गतेषु रुदतः पितॄन् ।
निवापसलिलैर्बालः कथं तर्पयितुं क्षमः ॥ २९ ॥

तदहमनलं प्रवेष्टुमार्यस्य पुरःसरो भविष्यामि ।

शूर्पणखा—वत्स शत्रुघ्न, तेन हि त्वर्यतामिन्धनानलयोराहरणाय च ।

णात् नाके स्वर्गे आर्येण अनुगतः रामेण सह गतः अत एव आर्यविषये दर्शित-भक्तिस्सन् धन्यः सुकृती असि । अहं तथा नास्मि । शार्दू .. ॥ २७ ॥

**कृच्छ्रेणेति** ॥ शान्ताकुटुम्बी मुनिः ऋश्यशृङ्गऋषिः वीतापत्यं अपत्यहीनं इद अजप्रजाधिपस्य दशरथपितुः अजमहाराजस्य कुलं वंशं कृच्छ्रेण प्रयासेन करुणया दयया अपत्योदयं कुर्वन् पुत्रेष्टियाजनद्वारा पुत्रोत्पत्तिं कारयन् अवर्धयत् ततः तत्र कुले रामाद्येषु (रामे लक्ष्मणे मयि च) त्रिषु अपत्येषु विधेः गत्या दैववशात् गतेषु सत्सु । तुर्यः चतुर्थः त्वं जीवितः सञ्जातजीवस्सन् पितृजनं निवापाम्बुभिः तर्पणजलैः तृप्तिं नय । शार्दू... ॥ २८ ॥

**प्रियेति** ॥ प्रियापत्येषु प्रियेषु अपत्येषु ॥ २९ ॥

भरतः—कष्टं भोः कष्टम् ।

मातः कोसलनन्दने निरवधौ मग्नासि शोकाम्बुधौ
कैकेयि त्वमकीर्तिपङ्कपतितैवाचन्द्रतारं वस ।
पुत्रौ द्वावपि सूतवत्यसि शुचं प्राप्तुं सुमित्रेऽम्ब किं
सर्वानर्थवहेऽनुभुङ्क्ष्व नरकानेकाकिनी मन्थरे ॥ ३० ॥

हा तात, पुरुहूतप्रियसख,

वर्धितं चतुरो यत्नात्सुतान् जनयता त्वया ।
आर्यं प्रेषयतारण्ये नाशितं च रघोः कुलम् ॥ ३१ ॥

शत्रुघ्नः—किमनेन प्रलापेन । संपाद्यन्ते मया तावदिन्धनानि हुताशनश्च । (इति निष्क्रम्य पुनः प्रविश्य ।) आर्य, द्वारदेशे शुष्केन्धनसमिद्धो भगवान् जातवेदाः ।

भरतः—प्रियं मे प्रियं मे ।

शूर्पणखा—(स्वगतम् ।) प्रियमितोऽप्यधिकं मे । (प्रकाशम् ।) वत्स तदुत्थीयतामनलप्रवेशाय ।

भरतः—अयि तापसि, तत्रभवत्या सविनयमरविन्दबान्धवकुलपरमगुरुररुन्धतीसहचरो मुनिवरोऽवगमयितव्यो भरतस्य संदेशम् ।

शूर्पणखा—(स्वगतं सानन्दम् ।) अनेन हेतुना सुपरिहरो ममानलप्रवेशः (प्रकाशम् ।) कथमिव ।

---

**मातरिति** ॥ मातः कोसलनन्दने कौसल्ये निरवधौ निस्सीमनि शोकाम्बुधौ मग्ना असि । हे कैकेयि त्वं अकीर्तिः अपकीर्तिरेव पङ्कः कर्दमस्तस्मिन् पतितैव आचन्द्रतारं चन्द्रनक्षत्रस्थितिपर्यन्तम् वस । हे अम्ब सुमित्रे शुचं दुःख प्राप्तुं द्वौ पुत्रावपि किं सूतवती प्रसूतवती असि । सर्वानर्थवहे समस्तानर्थकारि हे मन्थरे त्वं एकाकिनी असहाया सती नरकान् अनुभुङ्क्ष्व अनुभव । शार्दू...॥३०

**वर्धितमिति** ॥ यत्नात् चतुरः सुतान् जनयता त्वया वर्धितं रघोः कुलं आर्यं रामं अरण्ये प्रेषयता त्वया नाशितञ्च ॥ ३१ ॥

भरतः—

अद्यारभ्य महात्मनेव मनुना पृथ्वी स्वयं पाल्यतां
द्रष्टव्या भवता तथा च न यथा शोचन्ति मे मातरः ।
दिव्यं धाम यथा वसेम वयमप्याशासितव्यास्तथा
शोचन्नार्यमनुप्रयामि यदहं शत्रुघ्नमित्रोऽधुना ॥ ३२ ॥

शूर्पणखा—(स्वगतम् ।) फलतीव मे मनोरथः । (प्रकाशम् ।) किमिदं संदेष्टव्यम् । स्वयमेवायमृषिः सर्वं जानाति (इत्यग्निं प्रदक्षिणीकरोति ।)

शत्रुघ्नः—पर्णादिनि, तूर्णमाचरितव्यमार्यसंदिष्टम् । प्रथममावामेव प्रवेक्ष्यावः ।

शूर्पणखा—(स्वगतम् ।) दृढीयाननयोरयं व्यवसायः, तन्न मे किंचिदिह कृत्यमवशिष्यते । (प्रकाशम् ।) नातिलङ्घनीयं युवयोरनुशासनं विशेषेणास्यां दशायाम् । (इति निष्क्रान्ता ।)

(उभावग्निं प्रदक्षिणीकुरुतः ।)

(नेपथ्ये ।)

वनं व्रजन्तं पितुराज्ञया मे वत्सा कथं नाथमनुव्रजन्ती
दुःखं विसोढेति विषीदतोऽसौ रक्षोहृताभूदिति वज्रपातः ॥ ३३ ॥

---

**जातवेदाः** अग्निः । **अरविन्दबान्धवः** सूर्यः । **अवगमयितव्यः** ज्ञापयितव्यः । **अद्येति** ॥ (हे गुरो) अद्यारभ्य महात्मना मनुनेव भवता पृथ्वी स्वयं पाल्यताम् । किञ्च मे मातरः यथा न शोचन्ति तथा भवता द्रष्टव्याः । यथा वयमपि दिव्यं धाम आवसेम परमपदे तिष्ठेम । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । तथा भवता आशासितव्याः आशास्याः । यत् यतः अहं शत्रुघ्नमित्रः शत्रुघ्नसहितः अधुना अद्य आर्यं शोचन् आर्यं रामं अनुप्रयामि अनुगच्छामि । शार्दू... ॥ ३२ ॥

**वनमिति** ॥ वत्सा बाला सीता पितुः आज्ञया वनं व्रजन्तं गच्छन्तं नाथं रामं अनुव्रजन्ती सती दुःखं कथं विसोढा सहिष्यते इति विषीदतः दुःख्यतः मे असौ सीता रक्षसा हृता अभूदिति वज्रस्येव पातः आसीत् । वृत्तमुपजातिः ॥ ३३ ॥

भरतः—कथमसौ जनकराजः प्राप्तः ।

(पुनर्नेपथ्ये ।)

भो भो माहेश्वरप्रवर,

लङ्कानाथ भवानपि प्रियसखस्त्वं वीतशङ्कः कथं
वत्सां मे हृतवान् ब्रुवे किमथवा जातिस्तवैवंविधा ।

कष्टं भोः, कष्टम् ।

हा वत्से विजने वने दशमुखं दृष्ट्वापहारोद्यतं
क्रोशन्त्या भयशोकविह्वलतनोः सा ते दशासीत्कथम् ॥३४

शत्रुघ्नः—आर्यामुद्बन्धनपरित्यक्तजीवितां न जानात्यार्योऽयं जनकराजः ।

भरतः—कथमेनमार्यमसंभाष्य युक्तमावयोरनलं प्रवेष्टुम् । (इति प्रतीक्षमाणस्तिष्ठति ।)

(प्रविश्य जनकः ।)

जनकः—अहो कथमेतत् ।

अग्निं प्रदक्षिणीकुर्वन्नुच्चावचशिखाकुलम् ।
भरतोऽयं सह भ्रात्रा प्रवेक्ष्यन्निव लक्ष्यते ॥ ३५ ॥

(इति त्वरितमुपसर्पति ।)

लङ्केति ॥ हे लङ्कानाथ त्व मम भवान् पूज्यः 'तत्रभवान् भवान् । भगवान् पूज्यपादश्च' इति वैजयन्ती । प्रियसखः प्रियसुहृदपि वीतशङ्कः निर्भयः कथं मे वत्सां हृतवानसि । अथवा किं ब्रुवे वदामि । तव जातिः राक्षसीजातिः एवंविधा एतादृशरीतियुक्ता हि । हा कष्टं हे वत्से विजने निर्जने वने अपहारोद्यतं त्वदपहरणोद्युक्तं दशमुखं रावणं दृष्ट्वा क्रोशन्त्याः क्रन्दन्त्याः भयेन शोकेन च विह्वलतनोः व्याकुलदेहायाः ते तव सा दशा अवस्था कथं आसीत् । शार्दू..३४

अग्निमिति ॥ उच्चावचाभिः अनेकभेदाभिः शिखाभिः ज्वालाभिः आकुलं सान्द्रम् ॥ ३५ ॥

**उभौ**—आर्य, तत्रभवन्तमभिवादयावहे ।

चरमोऽयं प्रणामस्ते यदावां जहिवस्तनुम् ।
हतौ तौ राक्षसैरास्तां मायया रामलक्ष्मणौ ॥ ३६ ॥

**जनकः**—हा हतोऽस्मि मन्दभाग्यः । ( इति मूर्च्छति । )

**उभौ**—समाश्वसिहि समाश्वसिहि ।

**जनकः**—( समाश्वस्य । )

दीर्घायुषा विजयिना भवितव्यमस्या
भूजन्मनः सहचरेण तथोर्मिलायाः ।
इत्यब्रुवन् ग्रहगतिज्ञजना यदेत-
दासीन्मृषैव मम भाग्यविपर्ययेण ॥ ३७ ॥

हन्त हन्त ।

अद्वैतदर्शनं यन्मे याज्ञवल्क्यानुशासनम् ।
तदपि क्वचिदेवास्ते शोकोऽयं हन्ति मां क्वचित् ॥ ३८ ॥

**शत्रुघ्नः**—आर्या सीतापि । ( इत्यर्धोक्ते । सबाष्पकण्ठस्तिष्ठति । )

**चरमइति** ॥ यत् यतः आवां तनुं देहं जहिवः त्यजावः । ततः ते तुभ्यं अय चरमः अन्त्यः प्रणामः नमस्कारः । तौ रामलक्ष्मणौ राक्षसैः मायया हतौ आस्तां अभवताम् ॥ ३६ ॥

**दीर्घेति** ॥ अस्याः भूजन्मनः सीतायाः सहचरेण पत्या तथा ऊर्मिलायाः सहचरेण च दीर्घायुषा विजयिना च भवितव्यं इति ग्रहगतिज्ञजनाः नवग्रहगतिविदो जनाः अब्रुवन्निति यत् एतत् मम भाग्यविपर्ययेण दैवव्यत्यासेन मृषैव असत्यमेव आसीत् । वसन्ततिलका वृत्तम् ॥ ३७ ॥

**अद्वैतेति** ॥ मे मम द्वयोर्भावः द्विता द्वितैव द्वैतं न द्वैतं यस्मिन् तदद्वैतं दर्शनं ज्ञानं येन तत् अद्वैतदर्शनं केवलात्मज्ञानजनकं यत् याज्ञवल्क्यस्य अनुशासनं उपदेशनं तदपि (मनसि) क्वचिदेव आस्ते । अयं शोकः मां क्वचित् हन्ति ॥

**जनकः**—यदि सापि गता तर्हि प्रियं नः। तथापि परितप्यते मे हृदयम्।

शत्रुघ्नः—परं तूद्बन्धनेन।

**जनकः**—(सास्रम्।) कथं वत्साया एवं जातम्।

द्रष्टव्यदन्तमुकुलं दरहासरम्यं
लम्बालकं तरलरत्नललन्तिकं च।
वक्त्राम्बुजं तव शिशोरनुचिन्त्य वत्से
सन्तापमेति हृदयं बत किं करोमि ॥ ३९ ॥

(सनिःश्वासम्।)

श्रृण्वन् रक्षोहृतां सीतां भरतो मेलयन्नृपान्।
प्रस्थास्यते रिपुं जेतुमिति तुष्टोऽस्म्यहं वृथा ॥ ४० ॥

तदिदानीम्।

अनेन युवयोरर्थे संभृतेनैव वह्निना।
कबलीकृतदेहोऽहं तरेयं शोकसागरम् ॥ ४१ ॥

**भरतः**—मम खल्विदं प्रथमम्।

आर्यस्योपगमालाभादसंपूर्णमनोरथः।
ज्वलनं प्रविशाम्येष जटाभिर्वल्कलेन च ॥ ४२ ॥

**द्रष्टव्येति** ॥ हे वत्स सीते शिशोः तव द्रष्टव्यदन्तमुकुल दर्शनीयदशनकोरकं दरहासेन मन्दहासेन रम्यं लम्बालकं लम्बमानचूर्णकुन्तलं तरला चञ्चला रत्नललन्तिका रत्नमयी किञ्चिल्लम्बमाना कण्ठभूषा यस्मिन् तत्। वक्त्राम्बुजं मुखाब्जं अनुचिन्त्य मे हृदयं सन्तापं एति गच्छति बत कष्टं किं करोमि। वसन्ततिलका वृत्तम् ॥ ३९ ॥

**श्रृण्वन्निति** ॥ मेलयन् सम्मिलितान् कुर्वन् ॥ ४० ॥

**अनेनेति** ॥ सम्भृतेन सम्पादितेन कबलीकृतः भक्षितः ॥ ४१ ॥

**आर्यस्येति** ॥ आर्यस्य रामस्य उपगमस्य प्राप्तेरलाभात् ॥ ४२ ॥

जनकशत्रुघ्नौ—( सास्रम् । ) अतिकरुणमिदमस्य वचनमवकर्ण्यते ।

( नेपथ्ये । )

हत्वा दशाननमवाप्य विदेहकन्या-
मासाद्य कीर्तिमृषिदैवतगीयमानाम् ।
आरुह्य पुष्पकमुपैति सलक्ष्मणोऽयं
रामः कृती भरत मा विश हव्यवाहम् ॥ ४३ ॥

शत्रुघ्नः—( विलोक्य । ) क एष वर्णी प्रियमावेदयति ।

जनकः—( सहर्षम् । ) वत्स भरत, मा त्वरस्व मा त्वरस्व । श्रूयते हि कल्याणी वाणी ।

भरतः—( विलोक्य । ) आर्य, मा मैवम् ।

अप्रियं श्रावयित्वा प्रागज्ञानादनुतप्तया ।
प्रियं निवेद्यते भूयस्तापस्या वर्णिरूपया ॥ ४४ ॥

तदेतन्मिथ्या ( इति त्वरितमुपसर्पति । )

( प्रविश्य पटाक्षेपेण वर्णिरूपः हनूमान् । )

हनूमान्—भरत, मा मैवम् । अहो, कथमहेतुकः क्रियारम्भः । ( इति निवार्य । ) शृणु तावत् ।

रक्षःसैन्यपतिं प्रहस्तमवधीन्नीलश्चमूनायको
देवेनावधि कुम्भकर्ण इति यो दृप्तो दशास्यानुजः ।

---

**हत्वेति** ॥ आसाद्य प्राप्य । गीयमानां स्तूयमानाम् । कृती कृतमनेनेति कृती कृतकृत्यः । हे भरत हव्यवाहं अग्निं मा विश । वसन्ततिलका वृत्तम् ॥ ४३

**वर्णी** ब्रह्मचारी । **अप्रियमिति** ॥ प्राक् पूर्वं । अनुतप्तया पश्चात्तापवत्या । भूयः पुनः ॥ ४४ ॥

**अहेतुकः** निर्निमित्तः । **रक्षइति** ॥ देवेन रामेण । अवधि हतः । दृप्तः गर्वितः । खचरैः देवैः । लूनः छिन्नः दशाननः येन तेन विभुना रामेण । शार्दू ॥

सौमित्रिः कृतरावणात्मजवधः सर्वैः स्तुतः खेचरै-
र्लब्धा लूनदशाननेन विभुना सीता जयश्रीरिव ॥ ४५ ॥

तदनुभोक्ष्यते भवान् सदारानुजरामोपगमकन्दलितमानन्दम् ।

भरतः—मायारणप्रवीणे कौणपगणे कथमार्यस्य तादृशस्येहोपगमो नाम ।

हनूमान्—दैवबलमुपेयुषि रामे न प्रभवति मायाबलं राक्षसानाम्। यथा—तर्हि श्रूयताम् ।

कपटपटुना काकुत्स्थौ यौ दशाननसूनुना
प्रथमसमरे बद्धावास्तां भुजङ्गमयैः शरैः ।

शत्रुघ्नः—इदमेव तापस्यान्यथा श्रुतवत्या मूलापरिज्ञानादुद्वेजिता वयमिति मन्ये ।

भरतः—ततस्ततः ।

हनूमान्—

तदनु विनतापुत्रो वृत्रारिणा प्रहितो रणे

भरतः—वत्स शत्रुघ्न, त्वया विज्ञापितं वसिष्ठमिश्रवचनं संवदतीदानीम् ।

हनूमान्—

यदुपगमनाद्वृद्धो युद्धोद्यमोऽविरुजोस्तयोः ॥ ४६ ॥

---

**कन्दलितं** उत्पन्नम् । **कौणपगणे** राक्षसगणे । **उपेयुषि** प्राप्तवति । न प्रभवति न किमपि कर्तुं समर्थं भवति । **कपटेति** ॥ दशाननसूनुना इन्द्रजिता समरे युद्धे । भुजङ्गमयैः सर्पमयैः । ( **उद्वेजिताः** भयं प्रापिताः । ) विनतापुत्रः गरुडः । वृत्रारिणा इन्द्रेण । प्रहितः प्रेषितः । ( **वसिष्ठमिश्रवचनं** गुरुचरणानां वचनम् 'लङ्कापुरे वानरराक्षसानां' इति श्लोकनिर्दिष्टम् । संवदति अनुकरोति) **यदिति** ॥ यस्य विनतासुतस्य उपगमनात् समीपे आगमनात् विरुजोः विगतनागपाशजनितपीडयोः तयोः रामलक्ष्मणयोः युद्धे उद्यमः प्रयत्नः वृद्धः अभिवृद्ध आसीत् । हरिणी वृत्तम् ॥ ४६ ॥

**शत्रुघ्नः**—कथं भगवति गरुत्मत्युपसर्पति नापसर्पेयुः सर्पमयाः शराः ।

**भरतः**—( सहर्षम् । ) वत्स शत्रुघ्न, विदितेदानीमार्येण कार्यार्थिता दशमुखविनिपातकाङ्क्षिणः शतमुखस्य । य एवमार्यरक्षणाय पक्षिणां प्रभुं प्राहिणोत् ।

**जनकः**—( सहर्षम् । ) कथयतु भवान्निर्व्याजमस्मत्प्राणदाता किंमीयः किंनामधेयो वर्णिवरः ।

**हनूमान्**—

सुग्रीवसचिवो नाम्ना हनूमानस्मि मारुतिः ।
भरतस्यान्तिकं यं स प्राहिणोद्रावणान्तकः ॥ ४७ ॥

**जनकः**—

याज्ञवल्क्य इव त्वं मे माननीयोऽसि मारुते ।
स इवाधिजगे विद्यां सवितुर्यस्त्रयीमयात् ॥ ४८ ॥

शत्रुघ्नः—( सविस्मयम् । ) ननु तापस्या पर्णादिन्या ससैनिकसचिवजनस्य सुग्रीवस्य लङ्कारणे यातुधानैर्विनिपात उक्तः । तत्कथं हनूमतो जीवनं नाम ।

**हनूमान्**—का नाम तापसी पर्णादिनी ।

शत्रुघ्नः—या ऋश्यमूकगिरिवास्तव्या यस्याश्च सुग्रीवादयः सुहृदः ।

---

**गरुत्मति** गरुडे । उपसर्पति समीपमाग[illegible]गति । नापसर्पेयुः न गच्छेयुः । **विनिपातः** वधः । शतमख[illegible] उच्चैः उ[illegible]क्षिणां प्रभुं गरुडम् । **निर्व्याजं** निर्निमित्तम् । **सुग्रीवेति** ॥ [illegible]णां इदं फ[illegible] आन्तिकं समीपम् । प्राहिणोत् प्रहितवान् । रावणान्तकः राम[illegible]

**याज्ञवल्क्य इति** ॥ हे मारुते हनुम[illegible] [illegible]वल्क्य इव मे मया माननीयः असि । यः भवान् त्रयीमयात् वेदत्रयरूपात् सवितुः सूर्यात् स इव याज्ञवल्क्य इव विद्यां वेदादिविद्यां अधिजगे अधीतवान् ॥ ४८ ॥

हनूमान्—( स्वगतम् । ) नैवंविधा काचिदस्ति । ( विमृश्य । ) एतया शूर्पणखया भवितव्यम्, या दशग्रीवकुंभकर्णयोर्वधेन विभीषणराज्यलाभेन च दुर्मनायमानेत्यमात्यसंपातिनोक्तम्। तस्याः किलायं भरतशत्रुघ्नयोः समापनाय यत्नो भवेत् ( प्रकाशम् । ) सा खलु देवे दशग्रीवविजायिनि, अमर्षेण गृहीततापसीवेषा रावणभगिनी शूर्पणखा । यया ननु भवतामप्रियमिदं निवेदितम् ।

भरतः—युज्यत एतत् । अनया खल्वात्मनः पुलस्त्यवंशप्रसूतिरुक्ता ।

हनूमान्—( दक्षिणतो विलोक्य । ) भरत, दृश्यतामसौ लङ्केश्वरविजयी सीतया परिजनैश्च सह पुष्पकारूढो मेघाध्वनोपसर्पति ।

( सर्वे साश्चर्यं पश्यन्ति । )

हनूमान्—नन्विदानीम्,

द्रष्टव्यं भरत द्रुमाद्द्रुममभिप्लुत्योन्नतादुन्नतं
त्वद्भ्रातुः प्लवगाच्छभल्लनिबिडा सेनेयमासीदति ।
यत्पातोत्पतनप्रयुक्तविटपानत्युन्नतिव्याजतो
नन्दिग्रामसमीपविभ्रमवनं नूनं मुदा नृत्यति ॥ ४९ ॥

जनकः—कथं वत्सया सीतयालङ्कृतवामभागो वत्सरामभद्रो वत्सलक्ष्मणेन परिजनैश्च समवतीर्ण एव पुष्पकात् ।

---

**यातुधानैः** राक्षसैः । विनिपातः वधः । **समापनाय** मारणाय । **मेघाध्वना** आकाशमार्गेण । [illegible] ॥ हे भरत तव भ्रातुः रामस्य प्लवगैः वानरैः अच्छभल्लैः ऋक्षैश्च । प्रहितः [illegible] इयं सेना उन्नतात् द्रुमात् उन्नतं द्रुमं अभिप्लुत्य उत्प्लुत्य आसीदति [illegible] यत् तत् त्वया द्रष्टव्यम् । यस्याः सेनायाः पातेन निपतनेन उत्पतनेन उद्गमनेन च प्रयुक्तयोस्सञ्जातयोः विटपानां शाखानां आनत्युन्नत्योः आनमनोन्नमनयोः व्याजतो मिषात् नन्दिग्रामस्य समीपे स्थितं विभ्रमवनं केलीवनं मुदा रामागमनसन्तोषेण नृत्यति नूनं ध्रुवम् । छेकापह्नुतिगर्भोत्प्रेक्षालङ्कारः । शार्दू... ॥ ४९ ॥

**भरतः**—( दृष्ट्वा । सहर्षम् । )

कालाद्बहोः कमललोचनमद्रिकन्या-
कान्तालिकेक्षणपरोक्षितकामरूपम् ।
आर्यं नवाम्बुदकदम्बविडम्बिताङ्ग-
मालोक्य सम्प्रति सुधाभिरभिप्लुतोऽस्मि ॥ ५० ॥

**शत्रुघ्नः**—( सानन्दम् । )

स्यादद्येदमिदं नेति कः फलं वेत्ति कर्मणाम् ।
मग्नमग्निप्रवेशोत्कैर्यदस्माभिः सुधाम्बुधौ ॥ ५१ ॥

( ततः प्रविशति यथानिर्दिष्टो रामः । )

**रामः**—अये जानकि,

सिन्धोः सेतुमतीत्य योजनशतं क्रान्त्वा महेन्द्राचलं
शैलं प्रस्रवणं विलङ्घ्य विपुलामाक्रम्य विन्ध्याटवीम् ।
उत्तुङ्गादपि चित्रकूटशिखरादूर्ध्वं गृहीताध्वना
नन्दिग्राममनेन तीव्रगतिना यानेन नीता वयम् ॥ ५२ ॥

---

**कालादिति** ॥ बहोः कालात् बहुकालानन्तरं कमललोचनं पद्मसदृशनयनं ( उपमा ) अद्रिकन्याकान्तस्य शिवस्य अलिकेक्षणेन फालनयनेन परोक्षितस्य अप्रत्यक्षीकृतस्य कामस्य मन्मथस्य रूपमिव रूपं आकृतिर्यस्य तम् ( निदर्शना ) नवाम्बुदकदम्बेन नवनीरदसमूहेन विडम्बिताङ्गं अनुकृतावयवम् ( प्रतीपं ) आर्यं रामं आलोक्य सम्प्रति अद्य सुधाभिः अमृतैः अभिप्लुतः सिक्तः अस्मि । वसन्ततिलका वृत्तम् ॥ ५० ॥

**स्यादिति** ॥ यत् यतः अग्निप्रवेशे उत्कैः उत्सुकैः अस्माभिः सुधाम्बुधौ अमृतसमुद्रे मग्नं अवगाढं ततः कः कर्मणां इदं फलं अद्य स्यात् इदं नेति वेत्ति जानाति ॥ ५१ ॥

**सिन्धोरिति** ॥ सिन्धोः समुद्रस्य । विपुलां विस्तृताम् । गृहीताध्वना स्वीकृतमार्गेण तीव्रगतिना अतिशायितगमनेन अनेन यानेन पुष्पकेण । वयं नन्दिग्रामं नीताः प्रापिताः । शार्दू... ॥ ५२ ॥

किं च ।

समुद्रमिव निस्तीर्य समरं कपिरक्षसाम् ।
संप्राप्य च शुभाङ्गि त्वां स्व देशं प्राप्तवानहम् ॥ ५३ ॥

**लक्ष्मणः**—आर्य, पश्य पश्य । तातजनकेन्द्रेण वत्सशत्रुघ्नेन च सह समुत्सर्पत्यसावार्यभरतः । य एषः,

जटाकलापं दधदुत्तमाङ्गे कटीतटे वल्कलमप्यनर्हम् ।
तपःकृशाङ्गस्त्वददर्शनोत्थः शोकः शरीरीव पुरो विभाति ॥५४

**रामः**—एवमेवेदम् । किंतु ।

पौलस्त्येन हृता विदेहतनयेत्यन्तर्यदासीत्पुरा
शल्यं तन्मम तावदुद्धृतमभूत्तत्रोचितैः कर्मभिः ।
यच्चान्यद्भरतःश्रियं परिहरन् लब्धामपि क्लिश्यते
मद्धेतोरिति साम्प्रतं तदपि मे दिष्ट्या भवत्युद्धृतम् ॥५५॥

**भरतः**—( उपसृत्य । ) आर्य, दशरथप्रियनन्दन, भक्तवत्सल, सत्यसन्ध, भरतस्यैष चिरकाङ्क्षितस्त्वत्पादकमलयोः प्रणामः ।

( इति सबाष्पकण्ठं प्रणमति । )

( रामः सस्नेहानन्दं बाहुभ्यां समुत्थाप्य परिष्वजते । )

**समुद्रमिति** ॥ समरं युद्धं निस्तीर्य तीर्त्वा ॥ ५३ ॥

**जटेति** ॥ उत्तमाङ्गे शिरसि जटाकलापं जटासमूहं कटीतटे कटिदेशे अनर्हमपि वल्कलं दधत् वहन् तपसा कृशाङ्गः एषः भरतः तव अदर्शनोत्थः अदर्शनजन्यः शरीरी मूर्तिमान् शोक इव पुरः अग्रतः विभाति । वृत्तमुपजातिः ॥५४॥

**पौलस्त्येनेति** ॥ अन्तः मनसि । शल्यं शल्यमिव शल्यं दुःखमित्यर्थः । उद्धृतं उत्पाटितं क्लिश्यते क्लेशमनुभवति । साम्प्रतं अद्य दिष्ट्या दैवात् । शार्दू.. ॥

**रामभरतौ**—( स्वगतम् । )

कर्पूरवापिकागर्भे कलये किं निमज्जनम् ।
मामेतस्य परिष्वङ्गः शीतलीकुरुते तव ॥ ५६ ॥

**रामः**—( प्रकाशम् । ) वत्स दिष्ट्या त्वं दृष्टोऽसि ।

**भरतः**—( प्रकाशम् । ) अत एवार्यस्य मयि कृतार्थीकरणाय प्रसादगरिमा ।

( रामभरतौ प्रति लक्ष्मणशत्रुघ्नावभिवाद्य गृहीताशिषौ तिष्ठतः । )

**रामः**—( उपसृत्य । ) तात जनकराज, दाशरथी रामोऽहमभिवादये ।

**लक्ष्मणः**—तात, लक्ष्मणः प्रणमति ।

**सीता**—ताद[1] णमो दे ।

**जनकः**—( यथोचितमाशिषा वर्धयन्, रामं प्रति । सहर्ष सबाष्पगद्गदम्) वत्स, लङ्केश्वरविजयिन् ।

वत्साया वीर्यशुल्काया यत्तदा पाणिमग्रहीः ।
यच्च वंशे मनोर्जातस्तस्यानुगुणमाचरः ॥ ५७ ॥

---

१. तात, नमस्ते ।

**सत्यसन्ध** सत्यप्रतिज्ञ । **कर्पूरेति** ॥ (यतः) एतस्य तव परिष्वङ्गः आलिङ्गनं मां अशीतलं शीतलं सम्पद्यमान कुरुते शीतलीकुरुते । ततः कर्पूरवापिकागर्भे घनसारदीर्घिकामध्ये निमज्जनं स्नानं कलये किं कुर्वे किम् ॥ ५६ ॥

**प्रसादगरिमा** अनुग्रहाधिक्यम् । **वत्सायाइति** ॥ वीर्यं शिवधनुरारोपणशौर्यं शुल्कं वरादादीयमानद्रव्यं यस्यास्तस्याः मम वत्सायाः पाणिं तथा शिवधनुर्भङ्गप्रकारेण अग्रहीः गृहीतवानभूरिति यत् मनोर्वंशे जात इति यत् । तस्य अनुगुणं अनुरूपं कर्म आचरः अकरोः ॥ ५७ ॥

**रामः**—( सविनयमञ्जलिं बद्ध्वा । ) ब्रह्मविदस्तत्रभवतो भवतः प्रसादात्, अगस्त्यवसिष्ठकौशिकप्रभृतीनामृषीणां शिवानुसंधानात्, इन्द्रादीनाममृतान्धसामनुग्रहाच्च निगृहीतो दशकन्धरः ।

( ततः प्रविशति कौशिकः । )

**कौशिकः**—( स्वगतम् । ) सफलमद्य मे देवजननिदेशाचरणं, यद्रावणो रणे रामभद्रेण निहत इति समाधिदृशा समदर्शमहम् । तथा खलु मे देवजनस्य निदेशः ।

रामे यथा भावि दशाननस्य वैरं स्ववर्गीणनिपातनेन ।
यथा वधायास्य च राघवोऽलं स्यादस्त्रदानात्क्रियतां तथेति ॥

( इति परिक्रामति । )

**रामः**—( दृष्ट्वा । उपसृत्य । ) भगवन् ऐक्ष्वाकोऽहमभिवादये ।

**कौशिकः**—वत्स सिध्यतु तव मनोरथः ।

( इतरेऽपि कौशिकं प्रणमन्ति सोऽपि तानाशिषा यथोचितमुपचरति । )

**कौशिकः**—(रामं प्रति ।) सम्प्रति हि,

त्राता महर्षयस्त्राता देवास्त्रातं जगत्रयम् ।
त्रैलोक्यकण्टकं हत्वा दशकण्ठं रणे त्वया ॥ ५९ ॥

**रामः**—सर्वमिदं भवत्प्रसादात् ।

**तातेति** ॥ ताततुल्यस्य ब्रह्मज्ञानिनः । **शिवेति** ॥ मङ्गलचिन्तनात् । अमृतान्धसां देवानाम् । **समाधिदृशा** ध्यानदृष्ट्या । समदर्शं सम्यगपश्यम् । **रामइति** ॥ यथा दशाननस्य स्ववर्गीणानां स्ववर्गभवानां ताटकादीनां निपातनेन वधेन रामे वैरं शत्रुत्वं भावि भविष्यति । यथा च अस्त्रदानात् रामाय जृम्भकाद्यस्त्रदानात् राघवः अस्य रावणस्य वधाय अलं समर्थस्स्यात् तथा क्रियतामिति वृत्तमुपजातिः ॥ ५८ ॥

**ऐक्ष्वाकः** इक्ष्वाकोर्गोत्रापत्यं पुमान् । **त्राताइति** ॥ त्राताः रक्षिताः । त्रैलोक्यकण्टकं जगच्छत्रुम् ॥ ५९ ॥

भरतः—भगवन् कुशिकनन्दन, युष्माभिरिहैव राज्ये तमेनमार्यमभिषिच्य, सोऽयमयोध्यां प्रवेशयितव्यः ।

जनकः—अहो विलम्बासहिष्णुता भरतस्य ।

हनूमान्—एते सुग्रीवविभीषणप्रभृतयः स्वामिनः प्रियसुहृदोऽप्येवमुत्कण्ठन्ते । तदहं त्रिभिर्वानरैः सह समुद्रजलमानेष्यामि ।

(इति निष्क्रान्तः ।)

जनकः—वत्स शत्रुघ्न, वसिष्ठप्रमुखानृषीन् पुरोधसो मन्त्रिणश्चोपस्थापय ।

शत्रुघ्नः—तथा । (इति निष्क्रान्तः ।)

सीता—(स्वगतम् ।) [२]लंकेसुरविजइणो अज्जउत्तस्स रज्जाहिसेअत्ति णंदइ मे हिअअं ।

(नेपथ्ये ।)

सज्जन्तामधिभद्रवेदि रुचिराः श्रीगन्धपुष्पाक्षताः
स्थाप्यन्तां शुभवारिपूर्णकलशाश्छत्रं तथा चामरे ।

२. लङ्केश्वरविजयिन आर्यपुत्रस्य राज्याभिषेक इति नन्दति मे हृदयम् ।

**उत्कण्ठन्ते** अभिलषन्ति । **उपस्थापय** समीपं प्रापय आनयेति यावत् । **सज्जन्तामिति** ॥ अधिभद्रवेदि पट्टाभिषेकमङ्गलवेदिकायां रुचिराः रम्याः श्रीगन्धाः चन्दनादिगन्धद्रव्याणि पुष्पाणि अक्षताः अखण्डितकुङ्कुमाक्ततण्डुलाश्च सज्जन्तां सज्जा भवन्तु । शुभार्थाः वारिपूर्णाः कलशाः कुम्भाः छत्रं आतपत्रं तथा चामरे च स्थाप्यन्ताम् । तत्र काञ्चन्यः कन्याः सन्तु । उपान्ते समीपे वाजिना अश्वेन सह गजः वसतु । पटहाः आनकाः ताड्यन्ताम् । यतः अधुना इदानीं रघुपतेः पट्टाभिषेकः ततस्सज्जन्तामिति पूर्वेण योज्यम् । शार्दू... ॥ ६० ॥

कन्याः काश्चन तत्र सन्तु वसतूपान्ते गजो वाजिना
ताड्यन्तां पटहा यतो रघुपतेः पट्टाभिषेकोऽधुना ॥ ६० ॥

**जनकः**—वसिष्ठस्यायं निर्देशः ।

( प्रविश्य ।)

**शत्रुघ्नः**—( रामं प्रति । ) सर्वे उपस्थिताः ।

( ततः प्रविशति वसिष्ठः । )

**वसिष्ठः**—सखे कौशिक, सीतारामावस्मिन् सिंहासने निवेश्य, महर्षिभिरन्यैश्च सहाभिषिञ्चावः ।

**कौशिकः**—यथा रोचते मैत्रावरुणये ।

**जनकः**—अभिषिक्त एव रामभद्रः क्षौमाभरणादिभिः प्रीतिदानैः सम्भावयति पौरजानपदान् । कथं दिवि देवदुन्दुभिध्वनिः, पुष्पवृष्टिः, अप्सरसां नटनारभटी च ।

**कौशिकः**—वत्स, किं ते भूयः प्रियमुपहरामि ।

**रामः**—

निर्विघ्नं मम जानकीपरिणयो जातः प्रसादेन ते
पौलस्त्यं सगणं विजित्य समरे प्रत्याहृतेयं प्रिया ।
दृष्टोऽयं भरतश्चिराभिलषितो राज्याभिषेकोऽपि मे
लब्धः किं प्रियमन्यदस्ति भुवने यत्साधनीयं त्वया ॥ ६१

---

**मैत्रावरुणये** वसिष्ठाय । **क्षौम** दुकूलम् । **नटनारभटी** नर्तनाडम्बरः । **निर्विघ्नमिति** ॥ समरे युद्धे । प्रत्याहृता पुनः प्राप्ता । चिरात् अभिलषितः अयं भरतः दृष्टः चिरात् ( सर्वैः) अभिलषितः मे राज्याभिषेकोपि लब्धः । भुवने जगति यत्प्रियं त्वया साधनीयम् तत् ( उक्तेभ्यः ) अन्यत् किं प्रियमस्ति । शार्दू... ॥ ६१ ॥

तथापीदमस्तु ।

(भरतवाक्यम् ।)

* मार्गं दर्शितमाश्रयन्तु मनुजाः मन्वादिभिः श्रेयसे
राजानोऽप्यगृहीतपैशुनगिरो रक्षन्तु धन्या महीम् ।
लाल्यन्तां सरसोक्तयश्च कवयः शश्वद्रसज्ञैर्जनैः
स्यादेतस्य कवेश्च भक्तिरचला देवे रघूणां प्रभौ ॥ ६२ ॥

(इति निष्क्रान्ताः सर्वे ।)

**॥ इति श्रीरामभद्रदीक्षितकृते जानकीपरिणयनाटके सप्तमोऽङ्कः ॥**

**॥ ॐ तत्सत् ॥**

---

इदं वक्ष्यमाणम् । **भरतवाक्यं** नाट्याध्यक्षस्य वचनम् । **मार्गमिति** ॥ मनुजाः मनुष्याः श्रेयसे ऐहिकामुष्मिकसुखाय मन्वादिभिः दर्शितं मार्गं आश्रयन्तु । राजानोपि अगृहीताः (पिशुनानां सूचकानां इमाः) पैशुन्यः गिरः वाचः यैस्तथोक्ताः अतएव धन्याः सुकृतिनश्च सन्तः महीं रक्षन्तु । सरसोक्तयः रसवद्वचनाः कवयश्च शश्वत्सदा रसज्ञैः रसविद्भिः जनैः लाल्यन्तां विनोद्यन्ताम् । किञ्च एतस्य कवेः रामभद्रदीक्षिताख्यकवेः देवे रघूणां प्रभौ श्रीरामे अचला स्थिरा भक्तिस्स्यात् । शार्दूलविक्रीडितवृत्तम् ॥ ६२ ॥

आनन्दितमुचुकुन्दं बृन्दारकबृन्दवन्द्यमद्वन्द्वम् ।
सुन्दरपदारविन्दं मुकुन्दमानन्दकन्दमभिवन्दे ॥

इति श्रीश्वेतारण्यनारायणशर्मणः कृतिषु जानकीपरिणयव्याख्यायां
बालरञ्जन्याख्यायां सप्तमाङ्कव्याख्या समाप्तिमगमत् ॥

* आचन्द्रार्कमिदं भवेदविरल गोब्राह्मणेभ्यः शुभ
भूयाच्चागमतत्त्वसेविभिरियं राजन्वती राजभिः ।
लाल्यन्तां सरसा वयं च कवयश्शश्वद्रसज्ञैस्सभा
स्यादेतस्य कवेश्च भक्तिरचला देवे रघूणां प्रभौ ॥

इति पाठान्तरम् ।

---

चेन्नपुर्यां "ओरियण्टल्" मुद्राक्षरशालायां मुद्रितम् ।

# JANAKIPARINAYAM.

## BENEDICTION.

May the lotus-feet of Krishna protect you—those feet which, at the sweet sound of the flute tuned by him in the garb of a shepherd boy, the cows at a distance came running with joy to lick with their tongues, as if to drink the grape juice of the Upanishads adhering to his feet or to scrub the drops of sandal from off the bodikins of the Gopika women.

May Parvati protect you—She, who, by her askance eyes chastised her friend who jested with her, saying "O, friend, I have rubbed of the dust of the *cassia fistula* which were clinging to your legs, and have daubed thereon the red lac; I have rubbed also the ashes that were clinging to your breasts and tatooed them with the Makarika leaves. You may now disport with your husband as you please."

(*At the end of benediction*)

PRELUDE.

*Manager*—(*Looking in front*). This assembly of good men is learned in the shastras and they are well-acquainted with the art of the drama, before whom poets may display for approval their tasteful productions, who are intent upon forwarding the interests of those who seek their refuge, who are to be revered by all and whose presence is to be obtained only through merit. Therefore I shall display, before these men of praiseworthy virtues, and in accordance with Bharata's Science, the art of representation which has been the hereditary profession of our family, and gratify myself

(Listening to some voice in the sky). Men of the assembly, what do you say? do you ask me to enact a drama, newly composed, which contains a plot easily understood and which is pregnant with delicious thoughts? A wonder! a wonder! The assembly order me to do what I had already been pondering over. This is but a fortune. (Looking towards the curtain). Lady, come hither.

*Enter Actress.*

*Actress*—Sir, I am come here.

*Manager*—Did you hear what the great men of the assembly said?

*Actress*—(*Hearing a sigh*). I heard, Sir, I heard: but I hear that my daughter Kamalini who had been designed to be married to your nephew Kalahamsa is to be abducted by a wicked songster, named Mahamaya, fraudulently disguised as Kalahamsa. Therefore I am anxious about the fulfilment of Kamalini's desires without obstruction.

*Manager*—Do not you be sorry. I have arranged a songster named Brihatpala to bring about the match between Kamalini and Kalahamsa: let Mahamaya be as handsome as Kalahamsa; that Kalahamsa is superior to Mahamaya will be shown by his learning itself. Therefore, in order to please this audience, sing a song to the present spring season. Look here! the cuckoo, plucking the fresh sprout by its bill, pursues the mate that is near and by the wind caused by the fluttering of its wings drives the bees and disports on the mango trees, making noise.

*Actress*—Yes, that is true; but although I long thought over a drama of the nature which the audience want us to enact, I do not think of any.

*Manager*—(*Laughing*). How did you forget it, that you were taught the newly composed drama, named JANAKIPARINAYAM.

*Actress*—(*With joy*). It is a fortune that you reminded

me. Sire! The poet who composed this is Ramabhadra Deekshita who came from the great Yagnarama Deekshita as the moon rises from the sea.

*Manager*—You have reminded me well. The intellectual excellence of this man is extolled by Sri Neelakanta Deekshita in the assembly of Pandits; the Konda Astrologer gives him a prize equally with the great; he has received his blessings from his preceptor named Balakrishna; and he is the son-in-law of Chokkanatha Deekshita. The play which this poet has composed is made sacred because it narrates the story of Sri Rama. And the people of the assembly are men of good taste. All this is my fortune. Therefore begin to sing.

*Actress*—(*Sings*). Now does every woman bedeck her locks with the *Vakula* flower and disport with her lover whose fatigue at the close of such sport is soothed by the smell of that flower: Again, the women, wearied with the sports, are extolling the wind that passes through the windows and allays the sweat of their exertions. Moreover,— (*Trembling with fear*).

*Manager*—I see that by your song the audience is as in a picture. What, you timid creature, why do you tremble without cause when you should feel proud?

*Actress*—What! do you not see that a Rakshasa is coming hither? How shall I be without trembling? (*Moves a little*).

*Manager*—(*Looking*). Lady, do not fear. He is my brother-in-law entering the stage in the guise of Sarana, the servant of Ravana. Therefore we shall make ready for what ought to be done hereafter. (*Exeunt.*)

(Here ends the Prelude.)

## ACT I.

### Prologue.

*Enter* Sarana.

*Sar.*—(*Looking in front; with joy*). Here comes Suka whom my master, Maharajah Ravana, whose feet is bowed to by the gods and demons, sent to Mithila in order to get the news from that place.

*Enter* Suka.

*Suka.*—Dear Sarana, what is the matter?

*Sar.*—Have you sped well in your mission?

*Suka.*—I shall tell you. Where do you go now?

*Sar.*—My lord has given me orders.

*Suka.*—What?

*Sar.*—"It is said that king Janaka has a foster-girl by name Seeta; that she sprung from a place of sacrifice and that she is the incarnation of beauty in all the three worlds. You should arrange with king Janaka to bestow her on me."

*Suka.*—It is a wonder to behold the unprecedented modesty which even such a lord shows to a man. With him, the capture and arrest of heavenly damsels is as easy as the sport in the mud is to a child. It is likely that his failure to think of abducting this Seeta forcibly is because of the faith that Janaka has in Siva.

*Sar.*—Is it even so?

*Suka.*—Sir, hear the news of this town of Mithila.

*Sar.*—Go on.

*Suka.*—That that girl has, of her own accord, fixed her affections on Rama who is possessed of all the virtues in the world, is known to king Janaka who has approved of it, and fearing mischief from Ravana he has entrusted the task of bringing the son-in-law to the sage Viswamitra who performed the miracle of creating a second heaven.

*Sar.*—(*Smiling and with anger*). Alas! the time is out of joint: that our lord proceeds in the straight way and the lord of the Videhas in the crooked way! Go on.

*Suka.*—And that sage has set out to invite Dasaratha with his wives and children as if for his sacrifice. Janaka also invited by Viswamitra, has put the reins of government in Mithila into the hands of his brother, Kusadhwaja, and with the pretence of attending the sacrifice has already come to the hermitage of Viswamitra, along with his daughters.

*Sar.*—Considering this arrangement I think that the marriage of Seeta and Rama will be accomplished; yes, let it be. As I was ordered by Ravana, I shall also go to Kousika's hermitage where king Janaka lives.

*Suka.*—What is the use of going there?

*Sar.*—Do not say so. Our Maharajah was born in the far-famed family of Brahma and is famous for his wealth. Again, Indra who has performed a hundred sacrifices abides, in modesty, by all his orders. If such a Maharajah should aspire to the hand of a girl, who will stand in the way of his desires?

*Suka.*—Even in that case, king Janaka is powerful enough to make his prayers futile seeing that he does not meet with the approval of his daughter.

*Sarana*—(*Reflecting a little*). She might not have known of the family of Ravana abounding in riches; but how can she not have heard of the deeds of the conqueror of the universe? Leaving aside our master, who is the unconquerable Ravana, how does Seeta bestow her love on a man's son? (*With a deep sigh*). At first the love which Seeta, the daughter of the Videha king, bears to Rama, the son of Dasaratha, should be frustrated and then her love should be directed to flow to our lord.

*Suka.*—This is not possible.

*Sara.*—Then what course may be taken to attain Seeta? (*Reflecting a little, and then with joy*). Inasmuch as Rakshasas generally carry away by force or guile maidens of beauty, she, Seeta, ought now to be guiled away by our master in the guise of Rama. Seeta will soon find the imperishable riches of the bridegroom and be pleased; and Janaka, the devotee of Siva, will acquiesce in it and become pleased with his son-in-law, also a devotee of Siva. Therefore our king must be made to approach Janaka in the guise of Rama, accompanied by Vidyutjihwa in the guise of Kousika.

*Suka.*—Sir, well-thought. There must be something done also to prevent the return of that Kshatriya-Brahman, who officiated at Trisanku's sacrifice and who has gone to Ayodhya.

*Sara*—Friend, you have spoken right. But who can do it if not lady Thataka? For, the Rakshasi bears the strength of a thousand elephants; she would assail under cover and if discovered she would be let off as a mere woman. Therefore you will please arrange with Thataka. I shall communicate this news to our master.

(*Exit* Suka).

*Sara.*—(*Looking in front, and with surprise*). What! the lady Thataka has appeared the moment she was thought of. In her descent from the sky, as she opens her mouth and makes a howl, her breasts bedecked with garlands of bones scatter the clouds around. The tresses of her hair fly in all directions being wafted by the wind caused by the fluttering wings of vultures which come to pick the flesh that clings to the palate. Seeing her at a distance, the heavenly damsels fly up in a hurry into the sky.

*Enter* THATAKA *as described above.*

*Sara.*—(*Approaching*). Lady, I salute thee.

*Thata.*—What! Sarana? May you live long!

*Sara.*—Lady, where do you go?

*Thata.*—At the request of Parasurama, who is a relation of Kousika and a devotee of Siva, our Maharaja, Ravana, also a devotee of Siva, has ordered me to go and prevent my son Maricha from causing hindrance to the sacrifice of Viswamitra.

*Sara.*—(*Laughing*). Look at the stratagem of this Kshatriya friend, the son of Gadhi. Lady, with the pretence of sacrifice, Janaka and Kousika have thus attempted to bring about the marriage of Seeta and Rama.

*Thata.*—Why should they pretend ?

*Sara.*—They fear that our Maharaja may desire her hand.

*Thata.*—If so, I shall myself carry away Janaki to our Maharaja.

*Sara.*—That must not be. If carried by force, Seeta would not bestow her affections on Ravana. Further, as our Maharaja has faith in Janaka, who is a devotee to Siva, he would not acquiesce in it. Again, when on the Himalayas our lord forced Rambha, she cursed him. Therefore it will be harmful to our Maharaja to force an unwilling woman. But you should do thus (*whispers.*)

*Thata.*—(*With joy*). Boy, you have thought well. In this way shall Seeta fall into the hands of Ravana. It is proper to defraud those who attempt to defraud others. I shall take the help of Maricha and kill that Viswamitra who will be sleeping quietly at night on the way, along with his attendants. You go to Lanka and make Ravana start.

(*Exit.*)

*Sara.*—As it is not sure that Thataka will succeed, I shall go to send Maricha, the conjurer, with his attendants, to give her help. (*Exit* )

(HERE ENDS THE INTERLUDE).

*Enter* RAVANA *with* VIDYUTJIHWA *and* SARANA.

*Das.*—My twenty eyes yearn to see Seeta the daughter of Janaka, and my twenty arms throb likewise to embrace

her; why not I burn this form of mine which is not to her heart's taste; and yet it is a pity that I have to assume the form of a man. It is not wrong not to display my innate violence of temper because I consider that king Janaka, whose standard is the plough, is a devotee of Siva. But how, alas! shall I wear this unseemly garb, setting aside my honour and dignity for the sake of his daughter?

*Sara.*—Have done with your fear about loss of honour. Formerly, at the Swayamvara of Damayanti, the guardian spirits,—Indra, Yama and others—trod the way which you are now to follow. It is not unprecedented.

*Vidyut.*—(*With hairs on end. To himself*). Janaki is as inaccessible to our Lord as Damayanti was to the guardian spirits. (*Aloud*). O, mighty king, the heart of Seeta, daughter of the Earth, is subdued by child Raghava born in Raghu's family. You cannot by any means turn that heart unto you. Further, king Janaka is your friend and you have much faith in him. Therefore the only straight way to attain that girl is this.

*Das.*—Yes, let it be. It is not right for me to reject what you both say. Therefore, Sarana, you go and fetch the *pushpaka* car in order that I may set out.

*Sara.*—As my lord commands. (*Exit.*)

*Enter* SARANA *with the Pushpaka.*

Maharaja, here is the car brought.

*Vidyut.*—This is a witness to your world-wide conquests, with hangings of pearls clouded by the heavy sighs of women whom you have brought captive to you, untouched by the winds from heaven for fear that the scents of their flowers will blow on it, and hidden by the clouds. Such a pushpaka car is now getting down the sky.

*Das.*—(*Seeing the car and with fear and smile*). Oh! it seems to me that even this car is not as it was and presumes to be new as if I am powerless and as if it thinks that

I am Ravana through mere fraud. For, the cars do not all step aside at sight of this as before; the gods do not raise the folded hands and adore; the Siddhas and Vidyadharas do not applaud as before; nor do I hear as before the noise of the drums beaten with the hands of heavenly damsels mingled with the uproars of intoxicated Rakshasas.

*Vid.*—Mighty king, it is not so. After the celebrater of the great festival of the marriage of Seeta subdued by the grasp of a form agreeable to her taste, when Janaka should exult at the acquisition of the lord of the world for his son-in-law, and when the Maharaja should return with the maid glorying at your magnificence, this pushpaka car will become what it was before. Therefore, my lord, please get up.

*Das.*—(*Gets up the car along with Vidyutjihwa*).

*Sara.*—Look, mighty king, look. Scarcely has your car got beyond the precincts of Lanka when even the ocean is unruffled, habited as it is by the turtle, the shark and fish; here is the orb of the sun, devoid of heat, like a mirror of precious stones; and even the wind blows so gently as to move but the tender leaves of the sandal creeper.

*Vid.*—Is this an object of wonder in this person of ten heads who lifted and played with the Kylas mountain as with a ball, who took as captive the Indra of the gods who quelled Jambasura, and who is possessed of a deal of conjuring skill?

*Das.*—(*Reflecting*). Against the Kylas mountain I displayed the prowess of my arms and against the guardians of the eight corners of the Earth I displayed the skill in my arms; and for one in my position it is but just that I should now display to king Janaka himself my skill in assuming shapes which I have not hitherto revealed. Therefore, Sarana, let the car go quick.

*Sara.*—Mighty king, do you not behold the quickness with which this car ascends. For, look aloft! as this car is going up, the sky, mighty as the mountains, with its stars appears to get down; and here below this Earth is going out

of sight; the seas around it appear as lines; and the mountains of sunrise and sunset, filled with stones and trees and creepers appear all even.

*Vid.*—Oh! with one bound has this quick car brought us to the holy hermitage of Viswamitra. Behold! all round the hermitage there stand clusters of young trees laden and bent with innumerable fruits, and in the jungles that surround the hermitage you see the beasts and birds moving in peace and quiet, undisturbed. And behold here the waters of the Kousiki river dashing against the rough stones on the slopes of the hill and flowing fast by the bower of rushes that grow on its banks; the wild elephants play in plucking with their trunks stalks of lotus that grow in this river; and on both banks of this river are birds cooing away in their intoxicated joy.

*Das.*—(*Looking at Sarana, with anxiety*). Let our car descend in the direction where blows the wind through the lotus flowers soft as the breath of Seeta, and where the Chakravaka birds fly up in pairs and make noise, frightened at the shaking of the tresses on the heads of the sages doing penance with their bodies plunged to the neck in the water.

*Sara.*—Mighty king, the pushpaka car has got down in accord with your desires. We shall all get down from the car at this beautiful Kousika region. (*They all get down the car.*)

*Das.*—Let this car remain here invisible to anybody till we return.

*Sara.*—Hereafter we shall all resort to the art of *Thiraskarani* (magic) and roam about in this place unseen by any. For, here, at the feet of those lofty spreading trees that grow around are tiger skins and *darba* seats lying close and thick, and on their boughs hang bright deerskins and barks; and therefore it appears to be the hermitage of Viswamitra.

*Das.*—Sarana has spoken the truth. For, we should learn in secret all that takes place here.

*Vid.—(Shuts his eye and reflects on the magic art.)*

*Das.*—Who are these two Brahmacharis who with sacrificial sticks and grass in their hands, come hither looking all round? They are coming towards us.

*Sara.*—Sire, they may be the disciples of Viswamitra.

*Enter* TWO BRAHMACHARI BOYS.

*First*—At the time of his departure to the city of Ayodhya, the mighty sage Viswamitra left me injunctions to preserve the fire at the Agnihotra Sala. Therefore I have brought sacrificial sticks and Darba grass from Kousiki banks. (*Comes round.*)

*Second*—I have now brought sacrificial sticks and grass in accordance with the orders of sage Satananda who is the family priest of king Janaka and the son of Gautama. Therefore I should go to the home of king Janaka. (*Comes round.*)

Friend Satyavrita, how long is king Janaka to stay in the hermitage of Kousika? Tell me, if you know it.

*First*—Till the final ablution of my family priest Viswamitra after the close of the sacrifice.

*Das.*—These two appear to be the disciples respectively of Viswamitra and Satananda. Therefore we shall, under cover, hear what these talk to each other.

*Sar.*—Mighty king, do you not see that Vidyutjihwa has put into practice his magic art? Therefore, what need is there to be hiding?

*Das.*—(*With joy*). What shall I say of the glory of the art. Not only are we invisible to others, but what we speak is not also heard by them.

*Vid.*—Mighty king, we shall roam about here fearlessly.

*Second*—Satyavrata, when there are Rakshasas who are prone to destroy the sacrifice, how may Viswamitra begin to perform one?

*Satya.*—Devavrata, listen. At the time that this Viswamitra, in his wrath, set about to create a new heaven, all the gods began to tremble and extolled his virtues to the deafen-

ing of his ears as you know. And when he was thus in his wrath, did not the God Brahma himself, wringing his hands in trepidation, come from the Satyaloka to this Earth and appease his anger? And what fear will Viswamitra, such a treasure of penance, have for the Rakshasas?

*Vid.*—Sarana, did you hear this Brahman boy's speech?

*Sara.*—Therefore it is that our Maharaja has sent Maricha, the skilled conjurer, to attack Viswamitra.

*Vid.*—This is but just. For, this Maricha, when he formerly fought with the gods, wrought fear in them by displaying the unparalleled force of his magic and covering the skies now with pitch darkness, now with mighty clouds, now with smoke and anon with dust.

*Das.*—(*Looking at Vidyutjihwa with affection and respect*). Vidyutjihwa, as the snake alone knows the feet of the snake, the force of Maricha's magic is known only to you, the conjurer.

*Devavrata*—My friend, you said that Viswamitra was a great treasure of penance, and that is perfectly true. For, behold! In his hermitage here, when the lion yawns, the young elephant fearlessly drags with its trunk the fangs of the lion which shows themselves out in all the whiteness of a lotus-stalk. Again, this young calf, while its mother has gone out grazing, sucks at the teats of the tigress dwelling in the cave. Further, who in the world can fathom the might of this glorious person who rescued from danger Sunassepa, who, being sold away by his parents and tied to a sacrificial stake as a sheep was blinking all around not knowing how to protect himself.

*Vid.*—It would seem that this Brahman boy does not know the force of Maricha's magic. Therefore it is that he talks thus.

*Sara.*—Let it be. What harm is it? It is usual with every person to extol his own connections.

*Vid.*—Let this be. But look at Maricha's skill. This Maricha, unseen by any, entered the sacrificial altar where

three fires were burning, killed the priests who were there, broke the vessels that were to be used for the sacrifice, ate the beasts that had been tied there, took away the oblations, put on an ugly face and frightened all the wives of the sages. Who does not know that it is difficult to control such a Maricha?

*Satya.*—Therefore it is that sage Viswamitra, aspiring without doubt to perform the sacrifice, has gone to the city of Ayodhya to invite his dear friend, king Dasaratha, who is the glory of the Ikshwaku family.

*Sara.*—(*Smiling in anger*). This Viswamitra has forgotten that he entreated our Maharaja, through Parasurama, not to frustrate his sacrifice. And now indeed he is going to perform the sacrifice fearlessly.

*Vid.*—Sarana, why should you get enraged at what that fool of a Brahman said? Whatever Viswamitra does is secret.

*Sara.*—His entreaty to our Maharaja through Parasurama has not been revealed even to his disciples. What does he gain by doing so?

*Vid.*—In order that those who surround him may all believe in him that he is capable of executing their business. You said that Janaka had arranged with him to get a son-in-law for him. That is why he does all this.

*Sara.*—(*Laughing*). Thinking that this person is a man of power, that deceitful Janaka has made this arrangement. Let me narrate his prowess. This Kausika is indeed a mighty man who went to do penance not knowing what to do when the army of the Sakas and Mlechas, created out of the body of Vasishta's sacred cow, broke his standard, threw down his chariot-horses, broke his chariot, cut his bow and drove him afar from the field of fight.

*Deva.*—I hear that through the glory of the sacrifice which Rishya Sringa performed for that king Dasaratha,

four sons have been born unto him and that they are undergoing the rites of Brahmacharis.

*Satya.*—I hear that of those four sons, Rama the effulgent who abides by his father's wish, is highly virtuous, standing like Brahma among all the creation.

*Das.*—(*With jealousy*). What did this Brahman boy say?

*Vid.*—Mighty king, men say so.

*Sara.*—That is why Janaki has cast her desires on him. And that is the very reason why Maharaja also has taken up the form of that Rama in order to marry Janaki.

*Deva.*—(*Nodding his head*). I have heard the priest Satananda, son of Gautama, often telling to Janaka of the virtues of Rama, befitting his name; that this Rama is a great warrior, is friend to all, is patient though brave, possesses power without pride, does not swerve from the duties of a Kshatriya which bestow good on all the world, knows the duties well, is pure in mind and body, is truthful, is merciful to the poor, diligent and intelligent, and skilled in the arts of the weapons so that he might be called the lord of the world.

*Das.*—(*To himself, with hair on end*). What! do all these virtues really find a place in him? (*Aloud*) This Brahman boy is repeating the ravings of that Satananda the unworthy son of Gautama, before king Janaka whose food he is eating.

*Vid.*—(*Perturbed*). Sarana, our Maharaja had for a long time been keeping in custody the Devendra who in a night clandestinely had intercourse with Ahalya, the mother of this Satananda, and ravished her. Instead of praising our Maharaja, the lord of Lanka, who did him such good, this son of the harlot Ahalya is extolling Rama!

*Satya.*—Therefore it is I think that Janaka has approved of Sita falling of her own accord in love with Rama possessed of such virtues.

